प्रमेयत्वेनाभेदसाधनेऽनुपसंहार्य्येऽव्याप्तिः पक्षातिरिक्तसाध्यवतोऽप्रसिद्धेः साध्यवतः सपक्षत्वे विवक्षितेऽप्रसिद्धिः वृत्तिमतो धर्म्मस्य साध्यवद्विपक्षान्यतरवृत्तित्वनियमात् । नापि पक्षातिरिक्तसाध्यवन्मात्रवृत्त्यन्यत्वे सति पक्षातिरिक्तसाध्याभाववन्मात्रवृत्तिभिन्नत्वम् अनुपसंहार्य्यव्याप्तेः धूमादावतिव्याप्तेश्च तस्य पक्षे साध्यवति वृत्तेः नापि पक्षवृत्तित्वे विरुद्धान्यत्वे च सत्यनुमित्यौपयिकसम्बन्धशून्यत्वं व्यर्थविशेषणत्वात् एतेनानुगतं सर्व्वमेव लक्षणं प्रत्युक्तं प्रत्येकमेव दूषणत्वात् उद्भावने वादिनिवृत्तेश्च । उच्यते । उभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वं तत्त्वं तच्च साधारणत्वादि विरुद्धान्यपक्षवृत्तित्वे सत्यनुमितिविरोधिसम्बन्धाव्यावृत्तिर्व्वा तेनैव रूपेण ज्ञातस्य प्रतिबन्धकत्वात् परस्य तथैवोद्भावनाच्च लक्षणानुरोधेन प्रत्येकमेव हेत्वाभासत्वम् । यद्वा साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वं तेनासाधारणस्य साध्यतदभावोपस्थापकतया दूषकत्वपक्षे नाव्याप्तिः नचैवमाधिक्ये विभागव्याघातः स्वरूपसतानुगतरूपेण त्रयाणामेकीकृत्य महर्षिणा विभागकरणात् नचैवं साध्याभावज्ञापकत्वेन बाधप्रकरणसमयोस्तद्ज्ञापकतयान्येषामुपसंग्रहः कुतो न कृत इति वाच्यं स्वतन्त्रेच्छस्य नियोगपर्य्यनुयोगानर्हत्वात् । तत्र साधारणत्वं न साध्याभाववद्गामित्वं सर्व्वमनित्यं मेयत्वादित्यनुपसंहार्य्ये भूर्नित्या गन्धवत्त्वादित्यसाधारणे संयोगादिसाध्यकद्रव्यत्वे चातिव्याप्तेः अतएव न साध्यवत्तदन्यवृत्तित्वं नापि निश्चितसाध्यवत्तदन्यवृत्तित्वं साध्यवदन्यवृत्तित्वस्य दूषकत्वेन शेषवैयर्थ्यात् अतएवामुकेनायमनैकान्तिक इत्येवोद्भाव्यते ततएव वादिनिवृत्तेश्च नतु सपक्षगतत्वमपि । अनुपसंहार्य्याव्यावर्त्त्योऽन्यथा तस्यैतद्विशेषत्वापत्तिरिति चेत् त्यज तर्हि तमधिकं कृप्तेऽन्तर्भावात् । नापि सपक्षविपक्षगतत्वं व्यर्थविशेषणत्वात् । विरुद्धोव्यावर्त्त्य इति चेन्न विपक्षगामित्वस्यैव दूषकत्वे तस्याप्येतदन्तर्भावात् । अथ पक्षान्यसाध्यवत्तदन्यवृत्तित्वं साधारणत्वं

तेन सर्व्वमनित्यं मेयत्वादित्यनुपसंहार्य्ये नातिप्रसङ्गः नच व्यर्थविशेषणता घटोऽनित्यो घटाकाशोभयवृत्तित्वाश्रयत्वादित्यनुपसंहार्य्यस्य विरुद्धस्यानैकान्तिकभिन्नस्य व्यवच्छेद्यत्वादिति चेन्न दूषकताप्रयोजकरूपभेदमन्तरेण भेदस्यैवानुपपत्तेः । साध्यवद्वृत्तित्वे सति सर्व्वसाध्यवदन्यवृत्तित्वमित्यपि न व्यर्थविशेषणत्वात् एकव्यक्तिकसाध्ये तदभावाच्च एतेन हेत्वाभासान्तरव्यवच्छेदकं लक्षणान्तरेपि विशेषणं व्यर्थमिति । उच्यते विपक्षवृत्तित्वं साधारणत्वं तन्मात्रस्य दूषकत्वात् विरुद्धस्यापि तत्त्वाज्ञाने विपक्षवृत्तिताज्ञानदशायां साधारणत्वम् अन्यथा तस्य हेत्वाभासान्तरतापत्तेः उपाधेरसङ्कर एव । सर्व्वमनित्यं मेयत्वादित्यनुपसंहारी शब्दो नित्यः शब्दत्वात् भूर्नित्या गन्धवत्त्वादित्यसाधारणश्च वस्तुगत्या साध्याभाववद्वृत्तित्वेन साधारणोपि पक्षतादशायाम् उद्भावयितुं न शक्यत इत्युभयोर्भेदेनोपन्यासः ।

सर्व्वसपक्षविपक्षव्यावृत्तोऽसाधारणः ननु सपक्षत्वं न साध्यवन्मात्रत्वं विपक्षावृत्तेर्वृत्तिमतः साध्यवद्वृत्तित्वनियमात् नापि पक्षातिरिक्तसाध्यवत्त्वं शब्दोऽनित्यः शब्दत्वादित्यादेर्व्याप्तिधीदशायामप्यसाधारणतापत्तेः नचेष्टापत्तिः बाधप्रतिबोधौ विना व्याप्तिपक्षधर्म्मतया ज्ञातादनुमितिनियमादिति चेन्न सर्व्वनिश्चितसाध्यवद्विपक्षव्यावृत्तत्वस्य तत्त्वात् शब्दत्वानित्यत्वव्याप्तिग्रहे सति शब्दे साध्यनिश्चयान्नातिव्याप्तिः नच घटोऽयमेतत्त्वादित्यि सद्धेतावतिव्याप्तिः साध्यसन्देहदशायां तस्य हेत्वाभासत्वात् । यद्यपि भूर्नित्या गन्धवत्त्वादित्यादिर्वस्तुतः साधारणः शब्दो नित्यः शब्दत्वादितिविरुद्धः शब्दोऽनित्यः शब्दत्वादित्यादिसद्धेतुरेव व्याप्तज्ञानस्य पुरुषदोषत्वादित्युदाहरणाभावादसाधारणो न पृथक् तथापि पक्षतादशायां साध्यतदभावानिश्चयेन तस्य दोषत्वम् अन्यथा पक्षत्वभङ्गप्रसङ्गात् । अथ सर्व्वसपक्षव्यावृत्तिरेव दोषो न विपक्षव्यावृत्तिरपि तस्यानुगुणत्वात् प्रत्युत विपक्षव्यावृत्तत्वेन व्यतिरेकितया परसाध्यसाधकमेवोपन्यस्तं

स्यात् नच संशायकतया दोषत्वं तच्चोभयव्यावृत्तत्वज्ञानादिति वाच्यं व्याप्तिग्राहकं सहचारज्ञानं तदभावद्वारेण सपक्षव्यावृत्तिमात्रस्य दोषत्वात् किञ्च शब्दोऽनित्यः शब्दत्वादित्युक्ता निवृत्ते तावन्नेदमुद्भाव्यं न्यूनत्वेनैव वादिनिग्रहात् तदुद्भावने वादिनिवृत्तेश्च नच न्यूनत्वे तदुपजीव्यम् असाधारण्यव्यतिरेकेणापि तदुद्भावनात् नच व्यतिरेकि प्रयोगे तदुपन्यासः व्याप्तिपक्षतयोरप्रतिक्षेपेऽकिञ्चित्करत्वात् स्वार्थानुमाने च सर्व्वसपक्षव्यावृत्तिरेव दोषइत्युक्तमिति । उच्यते । शब्दत्वं साध्यवत स्तदभाववतश्च निवृत्तत्वेन ज्ञातमर्थाद्व्यतिरेकितया वा पक्षे साध्यं तदभावञ्च साधयेत् अविशेषात् अन्यथा पक्षवृत्तित्वानुपपत्तिरिति साध्यतदभावोव्यापकतया स्वार्थानुमानेऽसाधारणोदोषः सत्प्रतिपक्षे द्वौ हेतू तथा अत्र त्वेकएवेति तयोर्भेदः असाधारणेन व्यतिरेकिप्रयोगे परस्य सर्व्वसपक्षव्यावृत्तत्वमात्रमुद्भाव्यं साध्याभावोव्यापकत्वात् न विपक्षव्यावृत्तत्वमपि प्रतिकूलत्वात् व्यर्थत्वाच्च यद्वा विपक्षव्यावृत्ततया साध्यमिव सपक्षव्यावृत्ततया साध्याभावमपि साधयेदिति दृष्टान्ततया प्रतिबन्धितया च तदुद्भावनमपि लक्षणन्तु सर्व्वसपक्षव्यावृत्तत्वं न तु विपक्षव्यावृत्तत्वमपि व्यर्थविशेषणात् विरुद्धमप्यनेनोपाधिनाऽसाधारणमेव अन्यथैतदवगमे विरुद्धत्वाज्ञाने हेत्वाभासान्तरतापत्तेः। अनुपसंहार्य्यो नासत्सपक्षविपक्षः सिद्ध्यसिद्धिविरोधात् नापि केवलान्वयिधर्म्मावच्छिन्नपक्षकः केवलान्वयिसाध्यकस्य सद्धेतुत्वात् व्यतिरेकिसाध्यकस्य तु साध्यतदभाववद्गामित्वेन साधारणत्वात् अन्यथा संशयाहेतुत्वेनानैकान्तिकता न स्यात् सर्व्वं क्षणिकं सत्वादिति साध्याप्रसिद्ध्या व्याप्यत्वासिद्धमपार्थकं वा साध्यप्रसिद्धौ तु साधारणमेव नच पक्षान्यसाध्यवत्तदन्यवृत्तित्वं पक्षातिरिक्तसाध्याभाववद्वृत्तित्वं वा साधारणत्वं व्यर्थविशेषणत्वात् नच विरुद्धं विशेषणस्य व्यावृत्तमित्युक्तं नाप्यत्यन्ताभावप्रतियोगिसाध्यकत्वे सति केवलान्वयिधर्म्मावच्छिन्नपक्षकत्वं सर्व्वमभिधेयं मेयत्वादित्यत्र विप्रति

पक्षता पक्षतादशायां पक्षे साध्यानिश्चयेनानुपसंहारित्वव्यापकत्वात् । अथ पक्षातिरिक्ते व्याप्तिग्रहानुकूलाप्रतीतसहचारोऽनुपसंहार्य्यं यदि च पक्षे व्याप्तिग्रहः कथञ्चित्तदा शब्दोपदर्शितव्याप्तिकानुमानवद्भेदानुमानवच्च सद्धेतुरेवेति चेन्न तत्रैव सद्धेतावतिव्याप्तेः सर्व्वस्य पक्षत्वे पक्षातिरिक्ताप्रसिद्धेः असाधारणविरुद्धयो रतिव्याप्तेश्च दूषणतायां व्यर्थविशेषणत्वाच्च नच दूषकतानैकान्तिकत्वेन न प्रत्येकमिति वाच्यम् अर्थगत्या व्यर्थविशेषणत्वात् नापि विप्रतिपत्तिविषयमात्रवृत्तित्वं केवलान्वयिसाध्यके अव्याप्तेः सर्व्वस्य पक्षत्वे मात्रार्थाभावादिति । उच्यते व्याप्तिग्रहानुकूलैकधर्म्म्युपसंहाराभावो यत्र स हेत्वभिमतोऽनुपसंहारी सचान्वयेन व्यतिरेकेण वा सर्व्वस्य पक्षत्वे दृष्टान्ताभावात् घटोऽनित्यो घटाकाशोभयवृत्तित्वात्पृथक्त्वादित्यादौ साध्यसाधनसाहचर्य्याज्ञानात्तस्य विरुद्धत्वाज्ञानदशायामनुपसंहारित्वेनेष्टत्वात् केवलान्वयिधर्म्मावच्छिन्नपक्षको वा सर्व्वमभिधेयं प्रमेयत्वादितिसद्धेतौ न केवलान्वयी पक्षतावच्छेदको निश्चितसाध्यवद्वृत्तित्वात् विप्रतिपत्त्या साध्यानिश्चयदशायां पक्षत्वे तदनुपसंहार्य्येव व्यतिरेकिसाध्यके साध्याभाववद्वृत्तित्वाज्ञानदशायामिदं दूषणं तदवगमेऽपि साधारणसङ्कर एव एवं व्याप्यत्वासिद्धेर्ज्ञाने तदुद्भावने चायं व्यभिचारवदुपजीव्यत्वाददोषः घटाकाशोभयवृत्तित्वादिपृथक्त्वञ्च विरुद्धमेव एतेनानुपसंहारित्वप्रतिसन्धाने यदि व्याप्तिग्रहस्तदानुमितिरेव तदभावे व्याप्यत्वासिद्धिरेवेति निरस्तमुपजीव्यत्वादिति ।

विरुद्धो न साध्याभावव्याप्यः संयोगसाध्यके सद्धेतावतिव्याप्तेः नापि साध्यवन्निष्ठात्यन्ताभावप्रतियोगिव्याप्यत्वं तत्त्वम् इदं द्रव्यं गुणवत्त्वादित्यादौ संयोगादिव्याप्येऽतिव्याप्तेः किन्तु साध्यासमानाधिकरणसाध्याभावव्याप्यः साध्यवदन्योन्याभावव्याप्यो वा साध्याभावत्वं साध्यविरोधित्वमात्रं भावाभावसाधारणं तेनाभावे साध्ये ऽभावाभावस्य भावत्वेऽपि नाव्याप्तिः अभावाभावोऽभावप्रतियोगिनिरूप्यत्वेन

भावभिन्नएव वा नच भावत्वेनोपपत्तौ किमधिकेनेति वाच्यं बाधकं विना भावप्रतीतेः प्रमात्वात् अन्यथा अत्यन्ताभावान्योन्याभावयोरप्रसिद्धिः। अथ साध्यहेत्वोर्विरोधे पक्षे साध्यसत्त्वे हेत्वसिद्धिः हेतुसत्त्वे साध्याभावसिद्धौ बाधः। नच प्रमाणान्तरेण साध्याभावसिद्धौ बाधो न हेतुवैनैवेति वाच्यं विशेषणवैयर्थ्यादिति चेन्न हेतोः पक्षे साध्याभाववाधानुपस्थापनेपि प्रथमोपस्थितविरोधस्यैव उपजीव्यत्वेन दोषत्वात् ननु साध्याभावसम्बन्धो व्यभिचारएव दोषो नतु तन्नियतत्वमपि गौरवात् असाधकत्वे वर्य्यत्वाच्च नच साध्यासहचरितस्य साध्याभावसहचरितस्य वा गमकत्वभ्रमरूपायामशक्तौ विशेषोऽस्ति येनाशक्तिविशेषोन्नायकतया न व्यर्थविशेषणता नचानैकान्तिकसामान्यलक्षणे विपक्षगामित्वं न विशेषणम् असाधारणाद्यव्याप्तेः साधारणन्तु सपक्षवृत्तित्वमधिकमिति वाच्यं विपक्षगामित्वस्यैव साधारणत्वात् अधिकस्य व्यर्थत्वात् नच विरुद्धं व्यावर्त्त्यं विपक्षगामित्वेनाविव तद्गर्भावात्। अथानैकान्तिके विपक्षसम्बन्धेनैव दूषकतावीजम् असाधारणाद्यव्याप्तेः नच तत्रान्यदेव वीजं हेत्वाभासाधिक्यापत्तेरिति चेदस्तु तावदेवं तथापि साधारणे विरुद्धप्रवेशो वज्रलेपएव। अन्ये तु विरुद्धलक्षणे न व्यर्थत्वं साधारणस्य व्यवच्छेद्यत्वात् नाप्यसाधकतानुमितौ एतस्यापि व्याप्यत्वात् नीलधूमादौ च व्याप्तिरस्त्येवेति न स्वार्थानुमाने दोषः परस्य तु व्यर्थत्वमधिकं नच विरुद्धत्वादित्यत्र शब्दाधिक्यमिति तन्न अर्थाद्धि लिङ्गं नच व्यभिचारावारकविशेषणावच्छेदेनापि व्याप्तिः गौरवादिति वच्यते नचार्थानुगत्या व्यर्थत्वेपि विरुद्धत्वादित्यत्र उद्भावनाशक्यत्वम् आवश्यकतद्विवचने तदुद्भावनस्य शक्यत्वादिति हेतुद्वयोपन्यासे चाधिकं प्रथमेन द्वितीयस्य कृतकर्त्तव्यतायाः दूषिवीजत्वात् नच नीलधूमादित्यादौ विशिष्टकर्त्तव्यमन्येन कृतं धूमवत्त्वादित्यनेन कृतमिति चेन्न तथानुपन्यासात् अन्यथा

नौत्तानन्वयापत्तिः। अपरे तु साध्यानवगतसहचारः साध्याभावसह-चारी विरुद्धः अन्यथा पृथिव्यां मेयत्वेनेतरभेदानुमानं न विरुद्धं स्यात् साध्याभावाव्याप्यत्वात् नच तत्साधारणं सपक्षासत्त्वात् नच साध्यसहचाराज्ञानदशायां साधारणातिव्याप्तिः तदा तस्यापि विरुद्ध-त्वादिति तन्न विपक्षगामित्वमात्रं दूषकमित्युक्तत्वात् अतएवाव्यभि-चरितो व्यतिरेक्यनैकान्तिकएव नापि साध्याभावसाधकत्वं तत्प्रमा-पकत्वं वा साध्याभावसम्बन्धबुद्धिं विना तदज्ञानात् नापि साध्यवदन्य त्वव्याप्यत्वं व्याप्यत्वविवेचने व्यर्थविशेषणत्वात् नापि स्वव्यापकाभाव प्रतियोगिसाध्यकत्वं साध्याभावस्य हेतुव्यापकत्वप्रतीतौ हेतुसाध्या भावसम्बन्धभानस्यावश्यकत्वात्। उच्यते। साध्यव्यापकाभावप्रतियोगि त्वं विरुद्धत्वं नच प्रतियोगिनोरनन्वये भासमान एव तदभावयो र्व्याप्तिग्रहः भिन्नग्राहकसामग्रीकत्वात् अन्यथा व्यतिरेकिविलयापत्तेः यद्वा वृत्तिमतः साध्यवदवृत्तित्वं साध्यवद्वृत्तित्वानधिकरणत्वं साध्या समानाधिकरणधर्म्मत्वं साध्यवद्वृत्तित्वानधिकरणधर्म्मत्वं वा तत्त्वं नच व्यतिरेक्यतिव्याप्तिः तत्र साध्याप्रसिद्ध्या तथाज्ञानविरहात् असा धारणे च सङ्कर एव अनेनापि रूपेण तस्य दोषत्वात् नच साध्यव-द्वृत्तित्वे सति वृत्तिमत्त्वज्ञानात् साध्याभाववद्गामित्वज्ञानमावश्यकं तेन विना साध्यवदवृत्तित्वाज्ञानादिति वाच्यम् उपजीव्यत्वेन भिन्न त्वात् उपजीव्यत्वेपि साध्यवति न वर्त्तत इति ज्ञानं न स्वतो दूषकमिति चेन्न असहचारज्ञानस्य विरोधितया व्याप्तिग्रहप्रतिबन्धकत्वात् व्यभि चाराज्ञानविरोधित्वेन व्यभिचारज्ञानवत्। ननु विरुद्धस्य स्वार्थानु-मानदोषत्वेपि परार्थानुमानेऽपार्थकत्वं अयोग्यताज्ञानेन निश्चितान-न्वयादिति चेन्न अयोग्यताज्ञानस्य विरुद्धत्वज्ञानोपजीवकत्वेन तस्यैव दोषत्वात् बाधेऽप्येवं। सचायं विधिना साधने त्रिविधः साक्षात्साध्या भावव्याप्यत्वात् साध्यव्यापकाभावव्याप्यत्वात् साध्यव्यापकविरुद्धोपल-म्भात् यथा अधूमवानयं योग्यधूमवत्तया अनुपलभ्यमानत्वात् निरग्नि-

कत्वात् जलाश्रयत्वात् नच सर्व्वत्र साध्यव्यापकविरुद्धोपलम्भ इति न त्रैविध्यम् एतदज्ञानेपि साध्याभाववद्व्यापकाभावव्यापकाभावव्याप्यत्वे नापि ज्ञातस्य दोषत्वात् नच धूमवानयं तदभाववत्त्वादित्यधिकं स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं हि व्यापकत्वं तच्चाभेदेऽपि धूमवानयं धूमाभाववत्तयोपलभ्यमानत्वात् तद्वत्तयानुपलभ्यमानत्वादित्यनैकान्तिकमेव। निषेधसाधनेपि त्रिविधः प्रतियोग्युपलम्भात् साध्यव्यापकाभावोपलम्भात् साध्यव्यापकविरुद्धोपलम्भात् यथा निरग्निकोऽयमग्निवात् धूमाभावशून्यत्वात् धूमवत्त्वात् सर्व्वस्यायं विशेषणद्वारापि यथा कृष्णागुरुप्रभववह्निमानयं कटुकासुरभिपाण्डरधूमवत्त्वात्। अयञ्च बाधाश्रयासिद्धस्वरूपासिद्धासाधारणसंकीर्णः क्वचित्। सत्प्रतिपक्षत्वं न समानबलबोधितसाध्यविपर्य्ययलिङ्गत्वं परस्पर प्रतिबन्धेनोभयोरबोधकत्वात् बलञ्च न सपक्षसत्त्वादि व्यतिरेकिण्य भावात् नापि समानव्याप्तिपक्षधर्म्मतावत्त्वं विरोधेनैकत्र तद्भङ्ग नियमात् नापि व्याप्तिपक्षधर्म्मतया ज्ञातत्वं विरोधि व्याप्तिपक्षधर्म्मताविशिष्टज्ञानयोरन्यतरभ्रमत्वनियमेन नित्यत्वव्याप्तश्रावणत्वादिवैशिष्ट्याप्रसिद्धारोपयितुमशक्यत्वात्। नच साध्यव्याप्यस्य पक्षधर्म्मता पक्षधर्म्मस्य वा साध्यव्याप्यतारोप्येति वाच्यम् एकत्र तदुभयाभावादिशिष्टस्याप्रसिद्धा तद्वैशिष्ट्यस्यारोपासम्भवात् नाप्यनिर्द्धारित विशेषेण बाधितसाध्यविपर्य्ययत्वम् उभयोरबोधकत्वात् विशेषश्च न व्याप्तिभङ्गाभङ्गरूपः एकत्र तद्भङ्गनियमात्। उच्यते। साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्य्यलिङ्गत्वं तत्त्वं बलञ्च व्याप्तिपक्षधर्म्मते विरोधिबोधकान्यगमकतौपयिकरूपसम्पत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्य्यत्वं वा तत्त्वं स्थापनाया व्याप्तिपक्षधर्म्मत्व मुभयवादिसिद्धं वादिना तदभावानुपन्यासात् द्वितीयस्य तत्त्वमन्यतरासिद्धमिति प्रथमेन द्वितीयं बाधितमिति स्वार्थानुमानएवायं दोषइत्येके तन्न एकदा निरन्तरयोर्वोभयोर्व्याप्तिपक्षधर्म्मतया ज्ञातयोः

प्रतिपक्षत्वात् युगपदुपस्थितेः कारणवशेन स्वपरसाधारणत्वात्। अथ वस्तुनोऽव्याप्यत्मकत्वेन व्याप्तिपक्षधर्म्मताभङ्ग एकत्रावश्यक इति सएव दोषः। नच तयोर्विरोधभङ्गेऽप्युपपत्ते र्न व्याप्त्यादिभङ्गनियमइति वाच्यम् अविरोधेप्यनुमित्यविरोधः विरोधे तु व्याप्तिभङ्गनियमादिति चेन्न प्रतिरुद्धत्वज्ञानानन्तरं व्याप्त्यादिभङ्गज्ञानमित्युपजीव्यत्वेन व्यभिचारवदस्यापि दोषत्वात्। ननु साध्यतदभावयोरिव तद्व्याप्यत्वेनावधारितयोर्विरोधादेकत्र न निश्चयः किन्तु संशयः निश्चये वान्यतरव्याप्तिसंशय इति व्याप्यत्वासिद्धिरिति चेन्न उभयोरेकत्र निश्चयानन्तरमन्यतरव्याप्तिसंशयइत्युपजीव्यत्वेनास्य भिन्नत्वात् दूषकतावीजं समबलविरोधिसामग्रीप्रतिबन्धेन निर्णयाजनकत्वं नतु व्याप्तिपक्षधर्म्मताविरहएव सद्धेतावपि सत्प्रतिपक्षत्वात् एकत्र व्याप्तिभङ्गज्ञानद्वारा वास्य दूषकत्वं चक्षुरादेश्च नानुमानेन प्रतिरोधः तदुपस्थितावपि फलदर्शनेन तस्याधिकबलत्वात्। नन्वेवं वादिवाक्यमात्रस्य प्रतिरोधकत्वेनानुमानमात्रोच्छेदः नच विरोधिवाक्यस्य न्यूनबलत्वे लक्षणायोगः समानबलत्वे प्रतिरोधएव अधिकबलत्वे नरशिरः शौचानुमानवत्तेन बाधएवेति वाच्यम् अगृह्यमाणविशेषदशायां प्रतिवादिवाक्येन सर्व्वानुमानप्रतिरोधापत्तेः अनुमानात् पूर्व्वं पश्चाद्वा अनुमानान्तरेण तस्य न्यूनाधिकबलत्वानिरूपणात् निरूपणे वानुमानवैयर्थ्यापत्तेः। मैवम्। विरोधिवाक्यमात्रस्य समबलत्वाभावात् उक्तं हि व्याप्तिपक्षधर्म्मते बलमिति प्रत्यक्षादेर्लिङ्गभावेनैवानुमानप्रतिरोधः कथायां तदुपन्यासानर्हत्वात्। यत्तु विरोधिव्याप्यद्वयस्यासाधारणत्वात् संशयजनकत्वं दूषकतावीजमिति तन्न एकैकं हि सत्प्रतिपक्षं नतु विशिष्टं एकैकश्च न संशायकमनुमितिप्रामाण्ययाद्दृका प्रवृत्ति दूषकतावीजमित्यन्ये तन्न परस्परप्रतिबन्धेनानुमितेरेवानुत्पत्तेः। रत्नकोषकारस्तु सत्प्रतिपक्षाभ्यां प्रत्येकं स्वसाध्यानुमितिः संशयरूपा जन्यते विरुद्धोभयज्ञानसामग्र्याः संशयजनकत्वात् संशय

द्वारा अस्य दूषकत्वं नच संशयरूपा नानुमितिः बाधस्येव विरोध्युपस्थितेरनुमितिसामग्रीविघटकत्वेनावधारणात्वात् अन्यथा बाधेऽप्यनुमित्यापत्तेरिति वाच्यम् अधिकबलतया बाधेन प्रतिबन्धात् तुल्यबलादनुमितिः स्यादेव सामग्रीसत्त्वात् साध्याभावबोधस्य च तत्र प्रतिबन्धकत्वं नतु तद्बोधकस्य चक्षुरादेः प्रत्येकं निर्णायकत्वेनावधारितात् कथं संशय इति चेन्न प्रत्येकाद्धि ज्ञानमुत्पद्यमानमर्थात् संशयो नतु प्रत्येकं संशयजनकत्वमिति मेने तन्न साध्यतदभावयोर्विरोधेन यथैकज्ञानस्यापरधीप्रतिबन्धकत्वं तथा साध्याभावव्याप्यवत्त्वस्यापि साध्यविरोधित्वात्तद्बुद्धेरपि साध्यधीप्रतिबन्धकत्वात् विरोधिज्ञानत्वस्य प्रतिबन्धकत्वे तन्त्रत्वात् निबन्धेतु हेत्वाभासानां फलद्वारकं लक्षणमनैकान्तिकानामन्वयाद्व्यतिरेकाद्वा कोट्युपस्थापकतया संशयः फलं विरुद्धस्य साध्यविपरीतज्ञानमपक्षधर्म्मोऽपि विरुद्धोऽन्यत्र विपरीतज्ञानसमर्थएव बाधेऽन्यतोविपरीतज्ञानं नतु हेत्वभिमतादेः नित्यो घटः कार्य्यत्वादिति विरुद्धे बाधसङ्करेऽप्यदोषः असिद्धे अनैकान्तिकादिचतुष्टयज्ञानान्यलिङ्गत्वज्ञानं बाधे पक्षधर्म्महेतौ व्याप्तिबाधः प्रकरणसमे तु न व्याप्तिपक्षधर्म्मताबाधः फलं नाप्यलिङ्गत्वज्ञानं व्याप्त्यादिबुद्धिसत्त्वात् नापि विपरीतबुद्धिः स्वसाध्यविपरीतेनानियमात् नापि संशयः प्रत्येकं कोटिद्वयानुपनयात् किन्तु कथमत्र तत्त्व निर्णयइति जिज्ञासाफलं तथाच प्रकृतसाध्यहेत्वोः किं तत्वमिति जिज्ञासाजनिका व्याप्तिपक्षधर्म्मतोपस्थितिः प्रकरणसमः नह्यनुपस्थिते प्रतिपक्षे एकस्माज्जिज्ञासा किन्तु निर्णयएव। अथ ज्ञातुमिच्छा जिज्ञासा साच ज्ञानेष्टसाधनताज्ञानात् संशयाद्वेति कथं तेन विना विरोधिसाधनज्ञानमात्रादिति चेन्न असति प्रतिपक्षे न जिज्ञासा सति सेत्यन्वयव्यतिरेकाभ्यां प्रकरणसमस्यापि जिज्ञासाकारणत्वात् नचानैकान्तिकातिव्याप्तिः तत्र हि संशयद्वारा साध्ये जिज्ञासा अत्र तु हेतुसमीचीनत्वइति। ननु परामर्शयोरेकदानुत्पादात् कथं प्रति

रोधः क्रमोत्पन्नयोरेकदासत्त्वादिति चेन्न एकानन्तरमपरहेतुव्याप्ति पक्षधर्म्मताज्ञानाभ्यामग्रिमव्याप्तिविशिष्टज्ञानोत्पत्तिकाले पूर्व्वपरामर्शनाशात् नचोभयहेतुव्याप्तिपक्षधर्म्मताज्ञानानां परस्पराप्रतिबन्धात् परामर्शोत्पाद इति वाच्यं व्याप्त्यादिज्ञानचतुष्टययौगपद्याभावात् । यत्तु व्याप्तिद्वयसंस्कारोद्बोधकहेतुद्वयज्ञानयोः परस्परप्रतिबन्धात् नोभयव्याप्तिस्मृतिरिति दूषकतावीजं तन्न व्याप्तिस्मृतिं विना सत्प्रतिपक्षाभावात् वादिभ्यां व्याप्त्युद्भावनाच्चेति । मैवम् । हेतुद्वयसमूहालम्बनाद्युगपदुभयव्याप्तिस्मृतावुभयपरामर्शरूपं ज्ञानमुत्पद्यते अत एकदा विरुद्धकार्य्यद्वयकारणान्नैकमपि कार्य्यमुत्पद्यते तादृशपरामर्शश्च स्वार्थानुमाने प्रत्यक्षादितः परस्य तु वाद्युपन्यस्तन्यायोत्थापित प्रमाणात् । अस्य केवलान्वयिन्यपि सम्भवः घटोऽभिधेयः प्रमेयत्वादित्यत्राभिधेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगि जात्यन्यत्वे सति घट मात्रवृत्त्यन्यधर्म्मत्वात् घटान्योन्याभाववत् पटरूपवच्च घटनिष्ठात्यन्ताभावोऽभिधेयत्वप्रतियोगिकः घटवृत्तिनित्याभावत्वात् घटनिष्ठान्योन्याभाववदिति विशेषादर्शनदशायां नच पक्षैक्यमपि तन्त्रं विरोधस्यैव दूषकत्वेऽधिकस्य व्यर्थत्वात् ।

असिद्धिस्तु न व्याप्तिपक्षधर्म्मताविरहः प्रत्येकमननुगमात् । अथ प्रत्येकाभावानुगतो व्याप्तिपक्षधर्म्मताविशिष्टाभावोऽसिद्धिः यद्यपि विशिष्टस्यान्यत्वे प्रत्येकाभावाव्याप्तिरपसिद्धान्तश्च अनन्यत्वे प्रत्येकाभावएव स इत्यननुगम स्तथापि विशेषणावच्छिन्नप्रतियोगिको विशेष्याभावो विशेषणविशेष्यसम्बन्धाभावो वा विशिष्टाभावोऽनुगत इति चेन्न विशिष्टाभावाज्ञानेपि व्याप्त्यादिप्रत्येकाभावज्ञाने उद्भावने चानुमितिप्रतिबन्धो वादिनिवृत्तिश्चेति तत्प्रत्येकाभावाव्याप्तिः अन्यथा तेषां हेत्वाभासान्तरतापत्तेः नच विशिष्टाभावधीद्वारा प्रत्येकाभावो दोषो लभ्यतइति वाच्यं प्रत्येकाभावस्य स्वतएव दोषत्वसम्भवात् । वस्तुतो विशिष्टाभावो दोषएव न प्रत्येकस्य समर्थत्वे तेनैवान्यथासिद्धे

व्यर्थविशेषणत्वाच्च प्रत्येकाभावमज्ञात्वा न विशिष्टाभावज्ञानमित्युपजीव्यत्वादिशिष्टाभावानुद्भावनेऽपि प्रत्येकोद्भावने वादिनिवृत्तेः अतएव व्याप्तिपक्षधर्म्मताविशिष्टज्ञानविषयाभावत्वं प्रत्येकाभावानुगतमसिद्धत्वं व्यभिचारादावसिद्धत्वेऽप्युपजीव्यत्वेन प्राथम्यात्तदुद्भावने वादिनिवृत्तेश्च स स्वतएव दूषकः तत्र व्याप्त्यसिद्ध्यर्थमुपाधौ तूद्भाविते विप्रतिपद्यतेऽपि तस्य दुर्ग्रहत्वात् व्यभिचारेणैव तदुन्नयाच्च यदि च व्यभिचारादिकमज्ञात्वाप्यसिद्धिबुद्धिः तथाप्युपधेयसङ्करेऽप्युपाधेरसङ्कर एवेति निरस्तं व्यर्थविशेषणत्वादेव एतेन व्याप्तिपक्षधर्म्मतान्यतराभावोऽसिद्धिरिति प्रत्युक्तम् अन्यतरत्वाज्ञानेऽपि प्रत्येकाभावस्य दोषत्वात् व्यर्थविशेषणत्वाच्च । यत्तु व्याप्तिपक्षधर्म्मताप्रमितिविरह आश्रयासिद्ध्याद्यनुगतोऽसिद्धिः तत्प्रमितिसत्त्वे तत्रानुमित्यापत्तेरिति तदपि व्यर्थविशेषणत्वात् तदज्ञानेऽपि प्रत्येकज्ञानस्य दोषत्वाच्च निरस्तं वस्तुतस्तु प्रकृतहेतुव्याप्तिपक्षधर्म्मतावैशिष्ट्यस्य तत्प्रमितेश्चाप्रसिद्ध्या तदभावो ज्ञातुमुद्भावयितुञ्चाशक्यएव । यत्किञ्चिद्व्याप्तिपक्षधर्म्मताविशिष्टप्रमितिविरहः सद्धेतुसाधारणः स्वप्रमितिविरहो यत्किञ्चित्प्रमितिविरहो वा सद्धेतावपि सकलतत्प्रमितिविरहो दुर्निरूपः व्याप्त्याद्यभावादेव तद्ग्रहे सएव दोष उपजीव्यत्वात् यदि च प्रमितिविरहः स्वरूपसन्नेव दोषः कारणाभावत्वात् तदा व्याप्त्यादिभ्रमादनुमितिर्न स्यात् न स्याच्च हेत्वाभासता ज्ञानगर्भतल्लक्षणाभावात् एतेन व्याप्तिप्रमितिपक्षधर्म्मताप्रमितिविरहान्यतरत्वमसिद्धिः अन्यतरत्वञ्च तदन्यान्यत्वं तेनोभयविरहेऽपि नाव्याप्तिरिति निरस्तं व्यर्थविशेषणत्वादेव । स्यादेतत् व्याप्तिपक्षधर्म्मताभ्यां निश्चयोऽसिद्धिः अतएवाव्याप्तेऽपक्षधर्म्मे च तदारोपरूपासिद्धिरित्यनुमितिः ननु व्याप्तपक्षधर्म्मादपि तदनिश्चये नचैवं हेतोरप्याभासत्वं तदाभासस्यापि हेतुत्वं स्यात् दशाविशेषहृष्टत्वात् सेयं स्वरूपसती दूषिका कारणाभावत्वात नच व्याप्त्यादिप्रत्येकनिश्चयाभावएव दूषक आवश्यकत्वा

दिति वाच्यं विशिष्टनिश्चयस्य हेतुत्वे तदभावस्य कार्य्यानुत्पादकत्वा-
दिति । मैवम् । एवं सव्यभिचारादेरप्यत्रैवान्तर्भावप्रसङ्गात् असिद्धेः
स्वरूपसतएव दोषत्वे स्वज्ञानार्थं व्यभिचाराद्यनुद्भावनात् यदि च त-
स्मात् सिद्धिर्नोपपद्यतइति तस्योपजीव्यत्वं तदाश्रयासिद्ध्यादिज्ञानात्
सिद्धिर्नेति सएव पृथग्दोषः स्यात् असिद्धिर्ज्ञातापरस्योद्भाव्येति
स्वज्ञानार्थमुद्भाविता सिद्धिनिर्व्वाहार्थमाश्रयासिद्ध्यादिज्ञानमावश्यकं
कथञ्च हेतुतदाभासविवेकः सिद्धौ द्वयोरपि हेतुत्वात् असिद्धौ तदा
भासत्वात् व्यभिचारादेः सद्धेतौ सिद्धिमखण्डयतश्च हेत्वाभासत्वा
भावात् । अथ सुषुप्तौ जागरेऽपि व्याप्तिपक्षधर्म्मतासत्त्वे तदनिश्चये
ऽनुमित्यनुत्पादो हेत्वाभासप्रयोज्यः सव्यभिचारादौ तथावधारणा-
दित्यसिद्धित्वज्ञानादपि हेत्वाभासः नचैवं हेत्वाभासाधिक्यं क्रमान्त-
र्भावो वा तेन रूपेण व्याप्त्यसिद्ध्यादेरेव संग्रहादिति चेन्न एवं स-
व्यभिचारादिरप्यसिद्धिः स्यादित्युक्तत्वात् उपजीवनाद्भेदे त्वाश्रया
सिद्ध्यादिरपि पृथक् स्यात् सुषुप्त्यादावनुमित्यभावः कारणाभावात्
कार्य्यानुत्पादो हि न प्रतिबन्धकमात्रात् किन्तु कारणाभावादपि
असत्यपि प्रतिबन्धके वक्त्रभावेन शाब्दानुत्पत्तेः अथानुमित्यनुत्पादो
हेत्वाभासप्रयुक्तएवेति चेत् तर्ह्यनुमितौ मनोयोगादिरपि न हेतुः
हेत्वाभासादेरनुमित्यनुत्पादे तद्व्यतिरेकेणानुमित्यनुत्पादाभावात् सिद्धे
रेव तद्धेतुत्वे चरमकारणमेव हेतुः स्यात् अन्ये तु गमकतौपयिक
प्रतिद्वन्द्विव्याप्तिपक्षधर्म्मताविरहतन्नियतयोरन्यतरत्वं हेत्वाभासत्वं
तत्राधिकसमानबलौ बाधप्रतिरोधौ प्रतिद्वन्द्विनौ व्याप्तिपक्षधर्म्मता
विरहश्चासिद्धिः तन्नियतौ च सव्यभिचारविरुद्धौ नचानयोरप्य-
सिद्धान्तर्भावः व्याप्तिविरहनियतत्वेन ज्ञातयोः स्वातन्त्र्येणैव दूषक-
त्वात् भ्रमे विशेषदर्शनस्यैवेति तन्न त्वत्रापि व्याप्तिपक्षधर्म्मताविरह
एवासिद्धिः पर्य्यवस्यति तत्र चोक्तमेवान्यतरत्वञ्च न लक्षणं व्यर्थ
विशेषणत्वात् हेत्वाभासान्तरवहिर्भूतस्य व्याप्तिपक्षधर्म्मतानिश्चय

विरोधिनो रूपस्य विवक्षितत्वात् तथा आश्रयासिद्ध्यादिकमेवेति । उच्यते आश्रयासिद्धिः स्वरूपासिद्धिः व्याप्यत्वासिद्धिः प्रत्येकमेव दोषः प्रत्येकस्य ज्ञानादुद्भावनाच्चानुमितिप्रतिबन्धात् नतु विशिष्टाभावः परामर्शविषयाभावो वा व्यर्थविशेषणत्वात् तस्य ज्ञानमुद्भावनं विना प्यनुमितिप्रतिबन्धात् अनुभवसिद्धे हि लक्षणं नतु लक्षणानुरोधेनानुभवकल्पना परामर्शविषयाभावत्वेनानुगतेन त्रयाणामसिद्धत्वेन संग्रहो महर्षिणा कृत इति न विभागविरोधो हेत्वाभासाधिक्यं वा अतएव ये व्याप्तिविरहपक्षधर्म्मताविरहरूपा तेऽसिद्धिभेद मध्यमध्यासते तदन्ये च यथायथं व्यभिचारादय इति सिद्धान्त प्रवादोपि नचैवं साक्षात्प्रतिबन्धकत्वेन बाधप्रतिरोधयोर्व्याप्तिविरह लिङ्गत्वेन सव्यभिचारविरुद्धयोरपि संग्रहे विभागव्याघातः स्वतन्त्राभिप्रायस्य निषेद्धुमशक्यत्वात् अन्यथा शास्त्रे परिभाषोच्छेदापत्तेः सव्यभिचारादेरप्येवं रूपसत्त्वेऽप्युपजीव्यत्वेन पृथक्त्वम् उपधेयसङ्करेऽप्युपाधेरसङ्करात् । नन्वाश्रयाप्रसिद्ध्या कथमाश्रयासिद्धिरुद्भाव्या नच शशीयतया गवि शृङ्गनिषेधवत् व्योमकमलमिति वाच्यं शश शृङ्गनिषेधो न गवीत्युक्तत्वादिति चेत् व्योमकमलमिति निश्चितान्वयत्वेनापार्थकम् आश्रयविशेषणासिद्ध्या चाश्रयासिद्धिरसङ्कीर्णा । व्याप्तिविरहस्य व्यर्थविशेषणादौ तदज्ञानेकामसिद्धिं दुष्परिहरतो द्वितीयापत्तिरिति उपाधिस्तु न व्याप्तिविरहः वह्निव्यापकधूमाव्यापक धर्म्मस्याप्रसिद्ध्या धूमे तद्विरहासिद्धेः किन्तु यावत्स्वव्यभिचारिव्यभिचारि साध्यसामानाधिकरण्यमनौपाधिकत्वं व्याप्तिः साध्यव्यापकसाध नाव्यापकधर्म्मान्तरं न तद्विरहः अपि तु तन्नियमतः नचैवमुपजीव्यत्वेन उपाधिर्हेत्वाभासान्तरम् उपजीव्यत्वेपि स्वतोदूषकत्वेन तदर्थं पर सुखवीक्षकत्वात् नहि साध्याव्यापकत्वमनुमितिविरोधि किन्तु व्यभिचारोन्नयनेन स्वव्यतिरेकेण सत्प्रतिपक्षतया वा तदाह उपाधावव

व्यभिचार उपाधेरेव व्यभिचारशङ्केति अप्रयोजकान्यथासिद्धौ सोपाधी नासिद्धौ प्रतिकूलतर्कानुकूलतर्काभावावुपजीव्यत्वे सति स्वतो-दूषकावपि न हेत्वाभासौ स्वरूपसतोरेव प्रतिबन्धकत्वादित्युक्तम् ।

बाधो न साध्याभाववत्पक्षकत्वं पक्षवृत्त्यभावप्रतियोगिसाध्यकत्वं वा पक्षे साध्याभावज्ञानमात्रस्य प्रमात्वज्ञानं विना अधिकबलत्वाज्ञानेन बाधाभावादिति वक्ष्यते अतएव साध्याभाववत्पक्षवृत्तित्वमपि न असिद्धिसङ्कीर्णबाधाव्याप्तेश्च किन्तु साध्याभाववत्त्वप्रमाविषयपक्षकत्वं प्रमितसाध्याभाववत्पक्षकत्वं पक्षनिष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्यकत्वं वेति विवक्षितविवेकेन साध्याभावप्रमैव दोषः सा च प्रमात्वेन ज्ञाता न स्वरूपसती हेत्वाभासत्वात् प्रमात्वज्ञानं विनाऽधिकबलत्वाभावेनादोषत्वात् अप्रमायामपि प्रमात्वज्ञानेऽनुमितिप्रतिबन्धाच्च । अथ साध्याभाववति पक्षे हेतोः सत्त्वज्ञाने व्यभिचारः तदज्ञानेऽसिद्धिः संशययोग्यत्वाभावेन पक्षत्वाभावादाश्रयासिद्धिश्च नच पक्षभिन्ने व्यभिचारो दोषः व्यर्थविशेषणत्वात् सर्व्वोपसंहारप्रवृत्तव्याप्तेः साध्याभाववति साधनमित्यवगमादेव भङ्गात् नचैवं सन्दिग्धसाध्यदृष्टान्ते सन्दिग्धानैकान्तिकवत्पक्षे व्यभिचारसंशयादनुमानमात्रोच्छेद इति पक्षे साध्यसंशयोऽनुमानाङ्गमिति न्यायस्य पक्षधर्म्मताज्ञानादनुमित्युत्पादेन संशयनिवृत्तेः अन्यथा विशेषदर्शनस्य संशयविरोधिता भज्येत नच पक्षे साध्याभावं प्रतीत्य व्यभिचारज्ञानमित्युपजीव्यत्वाद्बाधः पृथक् पक्षे साध्याभावप्रतीतिरेव हि साध्याभावहेत्वोः सम्बन्धोल्लेखनीत्येकवित्तिवेद्यत्वेन नोपजीव्यत्वम् अन्यथा बाधदशायां पक्षे हेतोरज्ञानादसिद्धिरेव न चोद्भावितव्यभिचारनिर्व्वाहाय बाधोद्भावनमावश्यकमित्युपजीव्यत्वं व्यभिचारोद्भावने परं कथन्ताऽनावश्यकत्वात् तत्त्वे वा तन्निर्व्वाह्यमेव दूषणं क्लृप्तत्वात् वह्निरूष्णः कृतक इत्युद्भावनादह्निरूष्ण इत्युद्भावने लाघवमिति बाधः पृथगिति कश्चित् तन्न पक्षे साध्याभावप्रमा स्वार्थानुमाने यदि न दोषः

तदा परं प्रत्यपि न स्यादविशेषादिति तदुद्भावनस्य दूरनिरस्तत्वात्। अथोपनीतकाञ्चनमयत्वविशिष्टवह्न्यनुमितेः सल्लिङ्गजन्यायाः आभासत्वं हेत्वाभासाधीनं न चानुमितेः पूर्व्वं तत्र व्यभिचारज्ञानं विशिष्टस्याप्रसिद्ध्या तदभावस्याज्ञानात् अतएव पक्षासिद्धिरपि न अतः काञ्चनमयवह्न्यभावरूपाद्बाधादनुमानाभासत्वं व्यधिकरणप्रकारावच्छिन्नप्रतियोगिकस्याभावइति चेन्न वस्तुतोव्यभिचारस्यापि तत्र सत्त्वात् ज्ञानञ्च तस्य बाधस्येवानुमित्यनन्तरमेव किञ्च वह्नौ काञ्चनमयत्वस्यानुमितावेव भाने काञ्चनमयवह्निमानित्यनुमितिर्न स्यात् विशिष्टस्य पूर्व्वमज्ञानाद्वह्नौ काञ्चनमयत्वांशेऽनुमितेराभासत्वं वह्नौ लिङ्गस्यासिद्धेः व्यभिचाराच्च नचानुमितेर्विषयाभावाधीनमप्रमात्वं किन्तु हेत्वाभासाधीनं यस्य हि ज्ञानमनुमितिप्रतिबन्धकं स हेत्वाभासः नच साध्याभावोऽज्ञातः प्रतिबन्धकइति न स हेत्वाभासः। वस्तुतस्तु उपनीतस्यानुमितौ भाने मानाभावः प्रत्यभिज्ञादौ च प्रतीतिबलेनैव तत्कल्पनम् अन्यथा पूर्व्वोपस्थितसकलपदार्थभाने यथार्थानुमित्युच्छेदः। अपिचैवं परार्थानुमानेष्वुपनीतभाने बाधितोऽर्थ उपनीतोऽयं मम भातइत्युद्भावनादेव विजयेत वादी उद्देश्यानुमितेरप्रतिबन्धान्न तत्र बाधादोषइति चेत् तुल्यं स्वार्थानुमानेपि अतएव यत्र सामान्यतोदृष्टानुमानमेवेतरबाधसहायं विशेषानुमापकं तत्र बाधकानामाभासत्वे तत्पृष्ठत्वं सामान्यतोदृष्टस्याप्याभासत्वमिति बाधस्या साङ्कर्य्यात्। नच यदि विशेषविप्रतिपत्तौ सामान्यस्य प्रतिज्ञा तदार्थान्तरं सामान्यविप्रतिपत्तौ तु नेतरत्र बाधकावेति वाच्यं स्वार्थानुमानएवैवं बाधासङ्करस्योक्तत्वादित्यपास्तम् अनुमित्यप्रतिबन्धेन तत्र बाधस्यादोषत्वात्। ननु पक्षे साध्याभावग्रहवत्साध्याभावव्याप्यग्रहोऽपि दूषकोविरोधित्वाविशेषात् तथाच साध्याभावसम्बन्धोव्यभिचारः साध्याभावव्याप्यसामानाधिकरण्यं बाधः साध्याभावव्याप्यञ्च वह्नित्वादिकमेवेति चेत् न पक्षे हि साध्याभावे ज्ञायमाने ज्ञाते वा यदि

साध्याभावव्याप्यसामानाधिकरण्यबुद्धिस्तदा व्यभिचार एव । अथ पक्षे साध्याभावबुद्धिं विनैव सा तर्हि हेतुसाध्याभावव्याप्ययोरगृह्यमाणविशेषयोः सत्प्रतिपक्षत्वम् । अथ तुल्यबलेन सत्प्रतिपक्षोऽधिकबलेन बाध इति चेन्न गमकतौपयिकरूपसाकल्यं हि बलं तच्च द्वयोर्ज्ञातमिति कथं न सत्प्रतिपक्षत्वं गमकता वहिर्भूतञ्च न बलम् । अथ साध्याभावव्याप्यबुद्धेरनन्यथासिद्धत्वं बलं तदा ततः साधनवति पक्षे साध्याभावानुमितावनैकान्तिकत्वमेव पक्षे साध्याभावग्रहवदिति यदुक्तं तदप्यसिद्धं तस्य दोषत्वानभ्युपगमात् अन्यथा हेत्वाभासान्तरतापत्तिः । अथ हेतुतः साध्यसिद्धिसम्भावनायां व्यभिचारासिद्धिः बाधेन हेतोरसाधकत्वे सिद्धे व्यभिचारसिद्धिरित्युपजीव्यत्वाद्बाधः पृथक् अन्यथा हेतोरसाधकत्वे सिद्धे साध्यसिद्धिसम्भावनाविरहाद्व्यभिचारबुद्धिः तस्याञ्च सत्यां हेतोरसाधकत्वधीरित्यन्योन्याश्रय इति चेन्न साध्यसिद्ध्युन्मुखहेतुज्ञानस्य प्रमितसाध्याभावसहचरितहेतुविषयत्वेन व्यभिचारज्ञानतया दूषकत्वात् तथापि व्यभिचारे साध्याभावप्रमा तन्त्रं तां विना तदभावादिति सैव दोष इति चेत् सत्यं किन्तु साध्याभावप्रमाव्यभिचारज्ञानत्वेन दूषिका क्लृप्तत्वात् न स्वतन्त्रा अतएव पक्षे साध्याभावज्ञानत्वेन प्रतिबन्धकत्वं न तु साध्याभावसमानाधिकरणसाधनज्ञानत्वेनेति प्रत्युक्तं तस्य लघुत्वेऽप्यक्लृप्तत्वात् । अप्रत्यक्षादौ प्रमामात्रं प्रति स्वातन्त्र्येण बाधो दोषत्वेन क्लृप्त इत्यनुमितावपि स एव दोष इति चेन्न अन्यत्र तथा दूषकत्वाकल्पनात् । उच्यते । पक्षे साध्याभावनिश्चय● साध्याभावज्ञानप्रमात्वनिश्चयात् ज्ञानमात्रादर्थनिश्चये प्रामाण्यग्रहवैयर्थ्यं भ्रमत्वेन ज्ञातादर्थनिश्चयप्रसङ्गश्च तथा चोपजीव्यत्वेनाधिकबलत्वेन वा पक्षे साध्याभावज्ञानस्य प्रमात्वनिश्चये सव्यभिचारो नान्यथा उभयथापि साध्याभावनिश्चयाधीनव्यभिचारज्ञानात् पूर्वं ज्ञातं साध्याभावज्ञानप्रमात्वमेव दोष उपजीव्यत्वात् । यदि च पक्षे साध्याभावज्ञानस्य प्रमात्वनिश्चयो नानुमितिविरोधी

तदा व्याप्तिपक्षधर्म्मतया हेतुज्ञानं विशेषदर्शनत्वेन पक्षे साध्याभाव ज्ञानं परिभूय साध्यं साधयेदेव पर्व्वते धूमइव वह्निं नच साध्याभाव बुद्धिरेवाग्टह्यमाणविशेषा सत्प्रतिपक्षवत् प्रतिबन्धिकेति वाच्यं रङ्गते न इदं रजतमिति ज्ञानेपि विशेषदर्शनेन रजतत्वस्य शङ्खे पीतत्वज्ञाने शुक्लत्वस्य चानुमानात् वादिवाक्येन पक्षे साध्याभावज्ञानादनुमानो-च्छेदप्रसङ्गाच्च। अथ पक्षे साध्याभावप्रमैव साध्याभावहेतुविधया व्यभिचारज्ञानत्वेन दोषो नतु तस्याः प्रमात्वज्ञानमपीति चेत् तर्हि प्रमायाः अप्रमात्वज्ञाने भ्रान्तानुमितिर्न स्यात् न स्याच्च पक्षे साध्या भावज्ञानप्रमात्वभ्रमादनुमितिप्रतिबन्धः। ननूपजीव्यत्वेप्यत्र साध्या भावप्रमेति ज्ञानं न स्वतोदूषकं क्लृप्तत्वात् पक्षे साध्याभावनिश्चयं कुर्व्वत् व्यभिचारज्ञानद्वारेति चेन्न अत्र साध्याभावप्रमेति ज्ञाना-न्नियमतः साध्यज्ञानानुदयात् तस्यैव प्रतिबन्धकत्वात् शङ्खादौ तथा दर्शनात् साध्याभावप्रमाविषयवृत्तित्वस्य हेतुवृत्तित्वादसाधकत्वेन साध्याभावप्रमाया हेत्वाभासत्वं साधारण्येऽपि ज्ञायमानं सत् यदनु-मितिं प्रतिवध्नाति तस्यैव हेत्वाभसत्वं नच साध्याभावप्रमा नेति नि-श्चयदशायां पक्षे साध्याभावहेतुज्ञानाद्व्यभिचारइति वाच्यं प्रमात्व ज्ञानस्य साध्याभावनिश्चयहेतुत्वेन तद्दशायां तदभावात्। पक्षधर्म्म-तावलेन प्रसिद्धं बाधान्न सिध्यतीति बाधः पृथक्। प्रसिद्धाभाव वति पक्षे व्यभिचारान्न तत्सिद्धिरिति चेत् तर्ह्यसत्प्रसिद्धाभाववति स पक्षे व्यभिचारात् तमपि न साधयेत् तदज्ञाबात्तत्साधनेऽनुमितिरप्रमा स्यात्। अथ पक्षवृत्तेरन्यएव धूमादिः सपक्षे तर्हि गोत्वपृथिवीत्व द्रव्यत्वादेरप्रसिद्धसाध्यानुमानं न स्यात् सास्नादिप्रत्येकव्यभिचारात् यदि च साध्यत्वावच्छेदकसास्नात्वादिसामान्यावच्छिन्नप्रतियोगिका भाववति न गोत्वादिकमिति न व्यभिचारः तर्हि धूमेप्येवं व्यभिचारा भावात् साध्यतावच्छेदकेन प्रकारेणाप्रसिद्धमिव प्रसिद्धमपि साध्यं धमगोत्वादिकं साधयेत् यदि बाधोदोषइति वयम्। साध्याभावव-

न्मात्रसहचारेण व्यभिचारः साध्यप्रागभावध्वंसवद्वृत्तित्वेन व्यभिचारितया पृथिवीत्वादिना गन्धादेः द्रव्यत्वादिना गुणस्यानुमानभङ्गप्रसङ्गात् किन्तु साध्यात्यन्ताभाववदगामित्वम् एवञ्च स प्रागभावप्रध्वंसावच्छिन्नतदाश्रये तत्प्रतियोगिसाधने पक्षे व्यभिचारेणेति बाधाद्दूषणम् यथावच्छेदे सिद्धसाधनम् अवच्छेदके हेत्वसिद्धिः विशिष्टञ्च नान्यदिति चेत् तर्हि प्रागभावप्रध्वंसप्रतियोगिनोरेकवृत्तित्वेनैकसमयतापि स्यात्। अथ यत्समयावच्छेदेन तत्र प्रागभावः प्रध्वंसो वा न तत्समयावच्छेदेन प्रतियोगीति चेत् तर्हि तदवच्छेदेन प्रतियोगिसाधने न सिद्धसाधनं किन्तु बाध एव अन्यथा भावात्यन्ताभावयोरप्यव्याप्यवृत्तित्वभङ्गः एकवृत्तित्वात् अवच्छेदकभेदेन वृत्तिरिहापि तत्र देशभेदोऽवच्छेदकोऽत्र तु समयभेद इति। असिद्धेरपि बाध एवोपजीव्यः नचैवमुपजीव्यत्वाद्बाधवत् सिद्धसाधनमपि पृथक् उपजीव्यत्वेऽपि स्वतोऽदूषकत्वात् नहि साध्यज्ञानं तद्बुद्धिविरोधि धारावाहिकज्ञानोदयात् नाप्यनुमितिविरोधि अनुमित्सया प्रत्यक्षसिद्धेप्यनुमानदर्शनात् तदुक्तं प्रत्यक्षदृष्टमप्यनुमानेन बुभुत्सन्ते तर्करसिका इति श्रवणानन्तरं मननदर्शनाच्च तस्मात् सिद्धिमात्रार्थिनः सिद्धौ न तदिच्छा सिद्धिविशेषार्थिनः सास्तीति तस्यानुमितिरेव एवञ्च सिषाधयिषितपक्षविघटनद्वारा सिद्धसाधनं दूषणं न स्वतः नन्वभावधीरपि न भावधीप्रतिबन्धिका नेदं रजतमिति भ्रमानन्तरं रजतनिश्चयात् नचाभावप्रमा तथा अपीतः शङ्ख इति प्रमापयत एव पीतोऽयमिति भ्रमदर्शनादिति चेन्न विरोधिज्ञानं हि प्रतिबन्धकं प्रत्यक्षभ्रमस्य च प्रत्यक्षप्रमा विरोधिनी सा शङ्खादौ नास्त्येव अनुमितौ त्वभावप्रमामात्रमेव विरोधीति कथमभावप्रमायां भावानुमितिरिति। स चायं दशविधः धर्म्मिग्राहकमानबाधितं घटोऽव्यापकः सत्त्वादिति प्रत्यक्षेण परमाणवः सावयवा मूर्त्तत्वादित्यनुमानेन मेरुः पाषाणमयः पर्व्वतत्वादिति सवर्णमयत्वबाधकागमेन साध्यप्रति-

योगिग्राहकबाधितं वह्निरनुष्णः कृतकत्वादिति प्रत्यक्षेण शब्दोऽश्रावणो गुणत्वादित्यनुमानेन गवयत्वं गवयपदाप्रवृत्तिनिमित्तं जातित्वादित्युपमानेन साध्यग्राहकबाधितं नरशिरः कपालं शुचि प्राण्यङ्गत्वादित्यागमेन हेतुग्राहकबाधितं जलानिलावुष्णौ पृथिवीतो विपरीतस्पर्शत्वात् तेजोवदिति प्रत्यक्षेण मनोविभुज्ञानसमवायाधारत्वादित्यनुमानेन राजसूयं ब्राह्मणकर्त्तव्यं स्वर्गसाधनत्वादग्निष्टोमवदिति राजसूयकर्त्तव्यताबोधकागमेनेति । अथ हेत्वाभासानामसाधकतासाधकत्वेन सद्धेतुमत्त्वं जात्यादीनां स्वासाधकतासाधारण्येन परासाधकतासाधकतया स्वव्याघातकत्वादसद्धेतुमत्त्वम् अथ विरुद्धत्वादिज्ञानादेव स्वानुमितेरिव परानुमितेः प्रतिबन्धे किमसाधकतानुमानेन यद्वचसि वायुक्तदूषणावगमः स निगृहीत इति समयबन्धेन कथाप्रवृत्तौ दूषणमात्रमुद्भाव्यमन्यथार्थान्तरत्वादिति चेन्न द्वयं ह्युद्देश्यं परानुमितिप्रतिबन्धः स्थापनाया असाधकता साधनत्वञ्च तत्राद्यं दूषणमात्रज्ञानादेव द्वितीयन्तु अलिङ्गत्वज्ञापनात् प्रतिबन्धकत्ववदनेनापि रूपेण दूषकत्वसम्भव इत्यभिप्रायेण वा साधकतासाधनं नन्वेवं पञ्चावयवापेक्षा स्यात् अन्यथा न्यूनतापत्तिरिति चेन्न दूषणस्यासाधकताव्याप्यत्वमङ्गीकृत्य कथेति पक्षधर्मताया एवोद्भाव्यत्वात् अन्यथा अधिकतापत्तेः नन्वेवं कृतकत्वेनानित्यत्वानुमाने व्याप्तिर्नाभिधेया उभयसिद्धत्वादिति चेन्न कथादशासमयविषयतया दूषणेऽसाधकताव्याप्त्युपस्थितेरावश्यकत्वात् अन्यथा कथकत्वविरोधात् नन्वेवं कृतकत्वे तद्व्याप्तिमनङ्गीकृत्यापि कथासम्भवात् यस्तु कथारम्भेऽसाधकत्वव्याप्तिं नाङ्गीकरोति तं प्रति तद्दूषणत्वं प्रसाध्य पञ्चावयवप्रयोगः कर्त्तव्य एव यत्तु दूषणे पक्षधर्मतामात्रमुद्भाव्यं तत्र यत्र वादिनोस्तथा समयोऽन्यत्र तु पञ्चावयवप्रयोग एवेति तन्न कथासम्प्रदायविरोधात् । अथासाधकत्वं न पक्षे साध्यप्रत्ययाजनकत्वं तेनापि तत्त्वेनाज्ञानदशायां पक्षे साध्यभ्रमजननात् कदाचिदजनकत्वं

सद्धेतावपि नन्वेतत्काले साध्यविशिष्टपक्षधर्म्मिज्ञानाजनकत्वं तत् नहि दूषणत्वज्ञानदशायां पक्षे भ्रमरूपाप्यनुमितिः साध्यविशिष्टपक्ष ज्ञानस्य हेतुत्वेन ज्ञानदशायां प्रसिद्धमिति चेन्न सद्धेतावसत्प्रति-पक्षदशायामपि पूर्व्वकाले साध्यविशिष्टपक्षज्ञानाजनकत्वमस्तीत्य-साधकताप्रसङ्गात् । अथ पक्षे साध्यभ्रमजनकत्वं तत् बाधविरुद्धयो रपि तत्त्वाज्ञानदशायां भ्रमजनकत्वादिति चेन्न सद्धेतौ सत्प्रतिपक्षेऽ साधारणे च तत्त्वेन ज्ञानदशायां साध्यभ्रमजनकत्वात् अज्ञाने साध्य प्रमाजनकत्वात् नापि व्याप्तिपक्षधर्म्मतान्यतरराहित्यं सत्प्रतिपक्षा साधारणसद्धेतारभावात् दशाविशेषे तस्य तद्दोषत्वात् साध्यप्रसिद्धौ प्रकृतसाध्यव्याप्त्यप्रसिद्धेश्च नाप्यनैकान्तिकाद्यन्यतमत्वं यत्किञ्चिदने-कान्तिकत्वस्यातिव्याप्तेः प्रकृतसाध्यानैकान्तिकत्वस्याप्रसिद्धत्वेन केवला न्वयिसाधनेऽप्रसिद्धेः सङ्कतः सिद्धसाधनात् साध्याविशेषस्य । यत्तु एतत्कालीन एतत्पक्षीयत्वावच्छिन्नप्रतियोगिकैतत्साध्यप्रमाकरणत्वा-भावः तत्तत्काले तत्तत्पक्षविषयसाध्यत्वाभिमतानित्यत्वादिभ्रमजनक त्वाभावो वाऽसाधकत्वं नच प्रतियोग्यप्रसिद्धिः एतत्कालीनैतत्पक्षी-यत्वतत्तत्कालतत्तत्पक्षविषयत्वयोर्व्यधिकरणयोरेव प्रतियोगिताव-च्छेदकत्वादिति तन्न सद्धेतोः सत्प्रतिपक्षाज्ञानदशायामपि तादृश प्रमायामकरणभावेनासाध्यतापत्तेः । नापि तृतीयलिङ्गपरामर्शस्य प्रमात्वं तत् विरुद्धादौ परामर्शाभावात् सद्धेतौ सत्प्रतिपक्षेऽसाधा-रणे च तत्प्रमात्वाच्च नाप्यनुमितिहेतुभूताभावप्रतियोगिज्ञानविषयत्वं सद्धेतावपि कदाचित् व्यभिचारित्वसत्प्रतिपक्षत्वज्ञानस्यानुमिति प्रति बन्धकत्वात् । अथानुमितिप्रतिबन्धकप्रमाविषयत्वमसाधकत्वं सद्धेतौ व्यभिचारादिभ्रमः प्रतिबन्धकः अनुमितिप्रतिबन्धकत्वञ्च व्यभिचारादि प्रमायास्तृतीयलिङ्गपरामर्शविघटनद्वारा तुल्यबलतया विषयतया चेति चेन्न सत्प्रतिपक्षयोर्विरुद्धयोर्व्वास्तवतुल्यबलत्वाभावेन तद्भ्रमस्य प्रतिबन्धकत्वात् नच तुल्यबलतया ज्ञायमानेन बाधितसाध्यविपर्य्य-

यकत्वज्ञानं प्रतिबन्धकं तच्च प्रमैवेति वाच्यं तुल्यबलताज्ञानमेव प्रतिबन्धकं नतु ज्ञायमानत्वज्ञानं गौरवादसिद्धेः । नच सत्प्रतिपक्षेऽन्यतराङ्गवैकल्यप्रमेव प्रतिबन्धिकेति वाच्यं अन्यतरत्वं तदतद्वृत्ति नच तदतद्वृत्तिसामानाधिकरण्येन ज्ञायमानस्य दोषत्वं धर्म्ममात्रस्य व्यभिचारज्ञानादनुमित्युच्छेदापत्तेः अन्यतराङ्गवैकल्यज्ञानोपजीव्यस्य तुल्यबलत्वज्ञानस्यैव प्रतिबन्धकत्वाच्च अन्यथा व्याप्यत्वासिद्ध्यन्तर्भावापत्तेः । अथानैकान्तिकादिज्ञानस्य तत्तदनुमितिप्रतिबन्धकत्वमसाधकत्वं तथा हीदमनैकान्तिकादिज्ञानमेतत्कालीनैतत्साध्यवत्तयैव तत्पुरुषस्यैव तत्पक्षकानुमिति प्रतिबन्धकम् एतदनैकान्तिकज्ञानत्वात् एतदन्यतज्ज्ञानवदिति चेन्न एतत्साध्यवत्तयैतत्पक्षकत्वानुमितेः कदाचिल्लिङ्गभ्रमात् प्रसिद्धावप्येतत्कालीनैतत्पुरुषस्य तादृशानुमित्यप्रसिद्धेः नापि समीचीनसाध्यविशिष्टपक्षप्रत्ययाजनकत्वं बाधविरुद्धासिद्धेषु साध्यानधिकरणपक्षे सत्यसाध्यप्रतीत्यप्रसिद्धेः वह्निनति वाष्पे धूमभ्रमात् वह्न्यनुमितेः सत्यत्वाच्च नचान्यएव वह्निस्तत्र भासते मानाभावात् तद्व्यक्तेः प्रत्यभिज्ञानात् एकव्यक्तिके तदसम्भवाच्च नच सानुमितिर्लिङ्गविषयत्वेन भ्रमः अनुमितौ लिङ्गभाने मानाभावात् किञ्च भावाभावोभयमपि प्रमेयमिति सत्यानुमितौ भावत्वाभावत्ववति प्रमेयत्वभाने एकत्र तयोरभावादसत्यानुमितिः स्यात् नचान्यतरत्वं सिद्धं तद्व्याप्तिमविदुषोऽप्यनुमितेर्व्यर्थविशेषणत्वाच्च । अथ साध्यव्याप्यत्वमेव तत्र तन्त्रं तत्र च बाधो नास्तीति चेत् तर्हि कूटलिङ्गादनुमितौ वह्निव्याप्यवत्त्वमेव तन्त्रं वह्निव्याप्यञ्च किञ्चित्तत्रास्त्येव । अथ कूटलिङ्गे वह्निव्याप्याभेदः प्रतीयते तथा वह्नौ कूटलिङ्गव्यापकाभेदोपि अन्यथा कूटस्यैव वह्निव्याप्यत्वाप्रतीतेः एवञ्च कूटलिङ्गव्यापको वह्नित्वेन भासतइति वह्न्यनुमितिरसत्येति चेन्न वह्निव्याप्यालोके धूमारोपात् यत्रानुमितिस्तत्रासिद्धिभेदेऽसत्यत्वाभावापत्तेः आलोकव्यापके धूम

व्यापकाभेदात् । अथ लिङ्गमनुमितिविषयो नियमतः पक्षधर्म्मता ज्ञानविषयत्वात् व्याप्तिज्ञानविषयत्वात् नियमेनानुमितिहेतुविशेषण-धीविषयत्वाच्च पर्व्वतवत्साध्यवच्च किञ्चैकविशेषणवत्त्वेन ज्ञाते विशेष-णान्तरधीसामग्री तत्रैव विशिष्टवैशिष्ट्यज्ञानमितिधूमविशिष्टएववह्नि वैशिष्ट्यानुमितिरिति । नन्वनुमितौ व्यापकत्वभानेऽनुमित्यविच्छेदः नच फलीभूतज्ञानन्यूनविषयस्यैव परामर्शस्यानुमितिहेतुत्वं गौरवात् विषयान्तरसञ्चारात् नानुमितिरित्यपि न परामर्शस्य चरमकारण-त्वात् प्रत्यक्षादिसामग्रीतो बलवत्त्वाच्चेति चेन्न सिद्धसाधनेन विच्छे-दात् यद्यप्येवं लिङ्गज्ञाने प्रमात्वेऽपि साध्यप्रमात्वात् कथं तदसाधकं तथाप्युक्तमसाधकत्वमस्त्येवेति चेत् अस्तु तावदेवं तथापि दैवात्तत्र धूमसत्त्वे कथं तदंशेऽप्यसत्यता अतएव आर्द्रेन्धनप्रभवो वह्निर्धूम व्यापको नान्यः नच वह्नित्वेन व्यापकत्वादन्योऽपि तथा तेन विनापि धूमसत्त्वात् एवं वाष्पे धूमभ्रमात् धूमव्यापको वह्निर्भासते सच तत्र नास्त्येवेति न सानुमितिः सत्येति निरस्तं दैवाद्धूमसत्त्वे सत्यत्वात् । उच्यते । स्वज्ञानदशायां पक्षे साध्यप्रत्ययाजनकत्वमसाधकत्वं तथाहि विरुद्धत्वादिज्ञानदशावर्त्तीदं पक्षे साध्यप्रत्ययाजनकं विरुद्धादित्वात् पक्षविशेषणमहिम्ना तत्तद्दशायां पक्षे साध्यप्रत्ययाजनकत्वं सिद्ध्यति बाधितेऽपि लिङ्गत्वभ्रमात् पक्षे साध्यप्रत्ययजनकत्वमिति न प्रति-योग्यप्रसिद्ध्या साध्याप्रसिद्धिः यद्वा अनुमितिप्रतिबन्धकतावच्छेदक रूपवत्त्वमसाधकत्वं तथाहीदानीमिदमनुमितिप्रतिबन्धकतावच्छेदक रूपवदनैकान्तिकादित्वात् ज्ञानवत् अनुमितिप्रतिबन्धकतावच्छेदकञ्च रूपं ज्ञाने विषयतयानैकान्तिकादित्वमेव नच साध्यविशेषः उपाधि-विशेषस्यानुमेयत्वात् तोयत्वेन पिपासोपशमनसमर्थतावच्छेदकरूप-वत्त्वानुमानवत् । अन्ये त्वनैकान्तिकबाधितविरुद्धेष्वव्याप्यत्वं व्याप्य त्वासिद्धेऽनैकान्तिकत्वं स्वरूपासिद्धसत्प्रतिपक्षासाधारणेषु दशा-

विशेषेऽनुमितिप्रतिबन्धकज्ञानविषयत्वमसाधकत्वं न चैवमनैकान्तिको ऽसाधक इति सद्व्यवहारानुपपत्तिः तत्राव्याप्यत्वस्यासाधकशब्दार्थ-त्वात् असाधकताननुगमेऽपि च हेत्वाभासत्वमननुगतमेव यस्य ज्ञान मनुमितिप्रतिबन्धकं तस्य हेत्वाभासत्वादिति ।

श्रीमद्गङ्गेशोपाध्यायविरचिते

तत्त्वचिन्तामणौ अनुमानखण्डे बाधान्तः ।

# अनुमानचिन्तामणिदीधितिः



श्रीरघुनाथशिरोमणिभट्टाचार्य्य विरचिता

गवर्णमेण्टसंस्थापितसंस्कृतपाठशालाध्यक्ष श्रीयुत बाबू रसमय दत्त
महोदयानामनुज्ञया ।

श्रीमदनमोहनतर्कालङ्कारेण संस्कृता



संस्कृतयन्त्रे मुद्रिता

कलिकाता

संवत् १९०५

# अनुमानदीधितिः



ओं नमः सर्व्वभूतानि विष्टभ्य परितिष्ठते ।
अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥
अध्ययनभावनाभ्यां सारं निर्णीय निखिलतन्त्राणाम् ।
दीधितिमधिचिन्तामणि तनुते तार्किकशिरोमणिः श्रीमान् ॥
परगुरुनयान्निवर्त्तमाना मननास्वादरसा विशुद्धबोधैः ।
रघुनाथकवेरपेतदोषा कृतिरेषा विदुषां तनोतु मोदम् ॥
न्यायमधीते सर्व्वस्तनुते कुतुकान्निबन्धमप्यत्र ।
अस्य तु किमपि रहस्यं केचन विज्ञातुमीशते सुधियः ॥
मान्यान् प्रणम्य विहिताञ्जलिरेष भूयो
भूयो विधाय विनयं विनिवेदयामि ।
दूष्यं वचो मम परं निपुणं विभाव्य
भावावबोधविहितेन दुनोति दोषः ॥

पूर्व्वापरग्रन्थैकवाक्यताप्रतिपत्तये शिष्यावधानाय च सङ्गतिं प्रदर्शयन्ननुमाननिरूपणं प्रतिजानीते प्रत्यक्षेत्यादि उपजीव्योपजीवकभावः फलतः स्वरूपतश्च प्रत्यक्षफलस्यानुमित्यनुव्यवसायादेरनुमित्युपजीवकत्वेऽपि न सर्व्वा प्रत्यक्षमितिस्तथा अनुमितयस्तु सर्वाः साक्षात्परम्परया वा व्याप्त्यादिप्रत्यक्षोपजीविकाः पुरस्कृतश्चायमुपजीवकतोत्कर्षः । यद्यपि सकलमेव प्रत्यक्षफलमुपजीवन्त्यदृष्टजननीं समयमलक्षणादिपरिच्छेदिकामनुमितिम् ईश्वरप्रत्यक्षन्तु न

फलं तथापि दृष्टद्वारकमिह तथात्वमादरणीयमितरस्याविनिगम्यत्वात् सर्वत्रानुमितिकरणमिन्द्रियापेक्षोत्पत्तिकम् अनुमितिं भावयता ऽपीश्वरज्ञानस्य तत्कारणतानिर्व्वाहकप्रत्यासत्तिविरहेणातथात्वात् सर्वं पुनरिन्द्रियं नानुमानाधीनजन्म मनःश्रवणद्वारजन्यत्वात् दृष्टद्वारा वा तथात्वमादरणीयं नचोत्पत्तिमदप्यन्द्रियं दृष्टद्वारकमनुमानमपेक्षत । अथोपजीव्यं निरूप्यैवोपजीवकं निरूप्यतइति न नियमः क्वचित्कार्य्यं निरूप्यापि कारणनिरूपणादिति चेत् किञ्चातो न हि सङ्गतिरनन्तराभिधानव्याप्ता आनन्तर्य्याभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयो ह्यर्थः सङ्गतिर्जायते च कार्य्ये कारणे वा ज्ञाते कारणत्वस्य कार्य्यत्वस्य वा ज्ञानात्किमस्य कारणं कार्य्यं वेति जिज्ञासा अतस्तयोर्द्वयोरपि सङ्गतित्वमित्युपजीवकतायास्तुल्यत्वेऽपि न क्षतिरिति मन्तव्यम् । लाघवायावोपमानस्य सङ्गतिं दर्शयति बहुवादीति सुप्रसिद्धतया [illegible]रसनीयान्यथादिविप्रतिपत्तिकत्वेन सुप्रतिपदतया चानुमानएव व्युत्पित्सोः प्रथमं जिज्ञासा जायमानेऽप्रसिद्धत्वात् निरसनीयबहुवादिविप्रतिपत्तिकत्वेनातिदुरूहत्वाच्च औत्सर्गिकीं रीतिमनुरुध्य चेदं तेन प्रथमं कार्य्यमिद्दरूहे जिज्ञासोदयेऽपि न क्षतिस्तथाचात्रावसरसङ्गत्योपमाननिरूपणमिति भावः । यथाचावसरस्य सङ्गतित्वं तथा व्यक्तमाकरे । शब्दान्तरसमयग्राहकं सप्रवृत्तिनिमित्तकत्वबोधकं सामान्यतोदृष्टमन्ततोऽदृष्टजनकप्रवृत्त्यापयिकज्ञानमनुमानमपेक्षत निखिलमेवोपमानमितीहाप्युपजीवकत्वमेव सङ्गतिरित्यपि केचित् सम्भवति चेह निरूपणयोरपि कार्य्यकारणभावः अथ तत्पूर्व्वकमित्यादिसूत्रे प्रत्यक्षपूर्व्वकत्वेनानुमाननिरूपणात्तच्छब्देन व्याप्त्यादि प्रत्यक्षपरामर्शात् तथापि सत्प्रकारप्रत्यक्षजन्यत्वादिना तन्निरूपणात् तस्य च प्रत्यक्षनिरूपणाधीनत्वात् एवमनुमानभिन्नत्वेनोपमाननिरूपणमप्यनुमाननिरूपणापेक्षमिति सङ्क्षेपः ।

तत्र लक्षणस्वरूपप्रामाण्यादिभिरनुमाने निरूपणीये करणस्य

क्रियाभेदभिन्नमूर्त्तिकतया क्रियालक्षणपूर्व्वकं तल्लक्षणमाह व्याप्तीत्यादिना। अत्र व्याप्तिविशिष्टत्वपक्षधर्म्मत्वसामानाधिकरण्यावगाहिज्ञानजन्यत्वमर्थः कर्म्मधारयोत्तरभावप्रत्ययस्य पदार्थतावच्छेदकद्वय सामानाधिकरण्यवचनत्वात् ज्ञानपदोपादानेन च बाधिताबाधित साधारणज्ञानलाभात् न भ्रान्तानुमित्यव्याप्तिरित्याकूतन्न परामर्षेण नियमतो व्याप्तिवैशिष्ट्यादिसामानाधिकरण्यग्रहे मानाभावात् गौरवेण तद्विषयत्वेनाहेतुत्वात् सम्बन्धसम्बन्धाग्रहेऽपि विशिष्टज्ञानत्वस्योपपादितत्वात् भ्रमस्थले तादृशसामानाधिकरण्याप्रसिद्ध्या तज्ज्ञानत्वाभावात् अमतव्याप्तिनिरासात् अवान्तरवाक्यार्थायोग्यत्वनिर्णये महावाक्यार्थज्ञानानुदयात् विषाणे शशसम्बन्धाभाव निश्चयदशायां शशविषाणजन्यमिदं कार्मुकमिति शाब्दबुद्धेर्व्वचनापि दुरुपपादत्वात्। नचात्र प्रमाणप्रस्तावात्प्रमैव लक्ष्या यदि च सल्लिङ्गपरामर्शादपि भ्रान्तानुमितिस्तदा चरमज्ञानपदं प्रमापरमिति वाच्यम् अव्याप्यपक्षधर्म्मत्वावगाहिना परामर्षेण जनितायां वस्तुतः साध्यवत्पक्षावगाहितया प्रमायामव्याप्तेर्लिङ्गोपहितलैङ्गिक भाननिरासेनांशिकभ्रमत्वस्याप्ययोगात् ईश्वरतादृशज्ञानजन्यत्वस्य चातिप्रसङ्गात् अतएव व्याप्तिविशिष्टे पक्षधर्म्मता तज्ज्ञानं वेत्यादिकमपास्तम्। व्याप्तिविशिष्टस्य पक्षधर्म्मस्येति द्वन्द्वाश्रयणाद्व्याप्तिविशिष्टत्वपक्षधर्म्मत्वावगाहिज्ञानजन्यत्वं लभ्यते पदार्थयोरभेदेऽपि पदार्थतावच्छेदकभेदेनैव प्रमाणप्रमेयेत्यादिसूत्रे अन्यत्र च द्वन्द्वस्यादर्शनात् पदार्थद्वयाभेदबोधकाच्च कर्म्मधारयाद्भेदाभेदोदासीनपदार्थद्वयबोधजनकत्वेनैव द्वन्द्वस्य भेदात् विशिष्टपदस्य धर्म्मिपरतया वा व्याप्तिवैशिष्ट्यपक्षधर्म्मतयोर्लाभात्। नचैवमालोको वह्निव्याप्यो धूमवान् पर्व्वत इतिज्ञानजन्येऽतिप्रसक्तिः एकत्र तदुभयावगाहित्वस्याक्षत्वादिति केचित्तदप्यसत् एवमपि धूमो वह्निव्याप्यो द्रव्यवान्पर्व्वत इतिज्ञानजन्येऽतिप्रसङ्गात् एकरूपेण तदुभयावगाहित्वस्योक्तौ च

मीमांसकमतानुप्रवेशात् मिथस्तदुभयोपश्लेषावगाहित्वस्य च परा-मर्श्व्यापकत्वात् । नच तदुभयविषयत्वनियतधर्म्मावच्छिन्नकारणता प्रतियोगिककार्य्यताशालित्वमर्थः पक्षधर्म्मतापदोपादानवैयर्थ्यात् व्याप्तिविशिष्टं व्याप्तिप्रकारकं यत्पक्षधर्म्मताज्ञानं तज्जन्यमिति तु स्यात् । यद्यप्यव्याप्येन्धनसमानाधिकरणात्यन्ताभाव प्रतियोगिता-नवच्छेदकवह्नित्वावच्छिन्नसमानाधिकरणेन्धनवानित्यादिपरामर्शजन्ये-ऽव्याप्तिरखण्डव्याप्तेरप्रसिद्धेः भ्रमानुमितेर्लक्ष्यत्वे घात्राकाशमात्मान इत्यादौ सुतरां तथा तथापि तावत्पदार्थानां तथाविधपरस्परोप-श्लेषावगाहित्वमात्रं विवक्षितम् । नच व्यतिरेकिण्यव्याप्तिः व्यभि-चारधीविरोधिधीविषयत्वेनाप्यन्वयव्यतिरेकव्याप्तेरननुगमात् भवति हि धूमसमानाधिकरणात्यन्ताभावाप्रतियोगिवह्निसमानाधिकरणत्वमनु-मते वह्न्यभावव्यापकीभूताभावप्रतियोगित्वे वा गृहीते नियमतोवह्नि व्यभिचारधीप्रतिरोधः तथाविधधूमसमानाधिकरणत्वादिकन्तु न तया रासभादौ तद्ग्रहेऽपि व्यभिचारग्रहात् व्यतिरेकसहचारेणा न्वयव्याप्तिग्रहणाश्रयणाद्वा । न च भ्रमसंशयोत्तरप्रत्यक्षं प्रति विशेषदर्शनस्य हेतुतामते तत्रातिव्याप्तिः तथाविधनिश्चयत्वेन हेतु ताया विवक्षितत्वात विशेषदर्शनस्य भ्रमादिविरोधित्वेन तत्त्व-मित्युक्तत्वात् । अतएव गिङ्गवत्त्वादिलक्षणानिदंशवाक्यार्थज्ञान जन्योपमितौ नातिव्याप्तिः तथाविधवाक्यार्थप्रतिसन्धानत्वेन तस्य हेतुत्वात् । नचोपनयार्थज्ञानजन्यन्यायार्थज्ञाने तच्छब्देन सङ्केतित शब्दान्तरेण वा व्याप्त्यादिविशिष्टोपस्थितिद्वारा जनिते शाब्दबोधे ऽतिव्याप्तिः व्युत्पादयिष्यते च महावाक्यार्थज्ञानस्यावान्तरवाक्यार्थ धीजन्यत्वं तदादेस्तु विशेषरूपेणोपस्थापकत्वमिति वाच्यं तत्राति रिक्तस्य पदजन्यत्वस्य कारणतावच्छेदकेऽनुप्रवेशान्निश्चयत्वस्याप्रवे-शाच्च । न च तथापि तत्तद्विशिष्टवैशिष्ट्यज्ञानं प्रति तत्तद्विशेषणता-तावच्छेदकप्रकारकनिश्चयत्वेन हेतुत्वात् तादृशशाब्दबोधे प्रत्यक्षे

प्यातिव्याप्तिः दण्डादर्शनो न वर्त्तते संशये रक्तदण्डवानयमितिज्ञानानुदयादिति वाच्यं ज्ञानोपरमेऽपि विशिष्टविषयोपधानेनेच्छादिविषयोः कृतस्य मालात्मकाद्विशेषणविषयकादिविशिष्टसंस्कारादेव विशिष्टस्मरणाच्च तद्विषयकगुणानां तत्र हेतुत्वे न्यूनवृत्तेर्ज्ञानत्वस्य तत्राप्रवेशादिच्छादितः संस्काराच्चानुमितेरनुदयात् संस्काराद्यन्यत्वस्य गुरुतया ज्ञानत्वेनैव तत्र हेतुत्वात् । न च परामर्शानुव्यवसायेऽतिव्याप्तिः सामान्यतः प्रत्यक्षे विषयत्वेन तत्तद्विषयकप्रत्यक्षे तत्त्वेन कदाचित् ज्ञानादिप्रत्यक्षे ज्ञानत्वादिना तत्र हेतुत्वं न तु यावानेव तत्तदितरवादिविषयनिष्ठाधर्म्मस्तेन तद्विषयत्वेन कार्य्यकारणभावः मैत्रावलोकितचैत्रनिर्म्मितनीलेतरघटतद्विषयकत्वादिना तत्त्वेऽनन्तकार्य्यकारणभावप्रसङ्गान्मानाभावात् अन्यथोपपत्तेश्च । अथ विशिष्टस्मरणेऽतिव्याप्तिः नचोपेक्षान्यत्वेन तत्र हेतुत्वम् उपेक्षात्वं हि न जातिस्सुखत्वादिना सङ्करप्रसङ्गात् व्याप्यकत्वापगमाच्च नापि प्रवृत्त्यजनकत्वमजिज्ञासितविषयत्वं वा तादृशादपि स्मृत्युत्पादात् नापि संस्काराजनकत्वं जनकतावच्छेदकरूपान्तरापरिचयात् अन्योन्याश्रयप्रसङ्गात् संस्कारानुत्पन्नेवास्मरणसम्भवे स्मृतिजनकतायां तदप्रवेशाच्च नाप्यनुभवत्वेन तथात्वं संस्कारस्य फलनाश्यतया सकृदनुभूतस्य स्मरणोत्तरमस्मरणप्रसङ्गात् समानाकारस्यैव फलस्य नाशकत्वात् समूहालम्बनादितोऽनेकस्मरणोत्तरक्रमिकस्मरणानुपपत्तिः जायते च पुनः पुनः स्मरणाद्दृढतरः संस्कारः परित्यज्य च निश्चिताव्यभिचारकं रूपं गृह्यमाणाव्यभिचारकेण कारणत्वकल्पनानुदयात् इदमेव चान्यत्र सामान्यस्य च हेतुतावच्छेदकत्वे बीजम् अभिहितञ्च तात्पर्य्यटीकायां प्रथमसूत्रेऽवयवविवेचनप्रस्तावे मिश्रैः स्मृतीनां स्वकार्य्यसंस्कारविरोधिनीनामसहभावादिति चेन्न करणज्ञानपदस्यानुभवपरत्वात्साक्षात्तज्जन्यत्वस्य वा विवक्षितत्वादित्यपि कश्चित् । किञ्च व्याप्यविशेष्यकात्पक्षविशेष्यकाच्च परामर्शा-

ऽहितमेव साधर्म्यप्रदर्शनं सम्भावनां भावयति सम्भावनेनैव च व्यवहारो व्यवहारहेतुरित्यत आह अनुमानमिति । ननु न वयमापाततो भ्रमजनकत्वलक्षणमप्रामाण्यं निरूपयामो येन भ्रमस्य विषय बाधाधीनतया प्रामाण्यं सम्भाव्येतापि परन्तु प्रमाकरणत्वव्यतिरेक मत आह अपि चेति । स्वत इति नचानुगताकारासंस्पर्शिनि परमार्थ सत्स्वलक्षणमात्रविषये स्वसंवेदनसंविदितप्रामाण्ये निर्विकल्पकज्ञाने नाप्रामाण्यं सन्दिह्यते परन्तु तदुत्तरभाविनि समुल्लिखितालीकानुगताकारे सविकल्पक एवेति वाच्यम् निर्विकल्पकस्य स्वमात्रावलम्बन त्वस्वविषयत्वप्रामाण्यावगाहित्वानामनुमानाधीनसिद्धिकत्वात् । सर्व्व मिदं सति व्याप्तिनिश्चये स्यात् स एव तु न सम्भवत्युपायाभावादित्यत आह व्याप्तीति ।

समारब्धानुमानप्रामाण्यपरीक्षाकारणीभूतव्याप्तिग्रहोपायप्रतिपादननिदानं व्याप्तिस्वरूपनिरूपणमारभते नन्वित्यादिना साध्याभाववदवृत्तित्वस्याव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिमाशङ्कयाह साध्यवद्भिन्नेति । साध्यवद्भिन्नो यः साध्याभावस्तदवृत्तित्वमर्थः कर्म्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावादाह साध्यवदिति हेतोः साध्यवत्यत्र भिन्नदृष्टान्तवृत्तित्वेनाव्याप्तिमाह सकलेति साकल्यं साध्याभाववति साध्ये च बोध्यं साध्याभावो वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यस्तेन विपक्षैकदेशनिष्ठाभावप्रतियोगिनि व्यभिचारिणि नातिव्याप्तिः न वा नानाव्यक्तिसाध्यकसद्धेतावव्याप्तिः अव्याप्यवृत्ति साध्यकव्याप्यवृत्तिसद्धेतावव्याप्तेर्व्यभिचारिणि चाव्याप्यवृत्तावतिव्याप्ते र्वारणायाभावद्वये प्रतियोगिव्यधिकरणत्वं बोध्यं हेत्वभावोऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणः तत्प्रतियोगित्वञ्च हेतुतावच्छेदकरूपेण बोध्यं तेन द्रव्यत्वादौ साध्ये विशिष्टसत्तादौ नाव्याप्तिः न वा विशिष्टसत्तात्वादिना तादृशाभावप्रतियोगिनि सत्तादावति प्रसङ्गः यद्येकव्यक्तिकं साध्यं विपक्षो वा तत्र निर्धर्मत्वादित्याप्ये तत्त्वेन

रूपतोविरोधित्वं द्रढ़यति अन्ययेति । हेत्वाभासाधीनमिति नच हेत्वाभासस्यानुमित्याभासताप्रयोजकत्वे साध्यवति पक्षे लिङ्गाभास जन्याया अनुमितेराभासत्वापत्तिः लिङ्गोपधाने तथात्वस्येष्टत्वात् पक्षासिद्धिरित्यस्य बाधकमानभिवन्धनेत्यादिः लिङ्गस्येत्याद्यभ्युच्चय मात्रं वह्नेरपक्षत्वात् काञ्चनमयत्वस्यासाध्यत्वाच्च नच साध्याभाव इति अनुमितः पूर्व्वं विशिष्टस्याप्रसिद्धया तदभावस्याज्ञानादिति भवतैवोक्तत्वादितिभावः । तथाचेत्यादि अधिकबलत्वेनाधिकरणरूप-त्वेनापेक्षणीयोव्यभिचारोव्यभिचारनिश्चयः । साध्याभावनिश्चयेति साध्याभावो निश्चीयते येन प्रमाणनिश्चयेन तदधीनेत्यर्थः । अत्रेदं तत्त्वम् । साध्याभाववान् साध्यवदन्यो वा पक्षः पक्षावृत्तिसाध्यं पक्षे साध्याभावः पक्षनिष्ठसाध्याभाववत्त्वादिकं साध्यादेः पक्षावृत्तित्वा-दिकं साध्यवत् सामान्यादेः पक्षान्यत्वादिकं विशिष्टसाध्ये पक्षादे विशेष्याभाववत्त्वादिकं यथामतं पक्षे साध्यवत्ताज्ञानस्य साक्षाद्वि-रोधिप्रत्येकमेव बाधः तन्निश्चयस्य विरोधिनिश्चयत्वेन दोषविशेषा-द्यजन्यज्ञानमात्रएव विरोधी अतएवानन्वयनिश्चयविरहोयोग्यते-त्याचार्य्याः । विभाजकन्तु प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोध्यनु ज्ञायकत्वे प्रकृतपक्षप्रकृतसाध्यग्रहाविरोधित्वे च सति प्रकृतपक्षप्रकृत साध्यवैशिष्ट्यग्रहविरोधित्वं पक्षादेः साध्यासमानाधिकरणधर्म्मव-त्त्वादिकमपि बाधएव साध्याभाववत्पक्षादिज्ञानप्रमात्वन्तु न बाधः तज्ज्ञानस्य पक्षादौ साध्याभावादेरनवगाहित्वे विरोधिविषयत्वाभा-वात् अवगाहित्वे तु तद्विषयत्वेनैव प्रतिबन्धकत्वात् प्रमात्वनिश्चयस्या-न्यत्र प्रतिबन्धकत्वाकल्पनाच्च सर्व्वत्र निश्चयस्य हेतुत्वे प्रतिबन्धकत्वे व भ्रमत्वाग्रहः संशयसाधारणज्ञानमात्रस्य तथात्वे तु भ्रमत्वानिश्चयः प्रयोजको ऽन्यथाकाङ्क्षाकृतिसाध्यत्वादिनिश्चयहेतुप्रतिहेतुपरामर्शा-दीनां प्रमात्वनिश्चयो योग्यता व्यभिचारज्ञानादीनाञ्च प्रमात्वज्ञानं प्रयोजकीभवेत् शङ्खादौ शुक्लत्वाभावभ्रमे च शुक्लत्वाद्यनुमितिर्न विना

तदप्रामाण्यग्रहं नहि स्वरूपसत्यपि बाधनिश्चये शाब्दमानसादिज्ञानं न मुत्पद्यते। अथ लाघवेन संशयसाधारणं संवृष्टत्वज्ञानमेव शाब्दानुमित्योः कारणम् आस्तां च तस्यैव विरोधितया प्रकरणसमो बाधश्च हेत्वाभासोऽसिद्धिरिव परामर्शस्य विलीयतां चाप्रसिद्धसाध्यकमनुमानमिति चेन्न संशयासत्त्वसमये परामर्शोत्पादे सिद्धिसिषाधयिषे विना अनुमित्यनुत्पादप्रसङ्गात् सति विशेषदर्शने संशयायोगादिति एतेन लाघवात् प्रमात्वेन निर्णीयमानं बाधज्ञानं विरोधीतिपरास्तम्।

विपरीतमेव लाघवं स्फुटतरञ्च तद्भावसाध्य तत्र हि गोत्वाद्यप्रकारकं गोत्वाभावादिप्रकारकं ज्ञानं बाधनिश्चयः तथाच गोत्वादिमद्विशेष्यक गोत्वाद्यभावप्रकारकत्वज्ञानाभावोऽभ्रमत्वग्रहविरहः बाधग्रहश्च पक्षे गोत्वाद्यप्रकारकं ज्ञानं तस्य च गोत्वादिमद्विशेष्यकगोत्वाद्यभाव प्रकारकत्वाद्यप्रकारकं गोत्वाद्यभाववद्विशेष्यकगोत्वाद्यभावप्रकारकत्व प्रकारकज्ञानं प्रमात्वनिश्चयः इत्युक्तप्रायञ्च तत्तत्कार्य्यं प्रति प्रतिबन्धकानां कारणानाञ्च प्रमात्वेन निश्चीयमानतया तथात्वापत्तिरिति। नच सति विशेषदर्शने विपरीतनिश्चयोऽकिञ्चित्करः तत्सत्त्वेऽपि विशेषदर्शनेन प्रत्यक्षोत्पादादिति वाच्यं विशेषदर्शनेन तन्नाशानन्तरमेव प्रत्यक्षोदयात् परैरपि क्वचित् प्रत्यक्षविशेषएव विपरीतनिश्चयविशेषस्यैव तथात्वोपगमाच्च। नहि शाब्दादिबोधेऽपि विशेषादर्शनविशिष्टत्वेन स विरोधी गौरवात् मानाभावाच्च। न वा चाक्षुषादिप्रत्यक्षे मानसादिविपरीतनिश्चयो विरोधी उपयुज्यते च क्वचिद्विशेषदर्शनमप्रामाण्यग्राहकत्वेन बाधबुद्धेः। नचैवं बाधावतारदशायां पक्षे हेतोरग्रहेऽज्ञानलक्षणासिद्धिः ग्रहे च व्यभिचारधीरेवेति वाच्यं बाधग्रहपरामर्शयोर्भेदात् अभेदेऽपि पक्षः साध्यव्याप्यहेतुमान् साध्याभाववांश्च इतिग्रहस्य परस्परोपरागानवगाहिनोव्यभिचाराविषयत्वात् एकत्र व्यभिचाराव्यभिचारयोरेकनिश्चयागोचरत्वात् पूर्णे च कारणे सत्यादनुमित्यविरोधिनोव्यभिचारज्ञानादेरकिञ्चित्करत्वात उक्तञ्च

साध्यादेः पक्षावृत्तित्वादिकमपि बाधः नच तद्ग्रहेऽपि व्यभिचार-बुद्धिरावश्यकी । यत्त्वनिश्चितप्रामाण्यस्य ज्ञानस्यार्थनिश्चयरूपत्वे प्रामाण्यनिश्चयवैयर्थ्यमतिप्रसङ्गस्य तथाच पक्षे साध्याभावज्ञानस्य निश्चयत्वसम्पत्तयेऽपेक्षणीयस्तत्प्रमात्वनिश्चय एव प्रतिबन्धकः प्राथमिकत्वादुपजीव्यत्वाच्च नतु चरमभावि तदधीनं व्यभिचारज्ञानमिति तन्न उक्तं तस्य प्रतिबन्धकत्वेनाग्रहीताप्रामाण्यकत्वेनैव निश्चयस्य स्वकार्य्यकारित्वात् अन्यथानवस्थानात् अप्रामाण्यशङ्कानिवर्त्तकत्वेन च क्वचित् प्रामाण्यग्रहोपयोगात् संशयसाधारणस्य व्यभिचारज्ञानस्य विरोधित्वाच्चेति यत्तूपनीतकाञ्चनमयत्वविशिष्टवह्न्यनुमितिविरोधी व्यधिकरणकाञ्चनमयत्वावच्छिन्नप्रतियोगिताकोवह्न्यभावो बाधः। नच विशिष्टसाध्याप्रसिद्ध्या कथं तद्विशिष्टानुमिति र्विशेष्ये विशेषणमित्यादिन्यायेन तत्सम्भवात् शुद्धसाध्यव्याप्तिग्रहादेव चोपनयसहकारेण प्रसिद्धविशिष्टानुमितिसम्भवात् तदभावो बाधोऽस्तु तेन रूपेण व्याप्तेरनुपादानाच्च तथाव्यभिचारो न दोषाय उपनीतसकलभाने चाप्रामाण्यं प्रत्यक्षेऽपि तुल्यं अनुद्देश्यांशे चानुमितेरप्रामाण्यं न वादिविजयप्रयोजकमिति तन्न प्रत्यक्षे हि विना सन्निकर्षमभानादुपनीतभानस्य प्रत्यभिज्ञादावानुभविकत्वादुपनयोऽपि सन्निकर्षः कल्प्यते अनुमितौ च फलासिद्ध्या न सामग्र्यन्तरकल्पना। न खलु वह्निव्याप्यधूमपरामर्शादुपनीतरासभानुमितिरानुभविकी कस्यापि अन्यथा पर्व्वते वह्निसन्देहवतो निश्चितवह्निव्यभिचारकेण अभिधेयत्वादिना पर्व्वतादौ प्रमेयत्वादिकमनुमितोपि वह्न्यर्थिनो वह्निमत्वनिश्चयान्निव्कम्पप्रवृत्त्यापत्तेरिति ।

पक्षधर्म्मताबलेनेत्यादि ननु विशेषतोव्याप्त्यग्रहान्न तथासिद्धिसम्भावना सामान्यतः सिद्धौ न विशेषतो बाधोविरोधी भिन्नप्रकारकत्वात् नच समानविषयत्वमेव विरोधित्वे तन्त्रं पृथिव्यादिरूपबाधग्रहेऽपि वायूरूपवान्नवेति संशयात् रूपवानित्यनुमितेश्च नचारूपमेव

रूपत्वेन शङ्कितमारोपितं वा तद्विषयः तादृशशङ्काविरहेऽपि तयोरानुभविकत्वात् दोषवशान्नेह श्वेतं द्रव्यमिति भ्रमेऽपि इह पीतः शङ्ख इति प्रत्ययाद्धटपटौ न स्तः दण्डी चैत्रो नास्तीति ग्रहेऽपि घटोऽस्ति चैत्रोऽस्तीत्यवगमात् सन्निकृष्टपरामर्शाद्बाधितविशेषभानप्रसङ्गस्य विशेषबाधावतारानवतारयोः समानः समानसमाधानस्य । अत्र वदन्ति व्यापकतानवच्छेदकमपि रूपं लाघवज्ञानादिसहकारिवशादनुमितौ प्रकारीभवति यथा जीवनमरणान्यतरप्रतियोगी प्राणित्वादित्यत्र जीवनप्रतियोगित्वम् अन्यथा जीविते सति गृहासत्त्वस्य हेतोरसिद्ध्या बहिःसत्तानुमानायोगात् एवं क्षित्यादिकर्तृरेकत्वमपि अन्यथा एको ऽनेको वा क्षित्यादिकर्त्तेतिसन्देहप्रसङ्गादनुमितेस्य तादृप्येण लघ्वर्थाविषयकत्वे तथाविधानुव्यवसायविरहात् सति लाघवप्रतिसन्धाने लघ्वर्थपरिच्छेदकत्वमनुमानस्येत्यपि न सिध्येत् इत्यस्य विशेषतोजायमानानुमितिं विरुणद्धि बाधः प्रमितिबाधः एयक्सन्निकृष्टपरामर्शात् कथं भ्रान्तानुमितिर्जायतां न जायेत वा कथं यथार्थेति चेत् बाधानवतारे बाधितार्थलाघवज्ञानाद्दोषादेव तथा सामान्यतोदृष्टात्तदितरप्रसिद्धाशेषविशेषबाधसहकृतात् शिष्यमाणप्रसिद्धप्रकारिकानुमिति र्जायते यथा भोजनसाध्यकपीनत्वाद्दिवासन्ध्याभोजनबाधे रात्रिभोजनप्रकारिका एवं द्रव्यवृत्तित्वसाध्यिका गुणत्वादिच्छायां दिगन्तद्रव्यवृत्तित्वबाधे प्रसिद्धमनोवृत्तित्वानुमिति र्जायमाना मनोवृत्तित्वाभावप्रमया बाध्यतइति विशेषबाधो दोषः किन्तु साध्येत्यादिकमापाततः वस्तुतस्तु प्रतियोग्यसमानाधिकरणसम्बन्धविशेषावच्छिन्नप्रतियोगिताकसाध्याभाववद्धर्मित्वं व्यभिचारः स्वप्रागभावेनेत्यादिकं साध्यत्वे नोक्तं तत्र तदानीं तदत्यन्ताभावस्यापि व्युत्पादितत्वात् अतएवोत्पत्तिकालावच्छिन्ने घटे पृथिवीत्वादिना रूपादिसाधने बाधोनिरावाधं पद्मादर्धाति एवं साध्यवत्तानवच्छेदकदेशावच्छिन्नस्य पक्षत्वेऽपि बाधोबोध्यः।

अथ पक्षतावच्छेदकावच्छेदेन साध्यसिद्धौ तदवच्छेदेन हेतुमत्ता ज्ञानं प्रयोजकमन्यथा गृहीतभागासिद्धेर्घटत्वादेरपि पृथिवीत्वाद्यवच्छेदेन रूपादिसिद्धिप्रसङ्गात् नच शिखराद्यवच्छेदेन धूमादिमत्त्वमिति चेन्न अवच्छेदकत्वयोर्वस्तुनोर्भेदात् शब्दसामान्यस्याकिञ्चित्करत्वात् अवच्छिन्नावृत्तेरपि च हेतोस्तत्त्वेन गृहीताज्जायमानामनुमितिं विरुणद्धि बाधप्रमा सङ्करेऽपि वस्तुनोर्ज्ञानासङ्करात् सुखाद्यनवच्छेदकशरीराद्यवच्छिन्नात्मादौ सुखादिसाध्यकदुःखादेर्व्वर्त्तमानत्वात् कपिसंयोगाद्यनवच्छेदकमूलाद्यवच्छिन्ने कपिसंयोगादिसाध्यकवृक्षविशेषत्वादेर्व्वर्त्तमानत्वाच्च अत्र चैतत्कालावच्छिन्नः पर्व्वतोवह्निमानिति शब्दादिवदेतत्कालावच्छिन्नपर्व्वतपक्षकधूमादेरप्येतत्कालावच्छेदेन वह्निमत्ताबुद्धिरनुभवसिद्धा नापक्षवमहतीत्यभिप्रायः ।

ईश्वरवादे नच विशेष्यमुपाधिः साधनव्यापकत्वादिति साध्यस्येति शेषः शरीरसहकारेणैव कर्त्तुः कार्य्यजनकत्वात् शरीराजन्यस्य न कर्तृजन्यत्वं तथाचाकर्तृकत्वरूपसाध्यव्याप्यस्य शरीराजन्यत्वस्य हेतोर्व्यापकतया साध्यस्याव्यापकत्वं विशेष्यम् अजन्यत्वं नोपाधिरित्यर्थः । यदि विशिष्टाभावे हेतौ विशेषणवैयर्थ्यं विशेष्याभावरूपत्त्व विशेष्यमुपाधिर्भवेत् तदार्द्रेन्धनप्रभववह्निरहितत्वादिना निर्धूमत्वादौ साध्ये व्यर्थविशेषणत्वम् उपाधिश्च वह्निरहितत्वादि सम्भवेदित्याह किञ्चेति । ननु स्वरूपासिद्धिवारकत्वाद्विशेषणस्य न वैयर्थ्यमिति न भ्रमः अपि तु व्यभिचारवारकत्वात् रूपादिषु मध्यइत्यत्र गन्धव्यञ्जकत्वस्य हेतोर्व्यभिचारो न शुद्धेनैव वारयितुं शक्यते तस्य समभिव्याहारवशाच्छुद्धातिरिक्ताव्यञ्जकत्वरूपस्य गन्धव्यञ्जकेऽसत्त्वेन विशेषणत्वायोगादतोरूपाद्यन्तर्गतगन्धातिरिक्ताव्यञ्जकत्वं विशेषणं तच्च व्यभिचारवारकमेव इत्यतआह अपिचेति । यत्त्वित्यादि यावद्विशेषाभावानामेव सामान्याभावत्वमते अपृथिवीत्वं पृथिवीसामान्यान्योन्याभावः सच विशेषाभावसमुदायः । बहुत्वेति बहवोजन्यान्योन्याभावा अल्पे शरीरजन्या-

न्योन्याभावाः जन्यत्वात्यन्ताभावस्येत्यभ्युच्चयमात्रं जन्यत्वस्याखण्डस्य एकस्य विरहेण तुल्यन्यायतया सामान्याभावस्यापि तत्तज्जन्यत्वाभावरूपत्वात् यद्यपि प्रत्येकव्याप्यत्वस्य सम्भवे बहूनामल्पानाञ्च तथात्वम् एकैकस्यान्योन्याभावस्य व्यभिचारित्वात् तथा च शरीरजन्यान्योन्याभावसमुदायस्य व्याप्यत्वेन तत्र क्षित्याद्यन्योन्याभावानां न निवेशो-ऽर्थत्वात् तथापि जन्यत्वशरीरजन्यत्वावच्छिन्नप्रतियोगिताकावतिरिक्तावेवाभावाविति न तत्र बह्वल्पभावसम्भव इत्यत्र तात्पर्य्यमिति ।

विदुषां निवहैरिहैकमत्या
यददुष्टं निरटङ्कि यच्च दुष्टम्
मयि जल्पति कल्पनाधिनाथे
रघुनाथे मनुतां तदन्यथैव ॥

इति महामहोपाध्याय श्रीरघुनाथभट्टाचार्य्यशिरोमणि विरचिता
अनुमानमणिदीधितिः समाप्ता ।

# कुसुमाञ्जलिः

श्रीमदुदयनाचार्य्यविरचितः



श्रीहरिदासभट्टाचार्य्यकृतव्याख्यानसहितः ।



संस्कृतयन्त्रे मुद्रितः ।

कलिकाता

शकाब्दाः १७६८

कुसुमाञ्जलिः ।



## प्रथमः स्तवकः ।

ईषदीषदनधीतविद्यया तातमातृमुदमाविवर्द्धयन् ।
चेपणाय भवजन्मकर्म्मणां कोऽपि गोपतनयो नमस्यते ।

इष्टदेवतासङ्कीर्त्तनं ब्रह्मप्रतिपादकसच्छब्दप्रयोगात्मकञ्च मङ्गलं कुर्व्वन् ग्रन्थनामाह ।

सत्पक्षप्रसरः सतां परिमलप्रोद्बोधबद्धोत्सवो
विम्लानो न विमर्द्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः ।
ईशस्यैष निवेशितः पदयुगे भृङ्गायमाणं भ्रम-
च्चेतोमे रमयत्वविघ्नमनघन्यायप्रसूनाञ्जलिः ॥ १ ॥

एषः अनघोनिर्द्दोषः न्यायः समस्तरूपोपपन्नलिङ्गप्रतिपादकं वाक्यं स एव कुसुमाञ्जलिः मे मम चित्तं रमयतु दुःखसामग्रीविहीनं करोतु । अनघत्वं शब्ददोषरहितत्वं विषयाशुद्धेः पूर्व्वाद्द्धेनैव निरासादिति प्रकाशः । अविघ्नं यथा स्यात् ईशस्य पदयुगे पद्यते ऽनेनेति व्युत्पत्त्या पदं प्रत्यायकं तद्युगं प्रमाणतर्कस्वरूपं तत्र निवेशितः तद्विषयतया उत्पादितः । चेतः कीदृशं भृङ्गायमाणं भृङ्ग इव मकरन्दे दुःखविगमोपाये सतृष्णं भ्रमत् दुःखविगमोपायमनुसन्दधत् । प्रसूनाञ्जलिसाम्यमाह सदित्यादि सता समीचीनेन पक्षेणानुकूलेन रविकिरणादिना प्रसरोविकाशोयस्य स तथा सतां पक्षाणां

दलानां विकाशो यत्र स तथेति वा सतामनुपहतघ्राणानां परिमलस्य गन्धविशेषस्य प्रोद्बोधेन साक्षात्कारेण बद्ध उत्सव आनन्दो येन सः विमर्द्दने करपुटविमर्द्दने न विम्लानः नान्यथाभूतसंस्थानः अमृत तुल्यं रसं प्रस्यन्दते इति प्रस्यन्दः एतादृशं माध्वीकं मधु तस्य भूरुत्पत्तिस्थानम्। न्यायपक्षे सति प्रामाणिके पक्षतावच्छेदकविशिष्टे पक्षे सिषाधयिषितसाध्यके धर्म्मिणि प्रसरः प्रकर्षेण सरो ज्ञानं यस्मात्। एतेनाश्रयासिद्धिस्वरूपासिद्धिबाधनिरासः। सतां विवेचकानां परि सर्वतोभावेन मलः सम्बन्धोव्याप्तिस्तस्याः प्रोद्बोधेन प्रमया बद्ध उत्सव आनन्दो येन। एतेन व्यभिचारव्याप्यत्वासिद्धि विरोधानां निरासः। विमर्द्दने विरोधिप्रमाणचिन्तायां न म्लानः न कार्य्याक्षमः तेन सत्प्रतिपक्षराहित्यम्। अमृतं मोक्षः रस इष्यमाणं क्षुद्धिहित इति न्यायात् प्रस्यन्दमुत्पद्यमानं तेन मोक्षस्या साध्यता निराकृता तदेव माध्वीकं तस्य भूरुत्पत्तिस्थानम्। १॥

नन्वीश्वरपदयुगनिवेशितस्य न्यायस्य मोक्षरूपफलसम्बन्धे माना-भावः तत्त्वज्ञानविषयात्मबोधकात्मशब्दस्य संसारनिदानमिथ्याज्ञान विषयस्वात्ममात्रपरत्वात् तन्मननस्यैव मोक्षोपायत्वादिति शङ्कायामाह।

स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः।
यदुपास्तिमसावत्र परमात्मा निरूप्यते। २॥

स्वर्गापवर्गयोः स्वर्गतुल्ययोः अपवर्गयोर्जीवन्मुक्तिपरममुक्त्योः। ईश्वरमननस्यादृष्टद्वारा स्वात्मसाक्षात्कारद्वारा वा मुक्तौ हेतुत्व मेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति श्रुतिस्तत्कारणत्वे मानम्। स्वात्मसाक्षात्कारस्य मोक्षहेतुत्वे मानञ्च यदात्मानं विजानीयादहमस्मीति पूरुषः। किमिच्छन् कस्य कामाय संसार मनुसंसरेदिति। २॥

इह यद्यपि यं कमपि पुरुषार्थमर्थयमानाः शुद्धबुद्धस्वभाव इत्यौपनिषदाः आदिविद्वान् सिद्ध इति कापिलाः क्लेशकर्म्मविपाकाशयैरपरामृष्टो निर्म्माणकायमधिष्ठाय सम्प्रदायप्रद्योतकोऽनुग्राहक श्चेति पातञ्जलाः लोकवेदविरुद्धैरपि निर्लेपः स्वतन्त्र इति महापाशुपताः शिव इति शैवाः पुरुषोत्तम इति वैष्णवाः पितामह इति पौराणिकाः यज्ञपुरुष इति याज्ञिकाः सर्व्वज्ञ इति सौगताः । निरावरण इति दिगम्बराः उपास्यत्वेन देशित इति मीमांसकाः लोकव्यवहार सिद्ध इति चार्व्वाकाः यावदुक्तोपपन्न इति नैयायिकाः किं बहुना यं कारवोऽपि विश्वकर्म्मेत्युपासते तस्मिन्नेवं जातिगोत्रप्रवरचरणकुल धर्म्मादिवदासंसारं सुप्रसिद्धानुभवे भगवति भवे सन्देह एव कुतः, किं निरूपणीयं तथापि न्यायचर्च्चेयमीशस्य मननव्यपदेशभाक् । उपासनैव क्रियते श्रवणानन्तरागता । श्रुतो हि भगवान् बहुशः श्रुति स्मृतीतिहासपुराणादिषु इदानीं मन्तव्यो भवति श्रोतव्यो मन्तव्य इति श्रुतेः आगमेनानुमानेन ध्यानाभ्यासरसेन च । त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तममिति स्मृतेश्च । तदिह संक्षेपतः पञ्चतयी विप्रतिपत्तिः अलौकिकस्य परलोकसाधनस्याभावात् अन्यथापि पर लोकसाधनानुष्ठानसम्भवात् तदभावावेदकप्रमाणसम्भवात् सत्वेऽपि तस्याप्रमाणत्वात् तत्साधकप्रमाणाभावाच्चेति । २ ॥

शुद्धो द्वितीयरहितः बुद्धो बोधस्वरूपः आदौ सर्गादौ विद्वान् चिद्रूपः सिद्धः अष्टविधैश्वर्य्यवान् अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः कर्म्म धर्म्माधर्म्महेतुर्यागहिंसादिः जात्यायुर्भोगाविपाकाः धर्म्माधर्म्मौ आशयाः निर्म्माणार्थं कायो निर्म्माणकायः सम्प्रदायो वेदः प्रद्योतक इति प्रकाशकः वेदस्य नित्यत्वात् घटादौ कर्त्तव्येऽनुग्राहकः शिवयिता शिवो निस्त्रैगुण्यः पितामहो जनकस्यापि जनकः इज्यते इति यज्ञः सर्व्वज्ञः क्षणिकसर्व्वज्ञ आवरण मविद्यारागद्वेष

मोहाभिनिवेशाः उपास्यत्वेन देशितामन्वादिः यावदुक्तेषु यदुपपन्नं तेनोपपन्नः चरमां शाखा । शाब्दसिद्धावप्यनुमित्सयानुमितेर्न संशया-सत्त्वं दोषाय । तुष्यत्विति न्यायेन संशयमाह तदिहेत्यादि । ३ ॥

धर्म्माधर्म्मात्मकालौकिकपरलोकसाधने विप्रतिपन्नं प्रति साधनं सिद्धे च तस्मिन् तदधिष्ठातृतया ईश्वरसिद्धिः अचेतनस्य कारणस्य सचेतनाधिष्ठानेनैव कार्य्यजनकत्वात् तत्साधनायाह ।

सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः ।
प्रत्यात्मनियमाद्भुक्तेरस्ति हेतुरलौकिकः । ४ ॥

अलौकिकोऽतीन्द्रियः परलोकहेतुरस्तीति प्रतिज्ञा तत्र प्रथमतः कारणसामान्यसाधनाय सापेक्षत्वादिति सापेक्षत्वं कादाचित्कत्वं तथाच कार्य्यं सहेतुकं कादाचित्कत्वात् भोजनजन्यतृप्तिवत् । ननु घटादिहेतोः सदातनत्वे घटादेरपि सदातनत्वापत्तिः तथा च तस्य कादाचित्कत्वं वाच्यम् एवं तत्कारणपरम्परापि कादाचित्की सहेतुका वाच्या इत्यनवस्थायामुक्तमनादित्वादिति वीजाङ्कुरवत् प्रामाणिकीय मनवस्था न दोषायेत्यर्थः । ननु ब्रह्मैव कारणमस्तु किं वा नाना-बुद्ध्यात्मिका प्रकृतिरेव तथास्त्वित्यत आह वैचित्र्यादिति कार्य्यं वि-चित्रकारणवत् विचित्रकार्य्यत्वात् । ननु दृष्टं यागाद्येव कारण मस्तु किमदृष्टेनेत्यत आह विश्ववृत्तितइति विश्वेषां परलोकार्थिनां यागादौ प्रवृत्तितः स्वर्गादिफलकत्वज्ञानमेव यागादिप्रवृत्तिजनकं यागादेश्च तज्जनकत्वं तत्कालावस्थायिव्यापारं विना न सम्भवतीति अदृष्टसिद्धिः । नन्वदृष्टं न भोगसमानाधिकरणं किन्तु भोग्यनिष्ठ-त्वेनैव भोगजनकमित्यत आह प्रत्यात्मनियमादिति भुक्तेर्भोगस्य प्रतिनि-यतात्मवृत्तित्वात् व्यधिकरणादृष्टस्य भोगजनकत्वेऽतिप्रसङ्गात् । ४ ॥

अकस्मादेव भवति न किञ्चिदपेक्ष्य कार्य्यमिति अतएवानिमि-त्ततोभावोत्पत्तिः कण्टकतैक्ष्ण्यादर्शनादिति पूर्व्वपक्षसूत्रं तत्राह ।

हेतुभूतिनिषेधोन स्वानुपाख्यविधिर्न च।
स्वभाववर्णना नैवमवधेर्नियतत्वतः। ५ ॥

अकस्मादिति किं हेतुनिषेधपरं भवननिषेधपरम् अतिरिक्तपारमार्थिकहेतुनिषेधपरं वा अत्रोभयत्राहेतुकत्वमलीकहेतुकत्वं वा पर्य्यवस्यति स्वभावादित्यर्थपरं वा स्वं कार्य्यम् अनुपाख्यमलीकम् अवधेर्नियतत्वतः नियतावधिककार्य्यदर्शनात् अनियतावधिकत्वे च कादाचित्कत्वव्याकोप इति भावः। ५ ॥

नन्वनादिश्चेत् कार्य्यकारणप्रवाहः कादाचित्कत्वान्यथानुपपत्त्या कल्प्यस्तदा वह्नित्वावच्छिन्नस्य तृणादिव्यभिचारितया तृणाद्यकारणत्वे कादाचित्कत्वव्याकोपः कारणान्तरस्य च वक्तुमशक्यत्वात् तत्र वह्न्यनुकूलैकशक्तिमत्त्वेन कारणता शक्तिश्च पदार्थान्तरं प्रतिव्यक्ति नाना अनित्ये अनित्या नित्ये नित्यैव सा शक्तिरनित्ये भावहेतुजा इति तत्सिद्धान्तात्। वह्न्यनुकूला तृणारणिमणिनिष्ठा शक्तिर्नित्येति तु मतान्तरम्। न्यायमतन्तु तृणादिजन्यतावच्छेदकं वैजात्यमेव विजातीयेष्वेकजातीयकार्य्यानुकूलशक्तिकल्पने धूमादिना वह्न्यनुमानं न स्यात् न स्याच्च तृणफुत्कारसमवधानस्य निर्म्मन्थनारणिसमवधानस्य प्रतिफलितरविकिरणमणिसमवधानस्य च प्रतिनियमः कारणतावच्छेदकावच्छिन्नस्यैव कारणतावच्छेदकान्तरावच्छिन्नसमवधाने कार्य्यजननस्य दृष्टत्वात् फुत्कारमणिसम्बन्धादितोऽपि वह्न्यापत्तेः। यदि च तृणफुत्कारादिसम्बन्धादिषु वह्न्यनुकूला एका शक्तिः कल्प्यते तदा नैतत् समाधानं परन्तु तार्णवह्न्यादिनिष्ठं वैजात्यं प्रत्यक्षसिद्धं दीपत्वादिवदिति न पदार्थान्तरशक्तिकल्पनम्। अमुमर्थमाह।

प्रवाहो नादिमानेष न विजात्येकशक्तिमान्।
तत्त्वे यत्नवता भाव्यमन्वयव्यतिरेकयोः। ६ ॥

एष कार्य्यकारणप्रवाहः नादिमान् अनादिः विजातीयेषु तृणादिषु एकशक्तिमान् न प्रवाहः अन्वयव्यतिरेकयोरुभयत्र नियतत्वे निर्व्वाहो यत्नवता भाव्यं यतः कारणयोः वैजात्यं कल्पनीयमिति भावः। वह्निसामान्यं प्रति तु विजातीयोष्णस्पर्शवत्तेजः कारणम्। ६॥

ननु यथा एक एव दीपः आलोककारी वर्त्तिविकारकारी घटादिप्रकाशकारी च तथा एकमेव ब्रह्म किं वा कार्य्यकारणयोरभेदात् प्रतिपुरुषं विभिन्नबुद्धेरभिन्ना प्रकृतिरेव हेतुरस्तु तथाच नादृष्टाधिष्ठातृतयेश्वरसिद्धिरित्यत्राह।

एकस्य न क्रमः क्वापि वैचित्र्यञ्च समस्य न।

शक्तिभेदोन चाभिन्नः स्वभावो दुरतिक्रमः। ७॥

एकस्य कारणस्य नियमो न कार्य्याणां यतः समस्य एकजातीयकारणस्य परोऽन्यस्य न कार्य्याणां वैचित्र्यं वैजात्यं तथाच क्रमिककार्य्यनिर्व्वाहकतया क्रमिककारणसिद्धिः विजातीयकार्य्यजनकतयाच विचित्रहेतुसिद्धिरित्यर्थः। शक्तिभेदादेव सजातीयादेकस्मात् कार्य्यवैजात्यमिति शङ्कां निराकुरुते शक्तिभेदेन चाभिन्न इति चो हेतौ न शक्तिभेदः अभिन्नो यतः शक्तिशक्तिमतोरभेदात् भेदे च तस्यैव कारणत्वस्वीकारे एकमात्रकारणत्वभङ्गादैतापत्तिरित्यर्थः। ननु स्वभावादेव एककारणस्य विचित्रकार्य्यनिर्व्वाहकत्वमित्यत्राह स्वभावो दुरतिक्रम इति एकस्मिन् कार्य्ये जनयितव्ये यः स्वभावः कार्य्यान्तरजननकाले तस्यानुवृत्तौ दहनस्यापि जलादित्वं स्यात् स्वभावस्य दुरतिक्रमत्वादित्यर्थः। प्रदीपस्थले तत्तत्कार्य्यसामग्रीभेदकल्पनादिति भावः। ७॥

ननु दण्डादिर्घटादौ हेतुरस्तु न तु यागादिः स्वर्गादिहेतुरित्यत्राह।

विफला विश्ववृत्तिर्नो न दुःखैकफलापि वा।

दृष्टलाभफला वापि विप्रलम्भोऽपि नेदृशः । ८ ॥

विश्वेषां परलोकार्थिनां स्वर्गाद्यर्थं यागादौ प्रवृत्तिर्व्विफला न न वा दुःखमात्रफलिका प्रवृत्तेरिष्टसाधनताधीसाध्यत्वात् न च दृष्टलाभफला पूजाख्यातिधनादिफला तन्निरपेक्षैरपि तदाचरणात् । केनचित् प्रतारकेण स्वर्गादिफलकतया यागादिकं प्रकल्प्य स्वयमनुष्ठाय धन्धितोलोकः प्रवर्त्तते इत्यत्र ह विप्रलम्भोऽपि नेदृशइति क एवं लोकोत्तरो यः परप्रतारणार्थं नानाविधक्लेशहेतुककर्म्मभिरात्मानमवसादयेत् तथाच यागादिप्रवृत्तिरेव स्वर्गादिफलकत्वे यागादेर्म्मानमिति । ८ ॥

ननु यागादिकं स्वर्गादिहेतुरस्तु नतु तज्जन्यादृष्टं तथेत्यत्राह ।

चिरध्वस्तं फलायालं न कर्म्मातिशयं विना ॥

सम्भोगोनिर्व्विशेषाणां न भूतैः संस्कृतैरपि । ९ ॥

चिरध्वस्तं यागादिकर्म्मातिशयं तत्फलानुकूलव्यापारं विना फलाय न अलं समर्थं चिरध्वस्तकारणस्य व्यापारद्वारैव हेतुत्वं यथा अनुभवस्य संस्कारद्वारकस्य स्मृतौ । ननु भोग्यनिष्ठमदृष्टं कारणमस्तु इति जिज्ञासायामाह सम्भोगइति निर्व्विशेषाणामदृष्टरूपविशेषगुणशून्यानाम् आत्मनां सम्भोगः प्रत्यात्मनियतोभोगः संस्कृतैरपि अदृष्टवत्तया स्वीकृतैरपि भूतैर्न स्यात् भूतानां शरीरादीनां सर्व्वात्मसाधारण्यात् तददृष्टाकृष्टैरेव शरीरेन्द्रियादिभिस्तद्भोगजननादित्यर्थः । ९ ॥

ननु भोग्यादिनिष्ठोधर्म्मविशेषोऽतीन्द्रियः प्रतिनियतभोगादिनियामकोऽस्तु यथा दाहादिनियामकोवह्न्यादिनिष्ठः शक्तिभेदः अन्यथा तादृशादेव करतलानलसंयोगात् सति प्रतिबन्धके दाहापत्तेः । नच मण्याद्यभावएव कारणमस्त्विति वाच्यं कारणत्वस्य भावत्वव्याप्तत्वात् किन्तु शक्तिनाशं करोतीति मण्यादिः प्रतिबन्धक

उच्यते तथापि शक्तिः स्वीकार्य्या इत्यत आह ।

भावो यथा तथाभावः कारणं कार्य्यवन्मतः ।
प्रतिबन्धोविसामग्री तद्धेतुः प्रतिबन्धकः ॥ १० ॥

यथान्वयव्यतिरेकादिना अभावोध्वंसः कार्य्यः तथा कारणमपि कारणत्वं भावत्वव्याप्तमित्यस्याप्रयोजकत्वात् । अकिञ्चित्करस्य प्रतिबन्धकत्वानुपपत्तिरित्यत्राह प्रतिबन्धइति विसामग्री कारणाभावः स च प्रकृते मण्याद्यभावस्याभावोमण्यादिस्तत्समवधानहेतुः पुरुष एव प्रतिबन्धकः स्वार्थे कप्रत्ययेन च मण्यादौ प्रतिबन्धकपदप्रयोग इति भावः । मीमांसकास्तु उत्तेजकाभावकूटविशिष्टमण्यभावत्वेन हेतुत्वे गौरवात् लाघवाच्छक्तिर्नित्या वह्न्यादौ कल्प्यते प्रतिबन्धके सति शक्तिकुण्ठनम् । यत्तु शक्तिः प्रथमतोवह्निकारणजन्या वह्निनिष्ठा प्रतिबन्धकेन च तस्या विनाशे उत्तेजकेन च पुनर्जननं न च शक्तेरनियतहेतुकत्वमिति वाच्यं शक्त्यनुकूलशक्तिमत्त्वेन कारणत्वादिति तन्न वह्निनिष्ठनानाशक्तिकल्पनापेक्षया उत्तेजकाभावविशिष्टमण्यभावस्यैकस्यैव वरं हेतुत्वौचित्यात् तथाचाकुण्ठितशक्तिरेव तत्र कारणतावच्छेदिका कल्प्यते इत्याहुः तन्न शक्तिकुण्ठने प्रतिबन्धकस्य हेतुत्वमुत्तेजकस्य कुण्ठितत्वविनाशकत्वमित्याद्यनन्तशक्तिकल्पनापत्तेरिति दिक् । १० ॥

ननु व्रीहीन् प्रोक्षति व्रीहीन् वहन्ति इत्यत्र प्रोक्षणजन्यः कालान्तरभाव्यवघातजनकोव्यापारो व्रीहिनिष्ठः कल्प्यते प्रोक्षिता एव व्रीहयोऽवघाताय कल्पन्तइति वाक्यशेषात् । किञ्च योयदुत फलार्थितया क्रियते स तन्निष्ठफलजनकव्यापारजनकः यागवत् किञ्च व्रीह्यादीनामापरमाणवन्तभङ्गे व्रीह्यादिनियमानुपपत्तिः । एवं माघकर्षणादिना भूमिनिष्ठा कृषिजन्या शक्तिर्निर्व्वाच्या ।

अत्रोत्तरम् ।

संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः ।
स्वगुणाः परमाणूनां विशेषाः पाकजादयः ॥ ११ ॥

प्रोक्षणादिभिः संस्कारोऽदृष्टं पुंसः पुंसि इष्टः स्वीकृतः प्रति तोहि नानाशक्तिकल्पनापेक्षया एकस्यैव दृष्टस्यात्मनिष्ठस्य प्रोक्षणादिजन्यस्य लाघवेन कल्पनात् दृष्टद्वाराभावे सति विहितस्य कालान्तरभाविफलानुकूलस्य धर्म्मजनकत्वकल्पनाच्च संस्कृता व्रीहि रितिप्रत्ययबलाच्च तस्य स्वरूपसम्बन्धेन व्रीहिनिष्ठत्वं कल्प्यं एतेनाभिमन्त्रितव्यञ्जनादयोऽपि तत्तत्फलानुकूलमदृष्टं पुरुष दि निष्ठं व्रीहीनिति च शक्नुन् प्रोक्षति इत्यादाविव प्रोक्षणादिजन्य जलसंयोगादिरूपपरसमवेतक्रियाजन्यफलशालितया कर्म्मता । यो यद्गतफलार्थितया क्रियते स तन्निष्ठफलजनक इति च शत्रुनिष्ठ बधाद्यर्थक्रियमाणश्येनादौ स्वनिष्ठफलजनके व्यभिचारि । यवाद्युत्पत्तिनियमार्थमाह स्वगुणाः परमाणूनां पाकजादयो विशेषा विशेषकाः तेन पाकजरूपरसादिविशिष्टाः परमाणवस्तत्तत्कार्य्यमारभन्ते । चिकित्सास्थले तु धातुसाम्यमेव भेषजपानस्य रोगादिनाशफले जनयितव्ये द्वारमितिभावः ॥ ११ ॥

ननु यत्र पाकजेन विशेषस्तत्र वास्त्वादौ कथमुद्भूतस्पर्शादि कर कादौ च प्रतिरुद्धं द्रवत्वमिति कथञ्च प्रतिमादौ प्रतिष्ठादेरुपयोगः तथाच प्रतिष्ठाजन्या शक्तिश्चाण्डालादिस्पर्शेनाश्या पूज्यताप्रयोजिका स्वीकार्य्या इत्यत आह ।

निमित्तभेदसंसर्गादुद्भवानुद्भवादयः ।
देवताः सन्निधानेन प्रत्यभिज्ञानतोऽपि वा ॥ १२ ॥

निमित्तभेदः अदृष्टभेदः देवताः प्रतिष्ठाविधिना सन्निधानेनाहङ्कारममकारादिना आराधनीयतामासादयन्ति प्रतिष्ठाविधिना देवतानां प्रतिमादौ अहङ्कारममकारौ चाण्डालादिस्पर्शे च तादृशा-

भिमानाभावः देवताचैतन्यविवादेऽपि यथार्थपूजितत्वघीश्च प्रतिष्ठित त्वधीश्च चण्डालादिस्पर्शाभावविशिष्टा पूज्यतानियामिका तत्र चोपयोगिनी प्रतिष्ठा। वस्तुतस्तु प्रतिष्ठाकालीनयावदस्पृश्यस्पर्शनादिसंसर्गाभावः प्रतिष्ठाध्वंसकालीनः पूज्यताप्रयोजकः प्रतिष्ठितं प्रपूजयेदितिवाक्ये न प्रतिष्ठाध्वंसस्यैव प्राप्तेरिति दिक् ॥ १२ ॥

ननु तुलापरीक्षादौ परीक्षाविधिना शक्तितुलादौ जन्यते तथा गमनोन्नमनादिकं फलं जन्यते इत्यत आह।

जयेतरनिमित्तस्य वृत्तिलाभाय केवलम्।
परीक्ष्यसमवेतस्य परीक्षाविधयो मताः ॥ १३ ॥

जयवदितरः पराजयः तन्निमित्तस्यादृष्टस्य परीक्षणीयसमवेतस्य वृत्तिलाभाय फलानुकूलसहकारिलाभाय परीक्षाविधियो मताः स्वीकृताः। योऽहमनेन परीक्षाविधिना तुलामारूढः सोऽहं पापवान् निष्पापो वेति ज्ञानं सहकारि यदा वृत्तिलाभाय जननाय तथाच प्रतिज्ञानुरूपां शुद्धिमपेक्ष्य धर्म्मोऽशुद्धिमपेक्ष्याधर्म्मो जन्यते। एतेन ब्रह्मवधाकरणादिना पुण्यस्याजननात् कथन्तस्य सहकारि तादृशज्ञानं स्यादित्यपि परास्तम् ॥ १३ ॥

साङ्ख्यास्तु पुरुषश्चैतन्याश्रयः अकार्य्यः अतएव कूटस्थो नित्यः प्रकृतिश्चाचेतना परिणामिनी नित्या एका प्रकृतेश्च प्रथमं परिणामो बुद्धिर्म्महत्तत्त्वं तस्याष्टौ धर्म्माः ज्ञानाज्ञानैश्वर्य्यानैश्वर्य्यवैराग्यावैराग्यधर्म्माधर्म्मरूपाः बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्म्माधर्म्मास्त्वष्टौ वा भावनायास्तैरनङ्गीकारात् अनुभवस्यैव स्मृतिकाले सूक्ष्मतयावस्थानात् अचेतनायाः प्रकृतिकार्य्याया बुद्धेश्चैतन्याभिमानान्यथानुपपत्त्या स्वाभाविकचैतन्यस्वरूपः पुरुषः सिद्धः धर्म्मधर्म्मिणोरभेदात्। तत्र प्रकृतेर्म्महान् महतोऽहङ्कारस्तस्माद्रूपरसगन्धस्पर्शशब्दतन्मात्राणीति सप्त चक्षुःश्रवणत्वग्घ्राणरसनाख्यमनांसि वाक्पाणिपादपायूपस्थानि

इन्द्रियाणि तन्मात्रैः पञ्च महाभूतानि पृथिव्यप्तेजोवाय्वाकाशानि जायन्ते। तदुक्तम्। मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोड़शकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः। पञ्च महाभूतान्येकादशेन्द्रियाणि चेति षोड़श चैतन्यस्य नित्यस्य स्वाभाविकत्वे नित्यविषयावच्छिन्नस्वाभाव्येऽनिर्म्मोक्षः स्यात् प्रकृत्यधीनत्वेऽपि विषयावच्छेद्यत्वस्य प्रकृतेर्नित्यतया तथैवानिर्म्मोक्षप्रसङ्गः घटादेरनित्यस्यापि स्वाभाविकचैतन्यावच्छिन्नत्वे दृष्टादृष्टविभागानुपपत्तेश्च इन्द्रियमात्रापेक्षायदि विषयचैतन्यावच्छेदस्तथापि व्यासङ्गानुपपत्तेरतोमनः स्वीकार्य्यं यत्सम्बन्धेन इन्द्रियस्य विषयीयचैतन्यावच्छेदनियामकत्वं स्वप्नदशायां व्याघ्रत्वाभिमानिनोनरोऽहमित्यभिमानः अतस्तन्नियमाय नियतविषयाभिमानव्यापारको ऽहङ्कारोऽपि स्वीकार्य्यः जाग्रत्स्वप्नसुषुप्तिषु श्वासप्रश्वासदर्शनात् सव्यापारं यदनुवर्त्तते तद्बुद्धितत्त्वं प्रागुक्तभावाष्टकयोगि स्वीकार्य्यं तस्य ज्ञानरूपपरिणामेन सम्बद्धोविषयः पुरुषस्य स्वरूपतिरोधायकः एवञ्च बुद्धितत्त्वनाशादेव विषयावच्छेदाभावात् पुंसोमोक्षः भेदाग्रहाच्च चेतनोऽहं करोमीत्यभिमानः। तदुक्तं प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः। अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते इति। सा च बुद्धिरंशत्रयवती पुरुषोपरागः विषयोपरागः व्यापारावेशश्च ममेदं कर्त्तव्यमित्यत्र ममेति चेतनोपरागः बुद्धिचेतनयोर्भेदाग्रहात् अतात्त्विकः इदमिति विषयोपरागः तदुभयायत्तोव्यापारावेशो बुद्धावारोपितचैतन्यस्य विषयेण सम्बन्धः ज्ञानं ज्ञानेन सम्बन्धश्चेतनोऽहं करोमीत्युपलब्धिरित्याहुः। अत्राह।

कर्त्तृधर्म्मा नियन्तारश्चेतिता च स एव नः।
अन्यथानपवर्गः स्यादसंसारोऽथ वा ध्रुवः॥ १४॥

कृतिसमानाधिकरणास्तावद्धर्म्माधर्म्मादेश्वराः भोगस्य कृति

सामानाधिकरण्यात् एवञ्चेतिता चेतनः स एव कृतिमानेव नोऽस्माकं मतः चेतनोऽहं करोमीतिप्रत्ययबलात्। दूषणान्तरमाहान्यथेति यदि बुद्धिर्नित्या तदा बुद्ध्युपहितात्मनः सर्व्वदावस्थानात् अनिर्म्मोक्षः स्यात् यद्यनित्या तदोत्पत्तौ वाच्या अनित्यभवस्यानुत्पन्न्यभावात् तथाच तदुत्पत्तेः प्राक् तदाश्रयधर्म्मादेरप्यभावेन बुद्धितत्त्वस्यानुत्पत्तौ नियतशरीरेन्द्रियादिकार्य्यानुत्पत्तौ असंसारः स्यादित्यर्थः ॥ १४ ॥

चार्व्वाकस्तु भवतु चेतनधर्म्मोऽदृष्टं चेतनस्तु न नित्यविभुः किन्तु कायाकारपरिणतभूतविशेषः गौरोऽहं जानामीति प्रतीत्या रूपवत्त्वसिद्धेरित्यत आह ।

नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात् ।
वासनासंक्रमोनास्ति न च गत्यन्तरं स्थिरे ॥ १५ ॥

शरीरस्य चैतन्ये वाल्यदशायामनुभूतस्य यौवने स्मरणं न स्यात् चैत्रदृष्टस्य मैत्रेणास्मरणमिव। न च वाल्ययौवनयोरेकं शरीरम् अपक्रमात् विनाशात् परिमाणभेदेन द्रव्यभेदात् गुर्व्वपरिमाणनाशस्याश्रयनाशहेतुत्वात्। न च कारणेनानुभूतस्य कार्य्येण स्मरणं स्यादिति वाच्यं वासनासंक्रमाभावात् अन्यथा मात्रानुभूतस्य गर्भस्थेन स्मरणापत्तेः। नन्वादानवासनाया उपादेये संक्रमः स्यादित्यत आह न च गत्यन्तरं स्थिरइति स्थिरे स्थिरपक्षे पुञ्जात् पुञ्जान्तरोत्पत्तेरभावात् करादिशरीरस्योपादानं वाच्यं विच्छिन्नकरादौ तदनुभूतस्य स्मरणं न स्यात् खण्डशरीरे विच्छिन्नकरादेरनुपादानत्वात्। न च परमाणूनां चैतन्यं तेषाञ्च स्थिरत्वात् स्मरणं स्यादिति वाच्यं तथा सति स्मरणस्यातीन्द्रियत्वप्रसङ्गात् तन्निष्ठरूपादिवत् करपरमाणवनुभूतस्य विच्छिन्नकरपरमाणवसन्निधावस्मरणप्रसङ्गाच्च ॥ १५ ॥

नन्वस्तु क्षणभङ्गः तथाच पूर्व्वपूर्व्वपरमाणुपुञ्जेनोपादेयोत्तरोत्तरपरमाणुपुञ्ज इति न स्मरणानुपपत्तिरित्यत आह ।

न वैजात्यं विना तत् स्यात् न तस्मिन्ननुमा भवेत्।
विना तेन न तत्सिद्धिर्नाध्यक्षं निश्चयं विना ॥ १६ ॥

वैजात्यं कुर्व्वद्रूपत्वं न तत् क्षणिकत्वं स्यात् सिद्ध्यतीत्यर्थः। स्थिर एव बीजादौ सहकारिलाभालाभाभ्यामेव कार्य्यजन्माजन्मनोरुपपत्तेः बीजत्वादिनैवाङ्कुरादिजनकतोपपत्तेः बीजव्यक्तिभेदाभावे कुतः क्षणिकत्वं स्यात् तस्मिन् जातिविशेषे च ऐन्द्रियकवृत्तावतीन्द्रियत्वेनाभ्युपगम्यमाने सत्यनुमानं न स्यात् धूमकुर्व्वद्रूपवह्नित्वादिनैव वह्न्यादेर्हेतुतया विलक्षणकार्य्यजनकत्वेन सम्भावितस्य विजातीयधूमस्येव वह्निजन्यत्वसम्भावनायां धूमसामान्ये हेतुत्वानिर्णयात् तथा च कार्य्यकारणभावरूपविपक्षबाधकतर्काधीनव्याप्तिनिर्णयस्यासम्भवेनानुमानमात्रोच्छेदप्रसङ्ग इति तेनानुमानेन विना क्षणिकत्वस्यासिद्धिः तस्यानुमानैकगम्यत्वात्। न च तत्र प्रत्यक्षमेव मानमिति वाच्यं निर्व्विकल्पकस्यैव तन्मते विषयजन्यतया प्रामाण्यं तस्य च सविकल्पकोन्नेयतया क्षणिक इति सविकल्पकस्यासिद्धावसिद्धेः। किञ्चाङ्कुरकुर्व्वद्रूपत्वं न जातिः शालित्वादिना सङ्करात् शालित्वमपहाय यवे तस्य सत्त्वात् शालित्वस्य कुसूलस्थे शालौ तदपहाय सत्त्वात् कुर्व्वद्रूपे शालौ तूभयोः समावेशादिति अतएव रजतत्वादिव्याप्य नाव घटत्वं विजातीयसंस्थानवदवयवकत्वरूपमुपाधिमादाय घट इत्यनुगतधीरिति ॥ १६ ॥

नन्वस्तु क्षणिके सन्देहः न च प्रत्यभिज्ञाबलेन स्थैर्य्यसिद्धौ कथं स इति वाच्यं स एवायं घट इत्यत्र सन्देहसत्त्वात् अत आह।

स्थैर्य्यदृष्टेर्न सन्देहो न प्रामाण्ये विरोधतः।
एकतानिर्णयेनेन क्षणे तेन स्थिरे मतः ॥ १७ ॥

स्थैर्य्ये न सन्देहस्तस्य प्रत्यभिज्ञया विषयीकरणात् नच प्रत्यभिज्ञानरूपे तस्य तदन्यव्यवसायेन निर्णयात् प्रामाण्यमात्रेऽपि

न सन्देहः विरोधात् तथाहि सन्देहज्ञानस्य प्रामाण्यसन्देहे सन्देह स्याप्यसिद्धेः प्रामाण्यस्यासिद्धौ प्रामाण्यसंशयस्याप्यभावः कोव्य-निर्णयात् । ननु प्रत्यभिज्ञायाः प्रामाण्यसंशयः लूनपुनर्जातकेशादौ तएवामी केशा इत्यादेर्भ्रमत्वदर्शनात् तत्राह एकतेति येन प्रमाणेन विरुद्धधर्म्मसंसर्गविरहेण क्षणिके घटे यदि तस्मिन्नेव क्षणे न नानात्वं किन्त्वभेदः तदा स्थिरत्वेऽपि नानाक्षणवर्त्तित्वेऽपि घटस्य न नानात्वं किन्त्वेकत्वम् एकस्य ज्ञानस्य नानाविषयसम्बन्धवत् एकस्य नानाकालसम्बन्धेऽपि अविरोधात् तत्तत्कारणक्रमाधीनत्वात् तत्तत्-कालसम्बन्धस्य ॥ १७ ॥

तदेवं परलोकसाधनमागतं तत्रेदं शङ्कते कारणत्वं स्वाभाविक मौपाधिकं वा आद्ये नीलस्य सर्व्वान् प्रति नीलत्ववत् कारणस्य सर्व्वान् प्रत्यविशेषात् कारणत्वमपि स्यात् द्वितीये उपाधेरपि स्वाभाविकत्वे तद्दोषतादवस्थ्यात् औपाधिकत्वेऽनवस्था किञ्च कारण-त्वस्य स्वाभाविकत्वे उत्पत्तेरारभ्य कार्य्यं स्यात् तत्राह ।

हेतुशक्तिमनादृत्य नीलाद्यपि न वस्तुसत् ।
तद्युक्तं तत्र तच्छक्तमिति साधारणं न किम् ॥ १८ ॥

हेतुशक्तिः कारणत्वं अनादृत्य अनिश्चित्य नीलाद्यपि न वस्तु-सत् न प्रमाणिकं तथाच यत्पारमार्थिकं तत् साधारणं यथा नीलादि कारणत्वञ्च यदि न साधारणम् अतो न परमार्थसदित्यपि स्यात् दृष्टान्तस्यानित्यस्य नीलस्य कारणत्वस्वीकारेण सर्व्वत्राभावात् नि-त्यस्य नीलादेः प्रमाणागोचरत्वात् । किञ्चेत्याद्युक्तं दूषयति तद्युक्त मिति तद्युक्तं सहकारियुक्तं तत्कारणं तत्र कार्य्ये संशक्तमितिनोत्प त्तेरारभ्य कारणत्वम् । कारणत्वस्य साधारण्ये चेष्टापत्तिमाह इति साधारणं न किमिति नीलादेरपि सर्व्वसाधारण्यं यत् सर्व्वैस्तथा नीलत्वादिना व्यवह्रियमाणत्वं तादृशञ्च साधारण्यं सहकारियुक्तस्य जनकत्वमित्यस्यापि तथाव्यवहारस्य सर्व्वसिद्धत्वात् ॥ १८ ॥

नन्वप्रतिष्ठमदृष्टं नाप्यजन्यं नित्यविभोस्तस्य कालादेरिवास्य व्यतिरेकाभावात् व्यतिरेकसहकृतान्वयस्यैव कारणतायाहकत्वात् तद्व्यतिरेकप्रयोजकव्यतिरेकप्रतियोगित्वस्यैव कारणतात्मकत्वाच्च तथाच समावायिकारणाभावे असमवायिकारणनिमित्ताभ्यामपि न कार्य्यं जननीयं तत्प्रत्यासन्नाभ्यामेव ताभ्यां जननादित्यदृष्टस्य नित्यत्वापत्तिः तथाच न प्रतिनियतात्मदेशकालीनभोगजनकत्वं कल्प्येतेत्यत आह ।

पूर्व्वभावो हि हेतुत्वं मीयते येन केनचित् ।
व्यापकस्यापि नित्यस्य धर्म्मिधीरन्यथा नहि ॥ १९ ॥

व्यतिरेकगर्भं न कारणत्वं किन्त्वनन्यथासिद्धनियतपूर्व्ववर्त्ति-भावः । हि हेतौ यतोग्राहकेन व्यतिरेकः धर्म्मिग्राहकमानेनापि तस्य प्रमापणात् इत्यतोमीयते येन केनचिद्व्यापकस्य नित्यस्यात्मनः येन केनचित् प्रमीयते अन्यथा धर्म्मिधीरेव न स्यात् तथाच धर्म्मिग्राहकप्रमाणसिद्धं तस्य हेतुत्वं घटादिकं प्रति कपालादेरन्वयव्यतिरेकदर्शनात् समवेतकार्य्यं प्रति द्रव्यस्य द्रव्यत्वेन कारणत्वस्य कल्पनात् पृथिव्यादिबाधे परिशेषेण ज्ञानेच्छादौ पृथिव्यादिभिन्नसमवायिनः सिद्धिः वस्तुतः समवायिकारणताघटकोऽन्योन्याभावः यन्न कपालं तन्न घटवत् यान आत्मा न तत्र ज्ञानादिरिति धीसम्भवात् एवं यान कपालस्तत्र सम्बन्धविशेषेण न घट इति निमित्त कारणस्याधिकरणीभूतस्य कारणताप्यन्वयव्यतिरेकेण ग्राह्या एवञ्च मायाप्रकृत्यादिपदमेतत्परमिति न मायिकं जगदित्यादिश्रुतिविरोधः तथाचादृष्टाधिष्ठातृतया ईश्वरसिद्धिः ।

स्तबकार्थसंग्राहकश्लोकमाह ।

इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो
मूलत्वात् प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता ।

देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः
साक्षात् साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम ॥२०॥

इति प्रथमः स्तबकः ।

इति स्तबकसमाप्तौ यच्चेशस्य सहकारिशक्तिः कारणं यथा सहकारिरूपा माया असत्त्वात् सर्वकार्यापेक्षणीयत्वात् दुर्ज्ञेयत्वात् साङ्ख्याभ्यासापदेऽदृष्टे लक्षणा मूलत्वात् प्रकृतिः सैव तत्त्वज्ञानप्रतिबन्धकत्वात् सैवाविद्या उदिता उक्ता असौ देवो मम मनसि स्वविषयां साक्षात् साक्षात्कारि ज्ञानं बध्नातु जनयतु साक्षितया साक्षीभूय निर्णायकतया साक्षिवं शान्तः रागादिगुणशून्यः प्रपञ्चस्य मिथ्याज्ञानादेः कल्लोलः मिथ्याज्ञानपरम्परा तस्याः कोलाहलः किं वदन्ती सा विरता यस्मादिति ॥ २० ॥

इति प्रथमस्तबकव्याख्यानम्

---

अन्यथापि परलोकसाधनानुष्ठानसम्भवादिति द्वितीयविप्रतिपत्तिः अन्यथा ईश्वरं विनापि परलोकसाधनं यागाद्यनुष्ठानं सम्भवति यागादेः स्वर्गसाधनत्वस्य वेदगम्यत्वात् नित्यनिर्दोषतया च वेदस्य प्रामाण्यं महाजनपरिग्रहाच्च प्रामाण्यस्य ग्रहइति वेदकारणतया नेश्वरसिद्धिः योगर्द्धिसम्पादितसार्व्वज्ञ्यकपिलादिपूर्व्वकएव वा वेदोऽस्त्वित्यत्राह ।

प्रमायाः परतन्त्रत्वात् सर्गप्रलयसम्भवात् ।
तदन्यस्मिन्ननविश्वासान्न विधान्तरसम्भवः ॥ १ ॥

शाब्दी प्रमा वक्तृयथार्थवाक्यार्थधीरूपगुणजन्या इति गुणाधारतया ईश्वरसिद्धिः। न तु सकर्तृकेऽस्तु यथार्थवाक्यार्थधीर्गुणः अकर्तृके च वेदे निर्दोषत्वमेव प्रामाण्यप्रयोजकमस्तु महाजनपरिग्रहेण च प्रामाण्यग्रह इत्यत आह सर्गप्रलयसम्भवादिति प्रलयोत्तरं पूर्व्ववेदनाशादुत्तरवेदस्य कथं प्रामाण्यं महाजनपरिग्रहस्यापि तदा अभावात् शब्दस्यानित्यत्वं उत्पन्नोगकारइति प्रतीतिसिद्धं प्रवाहाविच्छेदरूपनित्यत्वमपि प्रलयसम्भवान्नास्तीति भावः । कपिलादय एव पूर्व्वसर्गादौ पूर्व्वसर्गाभ्यस्तयोगजन्यधर्म्मानुभावात् साक्षात्कृतसकलार्थाः कर्त्तारः सन्तु इत्यत आह तदन्यस्मिन्निति विश्वनिर्म्माणसमर्था अणिमादिशक्तिसम्पन्ना यदि सर्व्वज्ञास्तदा लाघवादेक एव तादृशः स्वीक्रियतां स एव भगवानीश्वरः अनित्यासर्व्वविषयकज्ञानवति च विश्वास एव नास्तीति वैदिकव्यवहारविलोप इति न विधान्तरसम्भवः ईश्वरानङ्गीकर्त्तृनये इति शेषः ॥ १ ॥

ननु सर्गप्रलयसम्भवादिति न युक्तं प्रलये मानाभावादिति अहोरात्रस्याहोरात्राव्यवहितपूर्व्वकत्वनियमात् कर्म्मणां विषमविपाक

तथा कालोपाधित्वस्य भोगव्याप्यत्वात् युगपददृष्टस्य च वृत्तिरोधानुपपत्तेः ब्राह्मणस्य ब्राह्मणजन्यत्वनियमात् सर्गादावुत्पन्नस्य ब्राह्मणत्वाभावात् उत्तरकालेऽपि ब्राह्मणव्यवहारानुपपत्तेः प्रयोज्यप्रयोजकयोरभावात् सङ्केतग्रहाभावे शब्दे व्यवहारानुपपत्तेः घटादिनिर्म्माणे नैपुण्यस्य पूर्व्वदर्शनसापेक्षस्य सर्गादावभावात् घटादिसम्प्रदायोच्छेदादित्यादेर्बाधकाच्च तत्राह ।

वर्षादिवद्भवोपाधिर्वृत्तिरोधः सुषुप्तिवत् ।
उद्भिद्वृश्चिकवद्वर्णा मायावत् समयादयः ॥ २ ॥

यथा वर्षादिनस्याव्यवहितवर्षादिनपूर्व्वकत्वे साध्ये राशिविशेषावच्छिन्नरविकालपूर्व्वकत्वमुपाधिस्तथाहोरात्रस्याव्यवहिताहोरात्रपूर्व्वकत्वेऽव्यवहितसंसारपूर्व्वकत्वमुपाधिर्भवोपाधिः संसारोच्छेदककालोपाधिः स एव उपाधिरित्यर्थः । सुषुप्तिकाले कतिपयव्यक्तिनिष्ठभोगजनकादृष्टनिरोधवत् कालविशेषात् समस्तात्मनां समस्तादृष्टरोधस्तदिदमुक्तं वृत्तिरोधः सुषुप्तिवदिति । उद्भित् शाकविशेषः तस्य तण्डुलकणात् शाकविशेषवीजाच्च उद्भवः यथा वा वृश्चिकस्य गोमयाद्वृश्चिकाच्च उद्भवस्तथा कालविशेषेऽदृष्टविशेषात् केवलात् इदानीञ्च ब्राह्मणात् ब्राह्मणोत्पत्तिः वैजात्यस्य कार्य्यतावच्छेदकत्वान्न व्यभिचारः । यथा मायावी सूत्रसञ्चाराधिष्ठितदारुपुत्रकं कृत्वा दारुपुत्र घटमानयेत्यादि नियोज्य घटानयनं सम्पाद्य बालकस्य व्युत्पत्तौ प्रयोजकस्तथेश्वरोऽपि प्रयोज्यप्रयोजकभावापन्नं शरीरद्वयं परिगृह्य व्यवहारं कृत्वा तदानीन्तनानां शक्तिं ग्राहयति एवं घटादिसम्प्रदायमपि स्वयं कृत्वा शिक्षयति तदिदमुक्तं मायावत् समयादय इति समयः शक्तिग्रहः ॥ २ ॥

बाधके निरस्ते साधकमप्याह ।

जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्म्मणोः ।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ॥ ३ ॥

सम्प्रदायस्य वेदादिसम्प्रदायस्य ह्रासोऽनुमीयतां कुतः जन्मादेर्ह्रासदर्शनात् । प्रयोगश्च वेदादिसम्प्रदायोऽयमत्यन्तमुच्छिद्यते ह्रसमानत्वात् प्रदीपवत् । स्वरूपासिद्धिवारणायाह जन्मेति पूर्व्वं मानस्यः प्रजास्ततः पुत्रमात्रार्थिताप्रयुक्तमैथुनजाः सम्प्रति सम्भोगकामिप्रवृत्त्यावर्जितजन्मान इति जन्मह्रासः । पूर्व्वं चतुष्प्रभृतिषु संस्काराः ततो गर्भे ततो जननानन्तरम् इदानीं कथञ्चिदिति संस्कारह्रासः । पूर्व्वं सहस्रशाखस्य वेदस्याध्ययनं तत एकस्याः शाखाया इत्यादिक्रमेण विद्याह्रासः । विद्यादेरित्यादिना वृत्तिधर्म्मादिसंग्रहः पूर्व्वमुञ्छशिलवृत्तयस्ततोऽयाचितवृत्तयस्ततः कृष्यादिवृत्तयस्ततः सेवावृत्तय इति वृत्तिह्रासः । पूर्व्वं तपोज्ञानयज्ञदानात्मकश्चतुष्पाद्धर्म्मस्ततस्त्रेतादौ एकैकह्रासः कलौ च विसंष्ठुलः स्वल्पह्रानैकपादिति धर्म्मह्रासः । पूर्व्वं यज्ञशेषभुजस्ततोऽतिथिशेषभुजस्ततः स्वार्थसाधितभुजस्ततो भृत्यादिसहभुज इत्यपि धर्म्मह्रासः । स्वाध्यायस्याध्ययनस्य कर्म्मणो यागादेः शक्तेः सामर्थ्यस्य ह्रासात् अध्ययनशक्तेः कारणस्य ह्रासात् विद्याशक्तेः कार्य्यस्य ह्रास इति पृथङ् निर्द्देशः । एवञ्च ब्रह्माण्डनाशे तदन्तर्गतप्राणिनां नाश इति प्रलयसिद्धिः । भक्ष्यपेयाद्यद्वेतरागजीविका कुतर्काभ्यासव्यग्रताभिसन्धिपाषण्डसंसर्गादिप्रतारणादिनिबन्धनान्या या वृत्तिर्यागादौ तद्वान्महाजनस्तत्परिग्रहात् वेदप्रामाण्यमिति ॥ ३ ॥

[illegible]

कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन्
हारं हारमपीन्द्रजालमिव यः कुर्व्वन् जगत् क्रीड़ति ।
तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवम्
विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्तेष्वपि ॥ ४ ॥

इति द्वितीयः स्तवकः ।

तदभाववेदकप्रमाणसत्त्वादिति तृतीयविप्रतिपत्तिः । भूतले घटाभाववदीश्वरस्याप्यनुपलब्धेरभावस्य ग्रहात् परमात्मनोऽयोग्यतया योग्यानुपलब्धेरभावात् नाभावग्रहो यदि तदा शशशृङ्गस्याप्ययोग्यस्य नाभावः सिद्ध्येदित्यत्राह ।

योग्या दृष्टिः कुतोऽयोग्ये प्रतिबन्धिः कुतस्तराम् ।
क्वायोग्यं बाध्यते शृङ्गं क्वानुमानमनाश्रयम् ॥ १ ॥

अयोग्ये परमात्मनि योग्यानुपलब्धिः कुतः सैव बाधिका या चास्ति सा न बाधिका अन्यथाकाशधर्म्माधर्म्मादिविलयापत्तेः । शृङ्गन्तु योग्यमेव तथाच कुतः प्रतिबन्धिः । अयोग्यन्तु शशशृङ्गं न बाध्यते किन्तु साधकाभावएव तत्र । प्रकृते पञ्चमस्तबके साधकस्य वक्तव्यत्वात् । ननु कर्त्तृत्वव्यापकशरीरप्रयोजनाभिसन्धानयोरभावात् ईश्वरस्याभावोऽनुमेय इत्यत्राह क्वानुमानमनाश्रयमिति ईश्वरस्याश्रयस्य प्रत्यक्षासिद्धेः सिद्धौ च धर्म्मिग्राहकमानेन अनुमानबाध एव ॥ १ ॥

ननु असतख्यात्युपनीत ईश्वरस्तत्र कर्त्तृत्वाभावः साध्य इत्यत्राह ।

व्यावर्त्त्याभाववत्तैव भाविकी हि विशेष्यता ।
अभावविरहात्मत्वं वस्तुनः प्रतियोगिता ॥ २ ॥

व्यावर्त्त्यः प्रतिक्षेप्यः तदभाववत्ता भाविकी पारमार्थिकी हि यतः विशेष्यता अभावस्याश्रयता तथा चालीकं न विशेष्यमित्यर्थः अभावविरहात्मत्वं प्रतियोगित्वमवस्तुनोनेति नालीकस्य प्रतिषेधाधिकरणत्ववत् प्रतिषेध्यत्वमपीति भावः ॥ २ ॥

ननु अयोग्यस्याप्यनुपलब्ध्या कथं नाभावग्रह इत्यत आह ।

दृष्टोपलम्भसामग्री शशशृङ्गादियोग्यता ।
न तस्यां नोपलम्भोऽस्ति नास्ति सानुपलम्भने ॥ ३ ॥

योग्यानुपलब्धिरेवाभावग्राहिका अन्यथातीन्द्रियमात्रोच्छेदापत्तेः । योग्यता च प्रतियोगितद्व्याप्येतरयावदुपलम्भसामग्रीसमवधानम् एवञ्च शशशृङ्गे योग्यता दुष्टा दोषघटितोपलम्भसामग्री वाच्या तस्यां सत्यामनुपलब्धिर्न किन्तूपलब्धिरेव स्यात् अदृष्टे च सा योग्यता नास्तीति ॥ ३ ॥

नन्वात्मा किञ्चिदनभिज्ञः क्षित्यकर्तृत्वानित्यमकक्षितिकोवा आत्मत्वादित्यत्राह ।

इष्टसिद्धिः प्रसिद्धेऽशे हेत्वसिद्धिरगोचरे ।
नान्या सामान्यतः सिद्धिर्जातावपि तथैव सा ॥ ४ ॥

प्रसिद्धे संसार्यात्मनि पक्षे इष्टसिद्धिः सिद्धसाधनम् अगोचरे अज्ञाते ईश्वरे हेत्वसिद्धिः हेतोरज्ञानं आत्मत्वेन सामान्यतः सिद्धः पक्षस्तत् तत्राप्यस्मदादिस्तदितर आत्मा वा पक्ष इति विकल्पे सिद्धसाधनं हेत्वसिद्धिर्वा । नन्वात्मत्वं जातिः पक्षस्तत्राह जातावपीति तथैव सा आत्मत्वं जातिर्न क्षितिकर्त्री इत्यत्रेष्टसिद्धिः सिद्धसाधनं हेतोश्च तत्रासत्त्वमिति हेत्वसिद्धिरित्यर्थः ॥ ४ ॥

नन्वागमादिसिद्धात्मनि अकर्तृत्वं साध्यं तत्राह ।

आगमादेः प्रमाणत्वे बाधनादनिषेधनम् ।
आभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धता ॥ ५ ॥

आगमादेः प्रमाणत्वे तत एव ईश्वरस्य कर्तृत्वादिसिद्धौ कर्तृत्वाद्यभावसाधने बाधः । आगमादेरप्रमाणत्वे सैवाश्रयासिद्धिः उद्धता उत्कटा ॥ ५ ॥

अत्र चार्वाकाः योग्यताविशेषणेन किं यन्न प्रत्यक्षं तन्नास्ति

इत्यनुपलब्धिमात्रमेव साधकं स्यात् अनुमानविलोपश्चैवं एव धूमदर्शनानन्तरं वह्न्यर्थप्रवृत्तिश्च सम्भावनामात्रादिति तत्राह ।

दृष्ट्यदृष्ट्योर्न सन्देहोभावाभावविनिश्चयात् ।
अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम् ॥ ६ ॥

सम्भावना हि सन्देहः स च दृष्टौ नास्ति तस्य निश्चयात् अदृष्टौ च नास्ति अनुपलब्धौ तदभावस्यैव निर्णयात् एवमदृष्ट्या अनुपलब्ध्या हेतौ प्रत्यक्षकारणे चक्षुरादौ बाधिते सति प्रत्यक्षमपि प्रमाणं न स्यात् अनुपलब्धिकालेऽपि तस्य सत्त्वे तु व्यभिचारात् नानुपलब्धिरभावावधारणे हेतुः । एवञ्च गृहान्निर्गतश्चार्व्वाकः पुत्रदाराद्यभावादिकमवधार्य्य विक्रोशेत् परावृत्तोऽपि कुटुम्बं नासादयेत तदा तेषां सत्त्वे चानुपलब्धिर्व्यभिचारिणी न हेतुः स्यादिति ॥ ६ ॥

ननु यद्यनुपलम्भमात्रं नाभावसाधकं तदा अयोग्योपाधिशङ्कया धूमादावपि व्यभिचारशङ्कया न व्याप्तिनिश्चयः स्यादिति गतमनुमानेनेत्यत आह ।

शङ्का चेदनुमास्त्येव न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्म्मतः ॥ ७ ॥

तद्देशतत्कालयोर्व्यभिचाराभावनिश्चयात् कालान्तरदेशान्तरस्थयोर्व्यभिचारशङ्का स्यात् कालान्तरदेशान्तरस्थज्ञानञ्चानुमानादेवेति सिद्धमनुमानं शङ्का न चेत् ततः शङ्काविरहे तरां सुतरामनुमानम् । ननु किं शङ्का [illegible] तर्काच्छङ्काविरह इत्यर्थः । मतः सम्मत इत्यर्थः । ननु तर्कस्य व्याप्तिमूलकत्वेऽनवस्थेत्यत्राह व्याघातेत्यादि तर्कमूलव्याप्तौ न शङ्का व्याघातात् तृप्तकारणं विना कार्य्योत्पत्तिशङ्कायां तृप्त्यर्थं भोजनादौ परप्रतिपत्त्यर्थञ्च शब्दप्रयोगादौ न प्रवर्त्तेतेति एवञ्च तर्कानवतारे शङ्कितोपाधिरेवाप्रयोजक इत्युच्यते । तदुक्तं यावच्चाव्यतिरेकित्वं शतां-

येनापि शङ्क्यते । विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम् । विपक्षस्य हेतोरव्यतिरेकित्वं सत्त्वं यावच्छङ्क्यते तावद्धेतोर्न गमकत्वमिति भावः । व्यभिचारशङ्का च उपाधिशङ्काधीना । तदुक्तम् अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः । तैर्दृष्टेऽपि नैवेष्टा व्यापकांशावधारणेति । अन्ये केचन हेतवः परप्रयुक्तानां व्याप्तीनामुपजीवकाश्चाश्रयाः तथाहि उपाध्यवच्छिन्नहेतुनिष्ठा व्याप्तिः हेतुतावच्छेदकावच्छिन्नहेतुवृत्तितया ज्ञायते अतएव उप समीपवर्त्तिनि स्वसमानाधिकरणे स्वधर्म्मं व्याप्तिं आदधाति बोधयतीति उपाधिशब्दो जवाकुसुमादिसाधारणः तैः सोपाधिभिर्दृष्टेऽपि पक्षे व्यापकांशस्यावधारणा निश्चयो नेष्टो साधारणधर्म्मेण साध्यसंशयजननादित्यर्थः ॥ ७ ॥

ननूपमानमीश्वरे बाधकं स्यात् अत्रोपमानस्यातिरिक्तप्रमाणस्यानभ्युपगमात् न बाधकमिति वैशेषिकादयः तत्र सादृश्यपदार्थान्तरस्य ग्राहकमुपमानमिति केचित् सादृश्यं न द्रव्यं गुणः कर्म्म वा गुणसमवेतत्वात् न सामान्यं सप्रतियोगिकत्वात् सामान्यादिवृत्तित्वाच्च नाभावः सप्रतियोगिकत्वेनाप्रत्ययात् तच्च न प्रत्यक्षगम्यमिन्द्रियानन्तर्य [illegible] नमिन्द्रियं ग्राहकमिति वाच्यं गोसदृशो गवय इति ज्ञानानन्तरं सा गौर्गवयसदृशीत्यसन्निकृष्टगोविशेष्यकग्रहस्याप्रत्यक्षत्वात् नाप्यनुमानगम्यं लिङ्गाप्रतिसन्धानेऽपि ज्ञायमानत्वात् न शब्दगम्यं तस्यासार्व्वत्रिकत्वादिति तत्राह ।

परस्परविरोधे हि न प्रकारान्तरस्थितिः ।
नैकतापि विरुद्धानामुक्तिमात्रविरोधतः ॥ ८ ॥

न प्रकारान्तरस्थितिः नोभयात्मकत्वं हि यतः परस्परविरोधान्नैकतापि न भावाभावात्मकत्वमपि विरुद्धानामिति हेतुगर्भविशेषणं परस्परविरोधिरूपत्वात् विरोधमेव प्रतिपादयति उक्तिमात्र-

विरोधतः । नाभाव इत्युक्ते च भावत्वप्रतीतेः कथमभावता न भाव इत्युक्ते चाभावत्वप्रतीतेर्न भावत्वम् । अयमभिप्रायः सादृश्यं भावो ऽभावोवा उभयकोट्यतिरिक्तस्याप्रसिद्धेः अभावत्वे सप्तमपदार्थत्वं भावत्वे गुणवत्त्वे च द्रव्यत्वं निर्गुणत्वे सामान्यवत्त्वे च गुणान्यत्वे कर्म्मत्वं तदन्यत्वे गुणत्वं निर्गुणनिःसामान्यभावत्वेऽसमवेतत्वे च समवायत्वं समवेतत्वे च नेकाश्रितत्वे सामान्यत्वं एकाश्रितत्वे विशेषत्वम् एवं शक्तिसंख्यादयः पदार्था निराकार्य्याः ॥ ८ ॥

ननु भवतु सादृश्यं समानधर्म्मएव तद्ग्राहकमेवोपमानं मानान्तरं स्यादित्यत आह ।

साधर्म्म्यमिव वैधर्म्म्यं मानमेवं प्रसज्यते ।
अर्थापत्तिरसौ व्यक्तमिति चेत् प्रकृतं न किम् ॥ ९ ॥

अयं गोविसदृश इति ज्ञानानन्तरं सा गौरेतद्विसदृशीति धीः प्रमाणान्तरादेवास्तु अथैतस्य तद्वैधर्म्म्यं तस्मिन्नेतद्वैधर्म्म्यं विनानुपपन्नमित्यर्थापत्तिरेवेति गोसादृश्यं गवयस्य गोर्गवयसादृश्यं विनानुपपन्नमित्यर्थापत्तिरेवेति न मानान्तरं सादृश्यग्राहकं मन्तव्यमिति ॥ ९ ॥

वैशेषिकादिभिरुपमाने दूषिते नैयायिकः प्राह ।

सम्बन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह ।
प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः ॥ १० ॥

फलमित्यनन्तरं इतीत्यध्याहार्य्यं संज्ञायागवयादिसंज्ञायाः संज्ञिना गवयत्वादिविशिष्टेन सह सम्बन्धस्य शक्तेः परिच्छेदः निश्चयः उपमानस्य मानान्तरस्य फलमुपमितिः प्रत्यक्षादेरसाध्यत्वात् इन्द्रिय लिङ्गशब्दानामसामर्थ्यात् ॥ १० ॥

ननु गोसदृशोगवयपदवाच्य इत्यतिदेशवाक्यादेव शक्तिधीरस्तु गवयत्वविशिष्टोधर्म्मी गवयपदवाच्यो गोसदृशत्वादित्यनुमानाद्वास्तु तत्राह ।

सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ।
समयो दुर्ग्रहः पूर्वं शब्देनानुमयापि वा ॥ ११ ॥

समयः गवयत्वादिजातिपुरस्कारेण शक्तिरूपसम्बन्धः स च दुर्ग्रहः शब्दादनुमानाद्वा न सम्भवति गवयत्वस्य तेन पुंसा अगृहीतत्वात् । न च सादृश्यमेव प्रवृत्तिनिमित्ततया गृह्यतां तस्य गुरुत्वेनाप्रवृत्तिनिमित्तत्वात् ॥ ११ ॥

ननु प्रथमतो गवयत्वस्याप्रतीतत्वेऽपि यदा गवयत्वं प्रत्यक्षं तदा गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्याल्लक्षणया गवयत्वं परामृश्यते तेन रूपेण शक्तिधीरस्तु तत्राह ।

श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ।
पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः ॥ १२ ॥

गोसादृश्यसामानाधिकरण्येन गवयपदवाच्यत्वविषयकज्ञानजनकतया शब्दस्य गवयत्वादिना शक्तिबोधे नाकाङ्क्षा अन्वयस्य पर्य्यवसानात् यत्र पदार्था एवान्वयविधुराः केनापि रूपेणान्वयायोग्याः तत्र तदाक्षिप्तेन तेन लक्षणीयार्थेन सङ्गतिरन्वयः गङ्गायां घोष इत्यादौ ॥ १२ ॥

ननु गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादिति सामान्यतोदृष्टमनुमानमितरप्रवृत्तिनिमित्तकत्वबाधे गवयत्वस्य प्रवृत्तिनिमित्तत्वमवगाहतामिति चेन्न व्यापकतावच्छेदकरूपेणैवानुमितेर्व्यापकविषयकत्वात् गवयपदं गवयत्वप्रवृत्तिनिमित्तकम् इतराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वादिति व्यतिरेकि च साध्याप्रसिद्ध्या न सम्भवति व्यतिरेकव्याप्त्यप्रतिसन्धानेऽपि गवयत्वाश्रयो गवय पदवाच्य इति धियोऽनुभवसिद्धत्वाच्च उपमानं प्रमाणान्तरम् । धिक्करभमतिदीर्घग्रीवमतिकठोरकण्टकाशिनमपसदं पशूनामित्यादिवाक्यार्थज्ञानानन्तरं तादृशपिण्डदर्शने करभपदवाच्यताग्रहोऽप्युप-

मानादेवेति । उपमानन्तु शक्तिमात्रपरिच्छेदकतया नेश्वरे बाधक मिति भावः । शब्दस्तु नेश्वरे बाधकत्वेन शङ्कनीयः अनुमानानतिरेकात् इति वैशेषिकाः । पदश्रवणानन्तरं पदार्थस्मरणे एते पदार्थाः परस्परं संसर्गवन्तः आकाङ्क्षायोग्यतादिमत्पदस्मारितत्वात् दण्डेन गामभ्याजेतिपदस्मारितपदार्थवत् इत्यनुमानात् संसर्गसिद्धेः किम्वा एतानि पदानि स्मारितपदार्थसंसर्गप्रमापूर्व्वकाणि आकाङ्क्षादिमत्पदत्वात् इत्यनुमानात् तत्सिद्धेः ज्ञानज्ञानस्य तद्विषयविषयकत्वनियमादित्याह ।

अनैकान्तः परिच्छेदे सम्भवे च न निर्णयः ।
आकाङ्क्षासत्तया हेतुर्योग्यासत्तिरबन्धना ॥ १२ ॥

अत्र पदार्थपक्षकानुमाने संसृष्टा एवेति यदि संसर्गवत्त्वं साध्यते सम्भावितसंसर्गका इति संसर्गस्वरूपयोग्यत्वं वा आद्ये पयसा सिञ्चतीत्यादावनैकान्तः द्वितीये न संसर्गनिर्णयः अन्वयप्रयोजकरूप वत्त्वरूपयोग्यतायाः हेतुविशेषणीकृतत्वेन सिद्धसाधनाच्च द्वितीये प्रयोगे आकाङ्क्षासत्तया इति आकाङ्क्षा हि समभिव्याहृतपदस्मारितपदार्थजिज्ञासा घटमित्युक्ते आनय पश्येति आनयेत्युक्ते घटं पटं वेति जिज्ञासादयः । ननु योग्यतासहितासत्तिरेव हेतुरस्तु तत्राह योग्यासत्तिरबन्धना इति व्याप्तिशून्या अयमेति पुत्रो राज्ञः पुरुषोऽपसार्य्यतामित्यत्र निराकाङ्क्षयो राजपदपुरुषपदयोर्व्यभिचारात् ॥ १२ ॥

प्राभाकरास्तु वेदस्यापौरुषेयतया तत्र वक्तृज्ञानानुमानासम्भवात् शब्दः प्रमाणं लोके तु आप्तोक्तत्वज्ञानमपेक्षितं तथाचायं वक्ता स्वप्रयुक्तवाक्यार्थयथार्थज्ञानवान् भ्रमाद्यजन्यवाक्यार्थज्ञानजन्यवाक्य प्रयोक्तृत्वात् इत्यनुमानादक्तृज्ञानावच्छेदकतया संसर्गसिद्धौ उत्तर कालं वा एते पदार्थाः परस्परं संसृष्टाः वक्तृयथार्थज्ञानविषयत्वात्

इत्यनुमानात् साक्षाद्वाक्यार्थसिद्धेः कृप्तसामर्थ्यात् शब्दात् पुनरन्वय धीरित्यनुवादको लौकिकः शब्दो न प्रमाणमिति प्राङ्गस्तत्राह ।

निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये ।

व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता ॥ १४ ॥

वेदेऽवधारितसामर्थ्याच्छब्दाल्लोकस्थलेऽपि प्रागर्थनिर्णये लिङ्गस्यैवानुवादकत्वं व्याप्तिस्मृतिविलम्बेनानुमानस्य शब्दापेक्षया विलम्बितधीजनकत्वात् ॥ १४ ॥

नन्वाप्तोक्तत्वस्य संशये व्यतिरेके च शब्दे मानानुपपत्त्या निर्णयो हेतुर्वाच्यः । आप्तोक्तत्वञ्च प्रकृतवाक्यार्थगोचरयथार्थधीजन्यत्वमिति वाक्यार्थधीः प्रथमतोऽनुमानादेव वाच्या इत्यत्राह ।

व्यस्तपुंदूषणाशङ्कैः स्मारितत्वात् पदैरमी ।

अन्विता इति निर्णीते वेदस्यापि न तत् कुतः ॥ १५ ॥

आप्तोक्तत्वनिश्चयस्य हेतुत्वे मानाभावः बाधकप्रमाविरहरूप योग्यताज्ञानविलम्बादयोग्येऽन्वयधीविलम्बसम्भवात् अन्यथा वेदेऽपि पौरुषेयत्वधीर्हेतुरस्तु तथाच तत्रापि अमी वैदिका अर्था अन्विताः परस्परसंसृष्टाः व्यस्तपुंदूषणाशङ्कैः पदैः स्मारितत्वात् इत्यनुमानात् संसर्गे निर्णीते तदनुवादकत्वं वेदस्यापि न कुतः । यत्तु पदं न करणं किन्तु पदार्थ एव अतएव पदार्थकरणकाच्च वाक्यार्थज्ञानात् कविकाव्यादिकं द्वारमित्यत्र द्वारोपस्थितावपि पदार्थनिष्ठाकाङ्क्षाविरहेणान्वयाबोधः शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यत इति न्यायात् अतएव पदानामवच्छेदकत्वं पदजन्योपस्थितिं विना पदादन्वयाबोधात् । तदुक्तम् प्राथम्यादभिधातृत्वात् तात्पर्य्योपगमादपि । पदानामेव सा शक्तिर्व्वरमभ्युपगम्यताम् । अभिधातृत्वात् पदार्थोपस्थापकत्वात् इति गुरुमतमपास्तं पदानामित्यत्र ज्ञातानामिति प्रक्षेपेणापि ज्ञातस्यावच्छेदकत्वापातात् तथाचावश्यकीकार्य्यपदार्थोपस्थितौ

पदमन्यथासिद्धं न करणमिति तन्न पदार्थानामतीतादिरूपतया अकारणत्वात् पदार्थस्मरणस्यापि निर्व्यापारतया अकरणत्वात् पदज्ञानस्यैव करणत्वात् पदार्थस्मृतेर्व्यापारत्वात् कविकाव्यादिस्थले च मानसज्ञानं हेतुरिति ॥ १५ ॥

ननु शब्दोऽतिरिच्यतां प्रमाणं स एव बाधकोऽस्तु तथाहि प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः। अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते इति गीतां पठन्ति। प्रकृतेर्बुद्धितत्त्वस्य गुणैः सत्वादिभिः क्रियमाणानि कर्म्माणि मोहादहं कर्त्तेति चेतनो मन्यते तेनाभिमानिकं न पारमार्थिकं कर्तृत्वं न च सर्व्वज्ञस्याभिमानोऽपि विशेषदर्शनात् कर्त्तेति तन्निति न षष्ठी इत्यत्राह।

न प्रमाणमनाप्तोक्तिर्नादृष्टे क्वचिदाप्तता।
अदृश्यदृष्टौ सर्व्वज्ञेन च नित्यागमः क्षमः ॥ १६ ॥

अयं हि सर्व्वकर्तृत्वाभाववेदकः शब्दः अनाप्तोक्तश्चेन्न प्रमाणं आप्तोक्तश्चेदेतदर्थगोचरज्ञानवतो नित्यसर्व्वविषयकज्ञानवत्त्वम् इन्द्रियाद्यभावात् आगमस्य च नित्यत्वं दूषितमेव प्रागिति वेदकारो नित्यः सर्व्वज्ञः सिद्ध्यति ॥ १६ ॥

नन्वसत्त्वबोधकागमानां का गतिस्तत्राह।

नचासौ क्वचिदेकान्तः सत्वस्यापि प्रवेदनात्।
निरञ्जनावबोधार्थान च सन्नपि तत्परः ॥ १७ ॥

असावागमोनासत्वमात्रपर एव सत्वस्यापि बहुणोमत्तः सर्व्वं प्रवर्त्तते इत्यादिभिः प्रतिपादनात् द्वयोश्च न मुख्यार्थत्वं विरोधात् विनिगमकचिन्तायां विशेषगुणशून्यात्मस्वरूपस्य ध्येयत्वतात्पर्य्यकत्वं बाधकश्रुतीनां साधकश्रुतीनाञ्च कार्य्यकारणभावादितर्कमूलकानुमानमाचिव्येन मुख्यार्थत्वात् ॥ १७ ॥

ननु यद्यसौ सर्व्वज्ञः स्यात् अनुपदिश्यापि प्रवर्त्तयेदित्युपदेशा-

नुपपत्तिरेव ईश्वरे बाधिका नह्ययमनुपदिश्य स्वयं प्रवर्त्तयितुं न जानाति सर्वज्ञत्वानुपपत्तेः अर्थापत्तिश्च मानान्तरं तत्राह ।

हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा ।
तदभावात् प्रवृत्तिर्न कर्म्मवादेऽप्ययं विधिः ॥ १८ ॥

प्रमाणेऽसति न प्रमा प्रमाणरूपहेत्वभावे फलाभावात् प्रमाविरहात् प्रमाविरहे च न प्रवृत्तिः कारणाभावात् प्रमाकरणञ्चाग्निहोत्रमिनेत्यादिविधिरेव इति नोपदेशव्यर्थता अन्यथा कर्म्मवादेऽप्ययं विधिः अदृष्टादेव प्रवृत्तेरुपपत्तेः वेदस्यानर्थक्यापत्तिः नवार्थापत्तिर्मानान्तरम् ॥ १८ ॥

तमेवाह ।

अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः ।
न मानयोर्विरोधोऽस्ति प्रसिद्धे वाप्यसौ समः ॥ १९ ॥

जीवी देवदत्तो गेहे नास्तीति ज्ञानानन्तरं बहिरस्तीति धीरुदाहरणं तत्रानियम्यस्याव्याप्यस्य नायुक्तिर्नानुपपत्तिः अनियन्ता अव्यापको नोपपादकः व्यापकव्यतिरेकेण व्याप्यस्यैव व्यतिरेकात् तादृशानुपपत्तिज्ञाने व्यतिरेकव्याप्तिधीरेव। यदपि क्वचिदस्ति गेहे नास्तीतिज्ञानानन्तरं विरोधज्ञानेऽविरोधाय गेहान्यविषयता क्वचिदस्तीत्यत्रेत्यर्थापत्तिरिति तदपि न नतु वास्तवे मानयोर्विरोधः तथा सत्येकं मानं भज्येत विरोधज्ञानस्य तु विषयभेदव्यवस्थापकत्वमनुमानविधयैव तथाहि विरोधोऽभिन्नविषयकः एकविषयतायां विरुद्धत्वे सति प्रमाणसिद्धत्वादिति अन्यथा धूमोऽप्यनुपपद्यमानो वह्निं गमयेदित्यर्थापत्तिरिति प्रसिद्धमनुमानं न स्यात् अर्व्वाग्भागावच्छेदेन वह्न्यनुपलम्भः धूमस्य वह्निसाधनमिति विरोधेऽपरभागावच्छेदेन वह्निव्यवस्थापनमप्यर्थापत्तिरेव स्यात् अनुमानाभावेऽपि व्याप्तिग्राहकमानस्य वह्निसाधकत्वमर्थापत्तेरित्यनमानवि-

लोपः स्यादिति अनुपलब्धिश्च नेश्वरे बाधिकेति योग्यादृष्टिरित्यादि नोक्तम् ॥ १९ ॥

वस्तुतोऽनुपलब्धिर्मानान्तरमेव नेत्याह ।

प्रतियत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात् ।

अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ॥ २० ॥

यद्यज्ञातानुपलब्धिः कारणं तत् प्रत्यक्षं ज्ञातानुपलब्धिजन्याभावज्ञानस्यानुमानत्वात् जन्यापरोक्षज्ञानस्य इन्द्रियजन्यत्वात् अपरोक्षत्वञ्च ज्ञानकरणकान्यत्वं घटादिप्रत्यक्षइव घटाभावाध्यक्षेऽपी न्द्रियस्यान्यानुपक्षीणत्वात् करणत्वमधिकरणप्रत्यक्षाभावेऽपि ध्वान्तादिध्वंसस्य वायौ रूपाभावस्य ग्रहात् अधिकरणग्रहेऽप्यनुपक्षयात् अज्ञातकरणजन्यज्ञानत्वेन इन्द्रियजन्यत्वानुमानाच्च । भावावेशाच्च चेतसोमनसः असमदादिबाह्यानुभवस्य भावभूतकरणसचिवमनोजन्यत्वनियमात् नानुपलब्धिः करणं किन्त्विन्द्रियमेवेति ॥ २० ॥

साधकान्तरमाह ।

प्रतियोगिनि सामर्थ्यादव्यापाराव्यवधानतः ।

अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात् ॥ २१ ॥

इन्द्रियाणि करणमिति साध्यं प्रतियोगिग्राहकत्वात् यथानुमानं घटस्येव तदभावस्यापि ग्राहकं तद्वदिन्द्रियमपि । ननु प्रतियोगिग्राहकत्वमतन्त्रं अनन्यथासिद्धत्वस्योपाधित्वात् आश्रयग्रहेणा न्यथासिद्धेरित्यत्र हेतुः व्यापाराव्यवधानतइति व्यापारेणाधिकरण प्रत्यक्षेण इन्द्रियस्यान्यथासिद्ध्यभावात् अन्यथा संयोगेन चक्षुरादिक मन्यथासिद्धं भावग्रहेऽपि स्यात् किञ्चाभावभ्रमस्य दुष्टकरणजन्यत्व मवश्यं वाच्यं दोषश्चेन्द्रियादिनिष्ठएव अनुपलब्धेर्दोषाभावात् पित्तादिना इन्द्रियस्यैव दुष्टत्वात् तदिदमुक्तम् अक्षाश्रयत्वाद्दोषाणामिति अधिकरणाभावयोर्विशिष्टधीरिन्द्रियजा अभावधीत्वात नानुपलब्धि

करणता भावधीत्वादतो विशिष्टग्राहीन्द्रियं स्वीकार्य्यं तदिदमुक्तं विकल्पनात् विशिष्टविषयकज्ञानात् ॥ २१ ॥

नन्वनुपलब्ध्या घटाभावस्य ज्ञानं ततश्च घटाभाववद्भूतलमिति ज्ञानं घ्राणजसौरभोपनयानन्तरं सुरभि चन्दनमिति चाक्षुषवत् इत्यभावग्राहिकानुपलब्धिः कारणतया वाच्या निर्विकल्पकविषयीकृत एव इन्द्रियेण सविकल्पकविषयतया गृह्यते तथा दर्शनात् अभावेनेन्द्रियप्रत्यासत्तेरभावात् कथं वा प्रत्यक्षत्वं विशेषणताया: सम्बन्धान्तरगर्भत्वात् अवश्यक्लृप्तकारणताकानुपलब्धेरेव करणत्वं नेन्द्रियस्येत्यत्राह ।

अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात् ।
प्रामाण्यान्तरेऽनवस्थानान्न चेदन्योऽपि दुर्घटः ॥ २२ ॥

अवच्छेदग्रहस्य प्रतियोगिग्रहस्याभावप्रत्यक्षहेतुत्वात् *नियमतः सविकल्पकज्ञानसामग्रीसत्त्वान्न निर्व्विकल्पकत्वं घटादिग्रहे तु निर्व्विकल्पकमेव प्रथमतः । विशिष्टज्ञानहेतुविशेषणज्ञानाभावात् प्रतियोग्यनुपहितस्याभावस्य भानाभ्युपगमे तु अभावस्यापि निर्व्विकल्पकविषयतेति सिद्धसाधनम् । सम्बन्धान्तरेऽनवस्थानात् स्वरूपमेवाभावस्याधिकरणेन सम्बन्धः वैशिशिष्ट्यस्याभावसम्बन्धस्याङ्गीकृतस्यापि सम्बन्धधारायामनवस्थानात् स्वरूपसम्बन्धस्वीकारस्यावश्यम्भावात् इन्द्रियसम्बद्धविशेषणताया घटाभावादिप्रत्यक्षे सन्निकर्षतया कल्पनात् नचेदेवं तदानुपलब्धिकारणतापक्षोऽपि अन्यप्रकारो दुर्घटः तथाहि सर्व्वैरेव प्रमाणैः परम्परया निर्व्विकल्पकविषयएव गृह्यतेऽनुमानादावपि वह्न्यादेः पूर्व्वं कदाचिन्निर्व्विकल्पकस्वीकारात् घटाभाववद्भूतलमित्यादिविशिष्टप्रत्ययबलात् अभावेनाधिकरणस्य प्रागभवतापि स्वीकारात् ॥ २२ ॥

स्तवकार्थसंग्राहकश्लोकमाह ।

प्रत्यक्षादिभिरेभिरेवमधरो दूरे विरोधादयः
प्रायो यन्मुखवीक्षणैकविधुरैरात्मापि नासाद्यते ।
तं सर्व्वानुविधेयमेकमसमस्वच्छन्दलीलास्पदम्
देवानामपि देवमुद्भवदतिश्रद्धाः प्रपद्यामहे ॥ २३ ॥

इति तृतीयः स्तवकः ।

यस्येश्वरस्य मुखनिरीक्षणैकविधुरैर्धर्म्मिग्राहकमानबाधितैः प्रत्यक्षादिभिरात्मैव नासाद्यते विरोधादयोऽयतोऽधरः अतएव दूरे सर्व्वमनुविधेयं वश्यं यस्येति असमा स्वच्छन्दा चेतनान्तराप्रयोज्या या लीला सेवोत्सवोऽयस्य स तथा दुःखाभावैकनिदानत्वादतएव उद्भवदतिश्रद्धाः देवानामपि देवं तं प्रपद्यामहे ॥ २३ ॥

इति तृतीयस्तवकव्याख्यानम् ।

सत्त्वेऽपि तस्याप्रमाणत्वात् इति तुरीयविप्रतिपत्तिः । ईश्वरो न मानं तज्ज्ञानस्यागृहीतग्राहित्वाभावेन प्रमात्वाभावात् ईश्वरस्य प्रमाकर्तृत्वं प्रमाकरणत्वञ्च नास्तीति अप्रमाणपुरुषस्य वचः कः श्रद्दध्यादित्यत्राह ।

अप्राप्तेरधिकप्राप्तेरलक्षणमपूर्व्वदृक् ।
यथार्थोऽनुभवो मानमनपेक्षतयेष्यते ॥ १ ॥

अपूर्व्वदृक्त्वं अगृहीतग्राहित्वं न प्रमालक्षणं धारावहनबुद्ध्यव्याप्तेः इदं रजतमितिभ्रमातिव्याप्तेश्च । स्वमते लक्षणमाह यथार्थ इति अनपेक्षतयेति स्मृतिर्जनकानुभवसमानविषयतया तत्प्रामाण्याधीनप्रामाण्यकतया तत्र सापेक्षत्वात् न प्रमाव्यवहारस्तान्त्रिकाणामिति ॥ १ ॥

ननु धारावाहिके नाव्याप्तिः ज्ञानेन हि विषयनिष्ठोधर्म्मः कश्चिज्जननीयः अन्यथा ज्ञानस्य विषयनियमान स्यात् तथा च तमादायागृहीतग्राहित्वमेव किञ्च स धर्म्मस्तदुपादानज्ञानजन्यो न वा आद्ये उपादानज्ञानस्य उपादानविषयतानियमार्थं धर्म्मान्तरस्वीकारे तत्राप्येवमनवस्था द्वितीये कार्य्यत्वं हेतुः तत्रैव उपादानज्ञानजन्यत्वं व्यभिचारीति नेश्वरस्य क्षित्यादिकर्तृतया सिद्धिरित्यत्राह ।

स्वभावनियमाभावादुपकारोऽपि दुर्घटः ।
सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा ॥ २ ॥

स्वभावविशेष एव विषयतानियामकः अन्यथा ज्ञाततोधानेऽपि नियमानुपपत्तिः इति स्वभाव एव नियामकस्तत्रेति किञ्च वर्त्तमान विषये तदुत्पत्तावपि अविद्यमाने विषये ज्ञाततायाः उपादानविर-

ष्टात् अनुत्पत्तौ विषयतानियमानुपपत्तिरिति स्वभाव एव तत्र नियामकइति ॥ २ ॥

ननु क्रियया कर्म्मणि किञ्चिज्जननीयमितिव्याप्तेर्ज्ञानक्रिययापि विषयनिष्ठोधर्म्मोजननीय इत्यत्राह ।

अनैकान्तादसिद्धेर्वा न च लिङ्गमिह क्रिया ।
तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ॥ ३ ।

क्रिया यदि धात्वर्थस्तदा शरेण गगनं युनक्ति इत्यत्र संयोगेन गगननिष्ठकिञ्चिदजननात् अनैकान्तः यदि करणव्यापारः क्रिया तदापीन्द्रियसंयोगादिना घटादिनिष्ठकिञ्चिदजननात् व्यभिचारः अथ क्रिया स्पन्दस्तदा ज्ञानस्य स्पन्दानात्मकत्वादसिद्धिः । ननु ज्ञातोघटः साक्षात्कृतोघट इत्यादि प्रत्यक्षमेव ज्ञाततायां मानमित्यत्राह तद्वैशिष्ट्येति सर्व्वत्र विशिष्टज्ञाने विशेषणविशेष्यतदुभयसम्बन्धविषयः स च सम्बन्धः क्वचित् संयोगादिः क्वचित् स्वरूपं तदिह घटे ज्ञानमित्यत्रेव घटज्ञानयोः स्वरूप एव सम्बन्धः ज्ञातो घटइत्यत्रापि भासते अन्यथा इष्टोघटः कृतोघट इत्यत्र इष्टताकृततयोरप्यापत्तेः ॥ ३ ॥

स्वभावसम्बन्धादुपपत्तिस्तुल्या तदुच्यते ।
अर्थेनैव विशेषोहि निराकारतया धियाम् ।
क्रिययैव विशेषोहि व्यवहारेषु कर्म्मणाम् ॥ ४ ॥

यथा घटादीनां ज्ञाने विशिष्टधीः यथा च क्रिययैव कर्म्मणां घटादीनां व्यवहारेषु विशिष्टबुद्ध्यादिषु विशेषस्तथा ज्ञातोघट इत्यादौ ज्ञानेनैव घटादौ विशिष्टधीर्न धर्म्मान्तरादिति ॥ ४ ॥

ननु तथापि नेश्वरज्ञानं प्रमा प्रमाणजन्यत्वाभावात् एवमीश्वरेण प्रमाता न वा प्रमाणं प्रमाकर्तृत्वकरणत्वयोरभावादत्राह ।

मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता ।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥ ५ ॥

यथार्थानुभवत्वं प्रमात्वमजन्यत्वेऽपीश्वरज्ञानस्याविरुद्धं प्रमाणत्वं प्रमाणसमवायित्वम् एतच्च अकारणत्वेऽपि प्रमाया ईश्वरस्य सिद्धम् एवं प्रमया सहायोगव्यवच्छेदेन अभेदे तृतीया सम्बन्धितयेश्वरस्य प्रमाणत्वं न तु करणत्वमपि तत्र नियामकमिति मन्वायुर्वेदवत् तत् प्रामाण्यमाप्तप्रामाण्यादिति सूत्रे ईश्वरस्य प्रामाण्यमुक्तं नचे- श्वरस्य पञ्चमप्रमाणत्वापत्त्या विभागव्याघातः प्रमाकरणाभिप्रायेण विभागसम्भवात् । नचेश्वरज्ञानस्य भ्रमविषयकत्वे भ्रमविषयाव- गाहित्वे च भ्रमत्वापत्तिरिति वाच्यं व्यधिकरणप्रकारकत्वाभावेन प्रमात्वाभावात् भ्रमनिरूपितविशेष्यकत्वं रजतत्वप्रकारकत्वञ्च यदेव तदवगाहितया ईश्वरज्ञानस्य प्रमात्वात्ततः ॥ ५ ॥

स्तबकार्थसंग्राहकश्लोकमाह ।

साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ
भूतार्थानुभवे निविष्टनिखिलप्रस्ताविवस्तुक्रमः ।
लेशादृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः
शङ्कोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः ॥ ६ ॥

इति चतुर्थः स्तबकः ।

भूतार्थानुभवे यथार्थानुभवे साक्षात्कारिणि प्रत्यक्षे निविष्टा- विषयीभूता निखिलप्रस्ताविवस्तूनां नानापदार्थानां क्रमो यस्य स तथा अनुभवविषयसकलविषयक इत्यर्थः नित्ययोगिनि सदातनयुक्ते अत- एवेन्द्रियाणां द्वाराणामनपेक्षा स्थितिर्यस्य लेशतोऽप्यंशतोऽपि अदृष्टि र्विशेषादर्शनं तन्निमित्तिका या दुष्टिः रागद्वेषमोहात्मिका तद्विग- मेन प्रभ्रष्टः शङ्कातुषः वेदाप्रामाण्यशङ्कालेशो यस्मादित्यर्थः प्रमाणं शिवः एवम्भूते तत्राप्रामाण्यशङ्कापकलङ्कवद्भिः पाषण्डैः किं कर्त्तव्य मित्यर्थः ॥ ६ ॥

इति तृतीयस्तवककारिकाव्याख्यानम् ।

तत्साधकप्रमाणाभावात् इति पञ्चमविप्रतिपत्तिः नन्वीश्वरे साधकप्रमाणमेव नास्तीत्यत्राह ।

कार्य्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः ।
वाक्यात् सङ्ख्याविशेषाच्च साध्योविश्वविदव्ययः ॥ १ ॥

क्षित्यादि सकर्तृकं कार्य्यत्वात् घटवत् सकर्तृकत्वञ्च उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वम् । आयोजनं कर्म्म एवञ्च सर्गाद्यकालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म्म चेतन प्रयत्नपूर्व्वकं कर्म्मत्वात् अस्मदादिशरीरक्रियावत् । धृतीति ब्रह्माण्डादि पतनप्रतिबन्धकीभूतप्रयत्नवदधिष्ठितं धृतिमत्त्वात् वियति विहङ्गम धृतकाष्ठवत् धृतिश्च गुरुत्ववतां पतनाभावः । धृत्यादेरित्यादिपदात् नाशपरिग्रहः ब्रह्माण्डादि प्रयत्नवद्विनाश्यं विनाशित्वात् पाट्यमानपटवत् । पदात् पद्यतेऽनेनेतिव्युत्पत्त्या पदं व्यवहारः पटादिसम्प्रदाय व्यवहारः स्वतन्त्रपुरुषप्रयोज्यः व्यवहारत्वात् आधुनिकलिप्यादिव्यवहारवत् । प्रत्ययतः प्रामाण्यात् वेदजन्यज्ञानं कारणगुणजन्यं प्रमात्वात् प्रत्यक्षादिप्रमावत् । श्रुतेर्वेदात् वेदः पौरुषेयोवेदत्वात् आयुर्वेदवत् । किञ्च वेदः पौरुषेयोवाक्यत्वात् भारतवत् वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् अस्मदादिवाक्यवत् । संख्याविशेषात् द्व्यणुकपरिमाणं संख्याजन्यं परिमाणप्रचयाजन्यत्वे सति जन्यपरिमाणत्वात् तुल्यपरिमाणकपालद्वयारब्धघटपरिमाणात् प्रकृष्टतादृशकपालद्वयारब्ध घटपरिमाणवत् अणुपरिमाणञ्च न परिमाणजनकं नित्यपरिमाणत्वात् अणुपरिमाणत्वाद्वा एवञ्च सर्गादौ द्व्यणुकपरिमाणहेतुपरमाणुनिष्ठ द्वित्वसंख्या च नास्मदाद्यपेक्षाबुद्धिजा अतस्तदानीन्तनापेक्षाबुद्धि-

रोश्वरस्यैवेति। विश्वविदव्ययइति विशिष्टस्याव्ययत्वं तेन नित्यसर्व्व विषयकज्ञानसिद्धिः ॥ १ ॥

ननु शरीरविशिष्टस्य कर्त्तृतया विशेषणबाधात्मकोविशिष्टबाध इति कर्त्तृजन्यत्वव्यापकशरीरजन्यत्वाभावात् कर्त्तृजन्यत्वाभाव इति सत्प्रतिपक्षता च। यद्वा कर्त्ता शरीर्य्येव इति व्याप्तिर्विरोधिनी यद्वा व्याप्त्या यथादर्शनप्रवृत्तया शरीरी कर्त्ता च उपनेयः पक्षधर्म्मतया च क्षित्यादावशरीरीति साध्याप्रसिद्धिः विशेषणविशेष्यविरोधश्च यद्वा शरीरजन्यत्वानुपाधिना व्याप्यत्वासिद्धिरिति कार्य्यहेतौ पञ्च दोषास्तत्राह।

> न बाधोऽस्योपजीव्यत्वात् प्रतिबन्धोन दुर्बलैः।
> सिद्ध्यसिद्ध्योर्विरोधोन नासिद्धिरनिबन्धना ॥ २ ॥

ईश्वरे धर्म्मिणि शरीरबाधात् कर्त्तृत्वबाधोन अधिकरणज्ञानं विना अभावज्ञानासम्भावात् अस्य कार्य्यत्वस्य धर्म्मिसाधकस्याधिकरणज्ञानजनकतया अवश्यापेक्षणीयत्वेन बलवत्त्वात् एवञ्च न विशेषणबाधात्मकोविशिष्टबाधः प्रत्यक्षात्मकः ईश्वरोन कर्त्ता अशरीरत्वात् इत्यनुमानबाधोऽपि नेत्यर्थः। क्षित्यादि न सकर्त्तृकं शरीराजन्यत्वात् इति न प्रतिबन्धकं सत्प्रतिपक्षहेतोः शरीरांशवैयर्थ्यात् व्याप्यत्वासिद्ध्या दुर्बलत्वात्। तृतीयेऽपि कार्य्यत्वव्याप्तेः पक्षधर्म्मत्व सहकारात् विपक्षबाधकतर्कावतारात्त बलवत्त्वम् उपन्यस्तायाः कर्त्ता शरीर्य्येवेति व्याप्तेर्दुर्बलतया न प्रतिबन्धः चतुर्थे च यदि पक्षधर्म्मतया अशरीरी उपस्थितस्तदा न विरोधः कर्त्तृत्वस्याशरीरत्वसमानाधिकरणस्योपलम्भात् तदनुपस्थाने तु न विरोधः विरोधाश्रयस्यासिद्धेः पञ्चमे च विपक्षबाधकतर्कसत्त्वात् तदभावनिबन्धनाज्ञानरूपासिद्धिर्व्याप्यत्वासिद्धिर्वा न शरीरजन्यत्वोपाधेरपि विपक्षबाधकाभावेनापास्तत्वात् ॥ २ ॥

ननु यदीश्वरः कर्त्ता स्यात् शरीरी स्यादिति प्रतिकूलतर्कावतारस्तत्राह ।

तर्काभासतयान्येषां तर्कास्पृष्टिरदूषणम् ।
अनुकूलस्तु तर्कोऽत्र कार्य्यलोपोविभूषणम् ॥ ३ ॥

प्रतिकूलतर्कास्तावदीश्वरासिद्ध्या आश्रयासिद्धा इत्याभासाः । कर्त्तारं विना कार्य्यं न स्यादिति तर्कस्तु विभूषणं सहकारकः । अहं सर्व्वस्य प्रभवोमत्तः सर्व्वं प्रवर्त्तते इत्यागमश्चात्र । आर्षं धर्म्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतर इति तर्कानुगृहीतस्यागमस्य बलवत्त्वम् ॥ ३ ॥

ननु कार्य्यत्वं प्रयत्नजन्यत्वेऽप्रयोजकम् अत्राह ।

स्वातन्त्र्ये जडताहानि र्नादृष्टं दृष्टघातकम् ।
हेत्वभावे फलाभावोविशेषस्तु विशेषवान् ॥ ४ ॥

नहि कर्त्तारं हेतुं विना कार्य्यं परमाणोरिव यत्नवत्त्वेऽचैतन्यानुपपत्तिः अचेतनस्य चेतनप्रेरितस्यैव जनकत्वात् अदृष्टस्य दृष्टकारणसहकारेणैव फलजनकत्वम् । नच चेष्टायामेव भोक्तृप्रयत्नोहेतुः नतु क्रियामात्रमिति चेष्टायां विशेषप्रयत्नस्य हेतुत्वेऽपि क्रियासामान्ये प्रयत्नसामान्यस्य कारणत्वानपायात् अन्यथा वीजविशेषस्याङ्कुरविशेषे जनकत्वेनाङ्कुरसामान्यं प्रति वीजत्वेन हेतुताया अपि विलोपापत्तेः ॥ ४ ॥

ननु धृत्यादीनां प्रयत्नजन्यत्वे किं मानमित्यत्राह ।

कार्य्यत्वान्निरुपाधित्वमेवं धृतिविनाशयोः ।
विच्छेदेन पदस्यापि प्रत्ययादेश्च पूर्व्ववत् ॥ ५ ॥

धृतिविनाशयोः प्रयत्नजन्यत्वान्निरुपाधित्वं विच्छेदेनान्तराप्रलयेन आदर्शाद्यभावात् अर्व्वागदर्शी नाद्यव्यवहारमूलं व्यवहारानभिज्ञत्वादिति सर्गाद्यकालीनघटादिव्यवहारप्रवर्त्तकः पुरुषः

मिद्ध्यति। एवं प्रत्ययादेर्वेदजन्यधीप्रामाण्यादेरपि निरुपाधित्वं अथ वा कार्य्यत्वादिकमन्यथा व्याख्यायते। कार्य्यं तात्पर्य्यं तात्पर्य्यविषय एव शब्दप्रामाण्यमिति तात्पर्य्यं हि यस्य वेदे स एवेश्वरः। आयोजनं व्याख्यानं वेदास्तदर्थविद्याख्याताः महाजनपरिगृहीतवाक्यत्वात् अव्याख्यातत्वे पदार्थानवगमेऽननुष्ठानापत्तेः एकदेशदर्शिनश्च व्याख्यायां नाश्वासः एवं धृतिर्धारणं धृत्यादेरिति आदिग्रहणात् अनुष्ठानसंग्रहः एवमीश्वरादिपदार्थतया ईश्वरसिद्धिः। तदुक्तम् उद्देश एव तात्पर्य्यं व्याख्या विश्वदृशः मतौ। ईश्वरादिपदं सार्थं लोकवृत्तानुसारतः। उद्देश इच्छाविशेषः एवं अहं सर्व्वस्य इत्यादावहं पदं स्वतन्त्रोच्चारयितृपरं लोकस्यान्ते सतात्पर्य्यकशब्दस्यैव प्रमाणत्वात्। य एव लौकिकास्त एव वैदिका इति लौकिकाहमादिपदवदलौकिकेऽपीयमेव व्यवस्था प्रत्ययतः विधिप्रत्ययात् आप्ताभिप्रायो विध्यर्थः यस्याभिप्रायः स एवेश्वरः ॥ ५ ॥

प्रवृत्तिः कृतिरेवात्र माचेच्छातो यतश्च सा।
तज्ज्ञानं विषयस्तस्य विधिस्तज्ज्ञापकोऽथवा ॥ ६ ॥

विधिजन्यज्ञानात् प्रवृत्तिर्दृश्यते सा इच्छातश्चिकीर्षातः चिकीर्षा च कृतिसाध्यत्वेष्टसाधनताज्ञानात् तज्ज्ञानस्य विषयः कार्य्यत्वं इष्टसाधनत्वञ्च विधिरिति प्राचां मतं स्वमतमाह तज्ज्ञापकोऽथवेति इष्टसाधनत्वानुमापक आप्ताभिप्रायो विधिप्रत्ययार्थः ॥ ६ ॥

प्रवृत्तिप्रयोजकेच्छाहेतुज्ञानविषयं परिशेषयति

इष्टहानेरनिष्टाप्तेरप्रवृत्तेर्विरोधतः।
असत्वात् प्रत्ययत्यागात् कर्तृधर्म्मानसङ्गरात् ॥ ७॥

स्पन्दस्य कर्तृधर्म्मस्य प्रवृत्तिप्रयोजकत्वे आत्मानं विजानीयादित्यत्राप्रवृत्तिप्रसङ्गात् ग्रामं गच्छतीत्यतः प्रवृत्त्यापत्तेः। यत्नस्य विधित्वे दोषमाह अप्रवृत्तेः आख्यातान्तरेण यत्ने बोधितेऽपीष्ट

साधनत्वाप्रतिसन्धाने अनिष्टसाधनत्वज्ञाने वाऽप्रवृत्तेः इच्छायाविधित्वे दोषमाह विरोधतइति इच्छाया विधित्वे इच्छैव तज्ज्ञानं जननीयं इच्छाया ज्ञानेन चेच्छा जननीया इत्यन्योन्याश्रयः तदिदमुक्तं विरोधतइति। नन्विच्छाज्ञानं लिङा जननीयं इत्यत्राह असत्त्वादिति इच्छाज्ञाने जाते प्रवृत्तिहेतुस्वरूपसदिच्छाभावात् प्रवृत्तिर्न स्यात् इच्छायाः स्वरूपसत्या एव प्रवृत्तिहेतुत्वात्। नच लिङ्श्रवणकाले इच्छा स्वरूपसतीत्यर्थः। ननु लिङ्व इच्छाजनिका इत्यत्राह प्रत्ययत्यागादिति इच्छाकारणत्वेन गृहीतस्य प्रत्ययस्य ज्ञानस्य कारणस्य त्यागापत्तेः व्यभिचारादित्यर्थः। लिङ्श्रुतिकाले सुखत्वादिप्रकारकधीरस्त्वेच्छा लिङर्थं इत्यत्राह सङ्करादिति इष्टसाधनताज्ञानस्य उपायेच्छाहेतोरवश्यं स्वीकारात् तत्र च कारणान्तराभावात् लिङ्पदमेव कारणमतः फलेच्छाज्ञानं न प्रवृत्तिहेतुः तद्विनापि प्रवृत्तिसम्भवात् तथाच सङ्करादिष्टसाधनत्वज्ञानरूपसाधनसहचारत्वात् इच्छाज्ञानस्येच्छाजनकत्वे मानाभावेन तस्य लिङ्पदजन्यत्वे मानाभावाच्चेति ॥ ७ ॥

ननु यत्नज्ञानमेव प्रवर्त्तकमस्तु आख्यातान्तरस्य न यत्नवाचकं अनुकूलव्यापारमात्र एव आख्यातशक्तेः रथोगच्छतीत्यादौ तथा कल्पनात् तत्राह।

कृताकृतविभागेन कर्त्तृरूपव्यवस्थया।
यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना ॥ ८ ॥

घटः कृतोऽङ्कुरोन कृत इति व्यवहारवत् कुलालादिः कर्त्ता न कारकान्तरमिति कृञ्धात्वर्थोऽपि कृतिः। ननु यत्नपदस्य पर्य्यायता स्यादतआह पूर्व्वेति परस्मिन्नुत्तरकालवर्त्तिनि फले विद्यमाने सैव कृतिरेव पूर्व्वा साधनीभूता भावना फलानुकूलयत्न एवाख्यातार्थः यद्वा फलानुकूलव्यापारधात्वर्थं प्रत्ययजनिका पूर्व्वा परस्मिन् पूर्व्वा-

परीभूतवत्त्वे सति कृतिराख्यातार्थः । तथाच प्रयत्नवत्त्वमनुकूलत्व पूर्व्वापरीभूतवत्त्वमिति त्रयमर्थः ॥ ७ ॥

ननु धातुना यत्नः प्रतीयते आख्यातस्य च अनुकूलव्यापारार्थकत्वम् आक्षेपादेव च यत्नलाभ इत्यत आह ।

भावनैव हि यत्नात्मा सर्व्वाख्यातस्य गोचरः ।
तया विवरणध्रौव्यादाक्षेपानुपपत्तितः ॥ ८ ॥

तया कृत्या तद्वाचकपदेन पचति पाकं करोतीति विवरणात् तत्र शक्तिः अनुकूलव्यापारस्य यत्नानाक्षेपकत्वात् वर्त्तमानपाकानुकूलव्यापारस्याचेतनेऽपि भावात् ओदनमिति कर्म्मपदोत्तरं पचति भुङ्क्ते वेति जिज्ञासा च कर्म्मणः कृतिव्याप्यत्वप्रतिसन्धानेन यथा पचतीत्यनन्तरं कर्म्मादौ जिज्ञासा ॥ ८ ॥

ननु कर्त्तुरपि विवरणात् तत्रापि शक्तिराख्यातस्य स्यात् तत्राह ।

आक्षेपलभ्ये संख्येये नाभिधानस्य कल्पना ।
संख्येयमात्रलाभे तु साकाङ्क्षा व्यवस्थितिः ॥ १० ॥

आख्यातवाच्यया संख्यया आश्रयस्य आक्षेपादेव लाभान्न कर्त्तरि शक्तिकल्पना प्रथमान्तपदोपस्थाप्यत्वे सति आख्यातार्थविशेष्यत्वमाक्षेपलभ्यत्वं भुक्ता इत्यादौ क्तान्तार्थानन्तर्य्यवारणाय विशेष्यदलम् सुप्यते इत्यादौ वर्त्तमानत्वविशेष्यत्वं स्वापस्यापीति सत्यन्तदलम् । चैत्रस्तण्डुलं पचतीत्यत्र द्वितीयार्थकर्म्मतावरुद्धत्वात् तण्डुलस्य न तत्र भावनाकाङ्क्षेति भावना शुद्धप्रातिपदिकार्थान्वयिनी अतएव [illegible] भावनान्वेति तं तं सङ्ख्यापीत्येकपदोपात्तभावनान्वयबलात् कर्त्रादि सङ्ख्याभिधान एव च प्रथमेति एवं कर्म्मापि नाख्यातपदवाच्यम् ॥१०॥

नन्वस्तु कर्म्म धर्म्मविधिस्तत्राह ।

अतिप्रसङ्गान्न फलं नापूर्व्वं तत्त्वहानितः ।
तदलाभान्न कार्य्यञ्च न क्रियाप्यप्रवृत्तितः ॥ ११ ॥

कर्म्म स्वर्गादि तद्धर्म्मः कार्य्यत्वं यदि विधिस्तत्राह अतिप्रसङ्गान्न फलं स्वर्गं कार्य्यत्वज्ञाने ऽसति स्वर्गासाधनेऽपि प्रवृत्त्यापत्तेः यदि कर्म्मापूर्वं तद्धर्म्मः कार्य्यत्वं विध्यर्थस्तत्राह नापूर्व्वं तत्त्वहानितः शाब्दबोधपूर्व्वं नोपस्थितमित्यतएवापूर्व्वं पूर्व्वमुपस्थितौ एव न तत्त्वम् । अनुपस्थितौ च कथं तत्र शक्तिधीः । ननु कार्य्यत्वरूपेण शक्तिधीः शाब्दबोधे तु योग्यतया अपूर्व्वस्य कार्य्यविशेषस्य भानं तत्राह तदलाभान्न कार्य्यञ्चेति नित्यनिषेधापूर्व्वयोरलाभ प्रसङ्गात् तत्र फलकामस्य नियोज्यस्याभावात् । यद्वा ननु कार्य्यत्वेनोपलक्षितायामपूर्व्वव्यक्तौ शक्तिग्रहः गन्धवत्त्वेनोपलक्षितायां पृथिवीत्वविशिष्टायां व्यक्तौ पृथिवीपदस्येव इत्यत्राह तदलाभात् अपूर्व्वत्वविशिष्टापूर्व्वव्यक्त्यनुपस्थितेः गन्धवत्त्वेनापि हि पृथिवीत्व विशिष्टस्य स्मरणमनुमानं वा सम्भवति प्रागनुभवात् प्रकृते तथात्वेऽपूर्व्वत्वव्याघातादित्यर्थः । ननु कर्म्म यागादि तद्धर्म्मः कार्य्यत्वं विधिरित्यत्राह न क्रियापीति अनिष्टसाधनताधीकाले प्रवृत्त्यदर्शनात् । अत्र अपिना नापूर्व्वमपि उक्तदोषादित्यर्थः ॥ ११ ॥

ननु करणं शब्दः तद्धर्म्मोऽभिधा तज्ज्ञानं प्रवर्त्तकमतएवाहुः अभिधां भावनामाहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः । अभिधा यागप्रवृत्तिकार्य्यमिति धीः शब्दादाख्याताच्च उपादानादुत्पत्त्यनुकूलक्रियारूपेयमित्यत्राह ।

असत्त्वादप्रवृत्तेश्च नाभिधापि गरीयसी ।
बाधकस्य समानत्वात् परिशेषोऽपि दुर्लभः ॥ १२ ॥

अभिधायां मानाभावात् अभिधाशब्दतोऽभिधाज्ञाने अप्रवृत्तेः गरीयसी उचिता लिङर्थतयेति शेषः । ननु अन्यस्य लिङर्थत्वे बाधात् परिशेषेणाभिधा लिङर्थ इत्यत्राह बाधकस्येति प्रकृतेऽपि बाधकसम्भवात् ॥ १२ ॥

ननु कारणस्य यागादेर्धर्म्म इष्टसाधनत्वं विध्यर्थोऽस्तु तत्राह ।

हेतुत्वादनुमानाच्च मध्यमादौ वियोगतः ।
अन्यत्र क्लृप्तसामर्थ्यान्निषेधानुपपत्तितः ॥ १३ ॥

विध्यर्थस्य इष्टसाधनताया हेतुत्वात् लिङ्गतयोपन्यासात् । नच स्वस्य स्वलिङ्गत्वमिति अग्निकामोदारुणी मथ्नीयादित्युक्ते कुत इत्याकाङ्क्षायां वक्तारो वदन्ति यतोदारुद्वयमथनमग्निसाधन मित्यर्थवादादिष्टसाधनताबोधानन्तरमपि विधेरनुमानात् यदि चानुमितेनापि विधिना इष्टसाधनत्वमेव बोध्यं तदा तदनुमानवैयर्थ्यं तरति मृत्युं तरति ब्रह्महत्यामित्यादौ मृत्युब्रह्महत्यासन्तरणकामो ऽश्वमेधेन यजेतेति वाक्यानुमानस्य सर्वसम्मतत्वात् मध्यमादौ वियोगतः मध्यमोत्तमपुरुषलिङ इष्टसाधनतावियोगात् कुर्य्याः कुर्य्यामित्यत्राज्ञादिकं प्रतीयते आज्ञाभिप्राय एव इति प्रथमपुरुषोऽपि इच्छार्थः अन्यत्र क्लृप्तसामर्थ्यात् अधोषणार्थे लिङ इच्छावाचकत्वकल्पनात् निषेधानुपपत्तितः न कलञ्जं भक्षयेदित्यत्रेष्टसाधनत्वस्य निषेधस्य बाधितत्वात् बलवदनिष्टाननुबन्धित्वञ्च न विध्यर्थः श्येनेनाभिचरन् इत्यादौ असम्भवात् अप्रवर्त्तमानपुरुषस्य बलवद्द्वेषविषयत्वात् बलवद्द्वेषविषयदुःखजनकत्वसामान्याभावस्य बाधितत्वादिति ॥ १३ ॥

स्वमतमाह ।

विधिर्व्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः ।
अभिधेयोऽनुमेया तु कर्त्तुरिष्टाभ्युपायता ॥ १४ ॥

प्रवृत्तिनिवृत्तिविषय आप्ताभिप्रायः लिङादिभिः प्रत्ययैरभिधेयः इष्टसाधनता त्वनुमेया । वस्तुतस्तु ईश्वरेच्छायाः सर्व्वविषयकत्वात् निषेधविरोधः बलवदनिष्टाननुबन्धित्वेनेच्छायाः शक्यत्वे गौरव मिति प्राचीनमतमेव साधीयः ॥ १४ ॥

श्रुतेरित्यस्य व्याख्यान्तरमाह ।

कृत्स्न एव च वेदोऽयं परमेश्वरगोचरः ।
स्वार्थद्वारैव तात्पर्य्यं तस्य स्वर्गादिवद्विधौ ॥ १५ ॥

सर्वत्र वेदभागे ईश्वरः प्रतिपादितः यद्योवै विष्णुः पश्यत्यचक्षुरित्यादिश्रुतिषु अतस्याक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठत इत्यादिषु न तु सिद्धतया अमीषामन्यत्र तात्पर्य्यं यथा स्वर्ग नरकादिबोधकानां तथा ईश्वरमुपासीतेति विधेरेकवाक्यतया तेषां त्वन्मतेऽपि प्रामाण्यमेव अन्यथा स्वर्गादिपदानामपि स्वार्थे प्रामाण्यं न स्यात् तदेतदुक्तं स्वार्थद्वारैवेति स्वार्थप्रतिपादनद्वारा एव विधौ सिद्धार्थतात्पर्य्यात् वाक्यादेदिकप्रशंसानिन्दावाक्यानि प्रशंसानिन्दा ज्ञानपूर्व्वकाणि प्रशंसानिन्दावादवाक्यत्वात् परिणतिसुरसमाम्रफल मित्यादिवत् ॥ १५ ॥

संख्याविशेषादित्यस्य व्याख्यान्तरमाह ।

स्यामभूवं भविष्यामीत्यादौ संख्या प्रवक्तृगा ।
समाख्यापि च शाखानां नाद्यप्रवचनादृते ॥ १६ ॥

वैदिकोत्तमपुरुषेण स्वतन्त्रोच्चारयितुः संख्या वाच्या स ऐक्षत एकोऽहं बहु स्यामित्यादि बहुत्वम् उत्तमपुरुषश्रुतेः । संख्यापदार्थ मन्यमाह समाख्येत्यादि सर्वासां शाखानां हि काठककालापकाद्याः संख्याः संख्याविशेषाः श्रूयन्ते ते च नाध्ययनमात्रनिबन्धनाः अध्येतृणामानन्त्यात् अनादावन्यैरपि तदध्ययनात् तस्मादतीन्द्रियार्थ- दर्शी भगवानेव ईश्वरः कारुणिकः सर्गादावस्मदाद्यदृष्टाकृष्टकाठ- कादिशरीरविशेषमधिष्ठाय यां यां शाखामुक्तवान् तस्याः शाखाया स्तन्नाम्ना व्यवदेश इति सिद्धमीश्वरमननं मोक्षहेतुः ॥ १६ ॥

यस्येश्वरे न विश्वासस्तं प्रत्याह ।

इत्येवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः

किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक त्वयैव कृपया ते तारणीया नराः ॥ १७ ॥

इतिशब्दः स्वरूपे एवंशब्दः प्रकारार्थः शैलसारः लौहमति-कठिनशिला वा । प्रस्तुते ईश्वरे विप्रतीपविधयः प्रतिकूलकराः तादृशा अपि उच्चैरतिशयेन काले भवच्चिन्तकाः शङ्काकलङ्कशून्याः कार्य्याः ॥ १७ ॥

अस्माकन्तु निसर्गसुन्दर चिराच्चेतो निमग्नं त्वयि
त्यक्तानन्दनिधौ तथापि तरलं नाद्यापि सन्तृप्यते ।
तन्नाथ त्वरितं विधेहि करुणां येन त्वदेकाग्रतां
याते चेतसि नाप्नुवाम शतशो याम्याः पुनर्यातनाः ॥ १८ ॥

त्यक्ता तनु सन्तृप्यत इति कर्म्मकर्त्तरि ।

इत्येष नीतिकुसुमाञ्जलिरुज्ज्वलश्री
र्यद्वासयेदपि च दक्षिणवामकौ द्वौ ।
नो वा ततः किममरेशगुरोर्गुरुस्तु
प्रीतोऽस्त्वनेन पदपीठसमर्पणेन ॥ १९ ॥

इति पञ्चमः स्तवकः ।

नो वासयेत्ततः किमस्माकम् ।

इति श्रीहरिदासभट्टाचार्य्यविरचितकुसुमाञ्जलिकारिका
व्याख्यानं समाप्तम् ।

# शब्दशक्तिप्रकाशिका



श्रीजगदीशतर्कालङ्कारभट्टाचार्यविरचिता



गवर्णमेण्टसंस्थापितसंस्कृतपाठशालाध्यक्षमहोदयानामनुज्ञया

संस्कृतयन्त्रे मुद्रिता।

कलिकाता

शकाब्दाः १,७६९

# शब्दशक्तिप्रकाशिका



तर्कं तत्त्वश्च विदुषां विदुषां तोषकारिका ।
क्रियते जगदीशेन शब्दशक्तिप्रकाशिका ॥

ग्रन्थारम्भे विघ्नविघाताय समुचितां शब्दमयीं देवतां ग्रन्थकृत् स्मरति स्म ।

अनुभवहेतुः सकले सद्यः समुपासिता मनुजे ।
साकाङ्क्षासन्ना च स्वार्थे योग्या सरस्वती देवी ॥

इतरा तावद्देवता सम्यगुपासिताप्युपासके न साकाङ्क्षा साकाङ्क्षापि वा नासन्ना आसन्नापि वा न स्वस्योपासितुरभिलषितार्थे योग्या योग्यापि वा न समस्तोपासकेऽनुभवस्य जनिका जनिकापि वा न सद्यः किन्तु कालक्रमेणैव सरस्वती तु देवी सकलमनुजे एव साकाङ्क्षा आसन्ना योग्या चोपासिता सती सद्य एवानुभवं तनुते अतो देवतान्तरमपेक्ष्योत्कर्षवतीयमवश्यमुपास्येत्यत्र तात्पर्य्यम् ॥

अथ शब्दो यदि स्वार्थस्यानुभवे भवेद्धेतुः प्रात्यक्षिक एवोपनयिके तत्र नाकाङ्क्षाद्युपयोगस्तद्भिन्ने चेदानुमानिक एव नच तत्र सद्यः साकाङ्क्षत्वादिधीमात्रेण व्याप्तिबुद्ध्यादेरप्यधिकस्यापेक्षणादित्याशङ्कामपनेतुमन्वयबोधनामकमनुभवान्तरं दर्शयति ।

साकाङ्क्षशब्दैर्यो बोधस्तदर्थान्वयगोचरः ।
सोऽयं निश्चितार्थत्वान्न प्रत्यक्षं नचानुमा ।

अस्ति तावद्गौरस्ति गामानयेत्यादिसाकाङ्क्षशब्देभ्यः स्वस्ववृत्त्या पदार्थानामुपस्थित्युत्तरं गवादावस्तित्वादेरन्वयावगाही विलक्षणो बोधो यत्रान्वयव्यतिरेकाभ्यामाकाङ्क्षादिमत्तया शब्दस्यावगमो हेतुर्न तु पदार्थानामुपस्थितिमात्रं विशिष्टमतेरानुभविकत्वादन्यथानुमितेरप्यपलापापत्तेः । नचासौ स्मृतिः समानाकारसंस्काराप्रभवत्वात् नापि साक्षात्कारः साकाङ्क्षपदेनैव प्रकारान्तरेणाप्युपस्थितार्थस्योपनयमर्य्यादयावगाहितापत्तेः नचेष्टापत्तिरनुभवविरोधात् तदुत्तरं तथाविधानुव्यवसायापत्तेश्च । तत्तदर्थविषयकत्वेन शाब्दमतेरनुव्यवसायं प्रति तत्तदर्थसाकाङ्क्षपदजन्यतद्गोचरशाब्दत्वेन विषयविधया हेतुत्वकल्पनायामतिगौरवात् इतरबाधलब्धस्य किन्त्वेतरत्वादेरपदार्थस्यापि अवगाहित्वेन शाब्दमतेरनुव्यवसीयमानत्वात् गवादावस्तित्वादेरिवास्तित्वादावपि गवादेर्भानप्रसङ्गस्य तावताप्यनुद्धाराच्च । अतएवासौ नानुमितिरपि पूर्व्वपरामर्शस्य वस्तुमात्रस्यैवामतिबाधके शाब्दधीविषयतापत्तेः । नच तत्तदर्थगोचरशाब्दधियं प्रति साकाङ्क्षपदजन्यायास्तत्तदर्थगोचरस्मृतेः कारणत्वकल्पनान्नैष दोषः तावतापि पदार्थानामन्वयधीदशायामपदार्थानामपि स्वसामग्रीबलेन प्रत्यक्षानुमित्योरन्यतरप्रसङ्गस्य दुर्व्वारतापत्तेः शाब्दधियः प्रत्यक्षत्वाभ्युपगमे प्रत्यक्षादिसामान्यं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वासम्भवात् शाब्दान्यप्रत्यक्षत्वाद्यवच्छिन्नं प्रति तस्यास्तथात्वमपेक्ष्य शाब्दधियः प्रत्यक्षादिभिन्नत्वकल्पनायामेव लाघवाच्च ।

अथ लिङ्गजन्यत्वेनान्वयबुद्धेरनुमितित्वसिद्धावनायत्या शाब्दान्यानुमित्यां तत्सामग्र्याः प्रतिबन्धकत्वं वाच्यमतो लिङ्गजत्वमेव शाब्दधियः खण्डयति ।

योग्यतार्थगताकाङ्क्षा शब्दनिष्ठानुभाविका ।
प्रत्येकं वा मिलित्वा वा नैते लिङ्गमसिद्धितः ।

गवादावस्तित्वादेरनुभवार्थं न तावदस्तित्वादेर्बाधविरहित्वरूपं योग्यतामात्रं लिङ्गं बाधनिश्चयाभावेनान्यथासिद्धस्य योग्यतानिश्चयस्यानावश्यकत्वात् योग्यतामात्रलिङ्गकसंसर्गानुमानस्यान्वयबुद्धित्वे घटः कर्मत्वमित्यादिस्थलीयस्यापि तस्य तथात्वापातात् योग्यतायाः संशयस्थलेऽप्यन्वयबुद्धेरानुभविकत्वाच्च । गवादावस्तित्वादेरन्वयबोधानुकूलानुपूर्व्वीपर्य्यवसिता त्वाकाङ्क्षा स्वयमसिद्धा कथमस्तित्वादेरन्वयं साधयेत् अतएव अस्तित्वादेर्योग्यताविशिष्टमप्याकाङ्क्षावत्त्वं न तदन्वयस्यानुमापकमसिद्धेः । अथ गौरस्तितावान् स्वधर्म्मिकास्तित्वान्वयबोधानुकूलाकाङ्क्षाश्रयपदस्मारितत्वात् घटवत् अस्तिपद समभिव्याहृतगोःपदस्मारितत्वाद्वा पटुर्व्वदित्याद्यनुमानत एवास्वन्वयधियोऽन्यथासिद्धिः पदानामेकवाक्यतापन्नत्वरूपसमभिव्याहृतत्व निश्चयं विना न्यायनयेऽप्यन्वयबोधस्यानुत्पत्त्या पूर्व्वं तस्यावश्यकत्वात् । नच विनष्टे भाविनि वा घटपटादौ व्यभिचारः स्वार्थानुमाने स्वरूप सतस्तस्याकिञ्चित्करत्वात् एकविधव्यभिचारग्रहसत्त्वेऽप्यन्यविधव्याभि निश्चयस्य सम्भवाच्च समानप्रकारकस्यैव व्यभिचारग्रहस्य व्याप्तिधी विरोधित्वात् इति नव्यवैशेषिकाः तन्न गवादेः पदस्मारितत्वाद्यभाव ग्रहदशायामुत्पन्नस्य गौरस्तीत्याद्यन्वयबोधस्योक्तहेतुनाप्यनिष्पत्तेः पदजन्या हि पदार्थस्मृतिः स्वरूपसत्येवान्वयबुद्धावुपयुज्यते न तु ज्ञाता प्रमाणाभावात् पदस्मारितस्यापि तत्स्मारितत्वग्रहादन्वयधी प्रसङ्गाच्च । एतेन गोःपदमस्तित्ववद्गोगोचरज्ञानपूर्व्वकम् अस्तिपदसाकाङ्क्षगोःपदत्वात् यन्नैवं तन्नैवं यथाकाशमित्येवं पदपक्षकमप्यनुमानं कणभक्षपक्षानुसारिणां परास्तं गवादिपदानां ज्ञानपूर्व्वकत्वाद्यभावनिश्चयदशोत्पन्नस्य गवादिमुख्यधर्म्मिकास्तित्वाद्यन्वयबोधस्य

सार्व्वजनीनस्योक्तलिङ्गादनिष्पत्तेः वाक्यार्थस्यापूर्व्वत्वेन तद्गर्भ साध्यस्य प्रायशः प्रागनुपस्थित्यानुमानायोगाच्च । वस्तुतोवाक्यार्थ बोधस्यानुमितित्वे सत्येव साकाङ्क्षपदादिलिङ्गकत्वं कल्प्यं तदेव त्व-सिद्धं प्रमाणाभावादस्तित्वेन गामनुमिनोमीत्यादेरनुव्यवसायस्य तत्रा सत्त्वात् प्रत्युत गौरस्तीतिवाक्यादस्तित्वेन गौः श्रुतोनत्वनुमित इत्यनु-भवाच्च । श्रोतव्योमन्तव्य इत्यादिप्रयोगदृष्ट्या शाब्दत्वस्यापि प्रत्यक्षतः शक्यतावच्छेदकत्वात् । नचासौ भ्रान्तिर्बाधकाभावात् न चेदेवमनु-मितिमात्रस्य पदजन्यत्वं प्रकल्प्यान्वयबोधत्वं किमिति न रोचयेः अनुमिताविवान्वयमतावपि समानविषयकप्रत्यक्षसामग्र्यादेः प्रति-बन्धकतया तदभावजन्यत्वेनैकर्षेषस्य दुष्करत्वात् पटादिपदैरर्थस्य पटादेः स्मरणे सति तदीयव्याप्तेरिव दहनाद्यर्थैस्तदर्थकवह्न्यादि पदस्य स्मरणोत्तरं तदीयाकाङ्क्षाद्यवगमस्य सुवचत्वात् वाच्यतावद्वाच-कत्वस्यापि सम्बन्धस्य स्मारकतायानविशिष्टत्वात् । किञ्च घटादन्य इत्यादिवाक्याद्घटप्रतियोगिताकान्यत्वादिप्रकारेण निरवच्छिन्नविशे-ष्यताकोघटान्यस्य बोधः सर्व्वजनसिद्धः स चास्माकं तादृशानुपूर्व्वीक पदज्ञानत्वेन तथाविधान्वयबोधं प्रति हेतुत्वादुपपद्यते परेषान्तु भेदोघटप्रतियोगिताकस्तत्साकाङ्क्षान्यादिपदस्मारितत्वादित्यादिरीत्या अनुमित्या न तन्निर्व्वाहः पक्षविधयान्यत्वस्य भानेऽप्यन्यत्वप्रकारे-णान्यस्य तत्राभानात् । नच तत्रान्यपदमेव घटान्यत्वप्रकारेण घटान्यस्य लक्षकं घटादित्यस्य व्यर्थतापत्तेः अन्यथा घटोऽस्तीत्यादा-वपि घटादिपदस्यैवास्तित्वादिविशिष्टघटादिलक्षकत्वसम्भवात् तत्रा-प्यस्तित्वघटयोरन्वयबोधापलापापत्तेरित्यास्तां विस्तरः ।

साकाङ्क्षत्वादिधीरिव वाक्यार्थगोचरज्ञानवद्युक्तत्वरूपस्यासोक्तत्व-स्यापि निश्चयः शाब्दधीहेतुरतोनैकपदार्थधर्म्मिकोऽपरपदार्थस्यान्वय बोधोऽनुमितिः सिद्धिसत्त्वे विनानुमित्सां तदसम्भवात् परन्त्वनुमिते

रन्यएव किन्त्वसौ गृहीतग्राहित्वान्न प्रमा यज्जातीयविशिष्टज्ञानत्वाव-च्छेदेन समानाकारनिश्चयोत्तरत्वं तज्जातीयान्ययथार्थज्ञानस्यैवा-गृहीतग्राहित्वेन प्रमात्वात् अतएव धारावाहिकप्रत्यक्षव्यक्तीनां समानाकारग्रहोत्तरवर्त्तित्वेऽपि न तासां प्रमात्वहानिः हानिस्तु समानाकारानुभवसमुत्थानां स्मृतीनामिति जरन्मीमांसकानां समा-धानं निरस्यति ।

नाप्तोक्तता तु वाक्यार्थगर्भा ज्ञातोपयुज्यते ।
वाक्यार्थानामपूर्व्वत्वात्संशयेऽप्यन्वयोदयात् ॥

यद्येकपदार्थवदपरपदार्थपर्य्यवसन्नस्य वाक्यार्थस्य ज्ञानवदुक्तत्व रूपाया आप्तोक्ततायां निश्चयः शाब्दमतेः कारणं स्यात् स्यादपि तेनैव रूपेण साध्यनिश्चयेन प्रतिबन्धादेकपदार्थपक्षिकाया अपरपदार्थानु-मितेरनुत्पादो नचैवं शाब्दधियः पूर्व्वं वाक्यार्थस्योपस्थित्यनियमेन तद्गर्भस्याप्तोक्तत्वस्यापि मतेरनावश्यकत्वात् अन्यथा वेदस्याप्यनु-वादकतापत्तेः एकपदार्थेऽपरपदार्थस्य शब्दे वाक्यार्थज्ञानवदुक्तत्वस्य संशयेऽपि शाब्दमतेरुत्पादाच्च । अतएवाप्तोक्तत्वस्य संशये व्यतिरेक निश्चये वान्वयबुद्धेरनुत्पादादवश्यन्तन्निश्चयस्तत्र हेतुरित्यपि प्रत्युक्तम् असिद्धेः । ननु माभूदाप्तोक्तत्वस्य निश्चयानुरोधेन सिद्धसाधनं तात्पर्य्यस्य तु स्यात् तन्निश्चयस्यान्वयधीहेतुत्वात् अन्यथा घटकर्म्म-त्वादिपरत्वाभावस्य घटकर्म्मत्वाद्यन्यमात्रपरत्वस्य वा निश्चयेऽपि घट मित्यादिवाक्यात् कर्म्मत्वं घटीयमित्याद्यन्वयबोधापत्तेरिति चेन्न कर्म्मताधर्म्मिकघटाद्यन्वयधीपरत्वाभावनिश्चयदशायां प्रमेयत्वादि प्रकारेण घटकर्म्मत्वादिपरत्वस्य निश्चयेऽपि घटीयं कर्म्मत्वमित्यन्वय मतेरनुत्पत्त्या कर्म्मताधर्म्मिकघटान्वयबोधपरत्वप्रकारकनिश्चयत्वेनैव तात्पर्य्यधियस्तस्यां कारणत्वेन वाक्यार्थस्य तत्रानिवेशात् । वस्तुतः समा नानुपूर्व्वीकस्यैव वाक्यान्तरस्य तस्यैव वा कालान्तरमन्तर्भाव्य घटीय

कर्म्मत्वादिपरत्वनिश्चयसत्त्वेऽपि श्रूयमाणवाक्यव्यक्ताविदानीमन्तर्भावेण तत्परत्वस्यानिश्चयेऽभावनिश्चये वा घटीयं कर्म्मत्वमित्याद्यन्वयमतेरनुत्पादाद्विशिष्यैव तत्तद्वाक्यव्यक्तिधर्म्मिकस्य घटकर्म्मत्वादिपरत्वनिश्चयस्य तत्तदन्वयबोधहेतुत्वमुपेयं तथाच तत्तद्धेतुभूतानां प्रकरणज्ञानाभिधानामेव विज्ञानव्यक्तीनान्तथात्वमुचितम् अवश्यंक्लृप्तपूर्व्ववर्त्तिताकत्वात् । अतएव सैन्धवमानय इत्यादावपि लवणपरत्वधीर्न लवणाद्यन्वयबुद्धौ हेतुः किन्तु तदर्थ्थकत्वेनाभिमतं भोजनादिप्रकरणस्य प्रतिसन्धानमिति न्यायसिद्धान्तः । एवञ्च वाक्यार्थप्रतीतिजनकतयाभिप्रेतत्वलक्षणस्य तात्पर्य्यस्य ज्ञानमवश्यं शाब्दसामान्ये हेतुस्तस्य संशये व्यतिरेकनिश्चये च तदनुत्पादात् तन्निश्चयस्यैव युगपदनेकार्थोपस्थितावेकार्थमात्रान्वये विनिगमकत्वात् लक्षणाकल्पकत्वात् मुख्यार्थबाधस्य सर्व्वत्र लक्षणाया असम्भवात् तथाच तात्पर्य्यावच्छेदकतयैव सर्व्वत्र वाक्यार्थसिद्धेः प्रत्यक्षानुमितिभ्यां भिन्नमनुभवं भावयन्नपि शब्दो गृहीतग्राहित्वेनानुवादक इति प्रभाकरमतमप्यनादेयमित्यास्तां विस्तरः ।

ननु स्वार्थान्वयगोचरोबोधः साकाङ्क्षैरपि सार्थकैरेव शब्दैः सम्पादनीयोनतु निरर्थकैस्तत्र कोऽसौ सार्थकः कतिविधस्तेत्याकाङ्क्षायामाह ।

शब्दान्तरमपेक्ष्यैव सार्थकः स्वार्थबोधकृत् ।
प्रकृतिः प्रत्ययश्चैव निपातश्चेति स त्रिधा ॥

यादृशः शब्दः शब्दान्तरं सहकृत्यैव स्वस्य स्वघटकस्य वा वृत्त्युपस्थाप्ययादृशार्थावगाहिबोध प्रत्यनुकूलः स तथाविधार्थे सार्थकः घटपाचकाद्याः प्रकृतयः सुप्तिङाद्याः प्रत्ययाः चादयोनिपाताश्च स्वोपस्थाप्यार्थस्य बोधं नियमतः शब्दान्तरं सहकृत्य जनयन्ति वाक्यानि पुनरसहकृत्यापि । शशविषाणादिकः शब्दोऽपि शशीय-

त्वादिना विषयादेरन्वयबोधमादधानस्तादृशविषयताकबोधने सार्थकएव परन्त्वयोग्यः। सचायं त्रिविध एव प्रकृतिः प्रत्ययो निपात श्चेति शपश्यनादिविकरणो नुमाद्यागमश्चान्वयबोधने प्रकृत्यादीनां सहायोऽपि न स्वार्थोपस्थितिद्वारा येन तमादाय चतुरादिविधः सार्थकःस्यात्। पुत्रो वः इत्यादावपि युष्मदादिसम्बन्धो न वसाद्यादेशस्यार्थः किन्तु तदादेशिनोयुष्माकमित्यादिवाक्यस्य अतः पूर्व्वपदमपेक्ष्येव तादृशसम्बन्धबोधानुकूले तत्र न प्रसङ्गः। सदृशाद्यर्थेषु प्रकृत्यादिभ्योभिन्नेषु निभनीकाशादिशब्देष्वतिप्रसङ्गस्तु समासान्तर्गतत्वनियतस्वार्थबोधकताकान्यत्वेन विशेषणाद्वारणीयः।

तत्र प्रथमोद्दिष्टां प्रकृतिं लक्षयति।

स्वेतरार्थानवच्छिन्नयत्स्वार्थस्यावबोधने।
यच्छब्दनिश्चयोहेतुः प्रकृतिः सा तदर्थिका॥

स्वेतरशब्दार्थाविशेषितस्य यादृशस्वार्थस्यान्वयबोधं प्रति स्वाव्यवहितोत्तरत्वसंसर्गेण यादृशशब्दवत्ताया निश्चय एव हेतुस्तादृशस्तथाविधार्थे प्रकृतिः। पट भू प्रभृतयोहि शब्दाः स्वोत्तरविभक्त्यांशे निश्चिता एव स्वोपस्थाप्यस्य वसनजननादेरन्वयं प्रत्ययार्थे कर्म्मत्वकर्त्तृत्वादौ बोधयन्ति नत्वन्यथा प्रत्ययास्तु पदान्तरार्थानवच्छिन्नस्य संख्याकालेष्टसाधनत्वादिस्वार्थस्यान्वयबोधं प्रत्यनिश्चिता अप्युपयुज्यन्ते। चैत्रः पचति यजेतेत्यादौ शब्दान्तरधर्म्मिकसुबादि निश्चयस्यासत्त्वेऽपि तदर्थस्यैकत्ववर्त्तमानत्वादेः चैत्रपाकादावन्वयात् स्वाव्यवहितोत्तरत्वसंसर्गेण तादृशशब्दवत्ताया निश्चयएव तदुपस्थाप्य यादृशार्थान्वयबोधं प्रति हेतु स्तादृशस्यैव च शब्दस्य प्रकृते तथाविधः स्वार्थः स च प्राकेत्यादेः शक्त्यादिविरहेऽपि पचनादिरूपः सुवचएव पचनादेः कर्म्मत्वादावन्वयबोधं प्रत्यमादिधर्म्मिकतादृशशब्दवत्ताया निश्चयस्यैव हेतुत्वात्। वहगुडा द्राक्षेत्यादावीषदसमाप्त-

त्वादिरूपस्य स्वार्थस्य शाब्दादावन्वयबोधं प्रति गुडादिपदधर्म्मिकः स्वोत्तरत्वसम्बन्धेन वड़जादिप्रत्ययस्य निश्चय एव हेतुरपितु न पदान्तरार्थानवच्छिन्नस्य तादृशस्वार्थस्य शाब्दादावन्वयबोधकः प्रत्ययानां प्रकृत्यर्थावच्छिन्नस्यैव संख्यादिभिन्नस्वार्थस्य धर्म्मान्तरेऽन्वयबोधकत्व व्युत्पत्तेः। अतोनाम्नः प्राग्विहिते वड़चि न प्रसङ्गः न वा चन्द्रनिभोऽयं कुम्भकारोऽयमित्यादौ सदृशकर्त्राद्यर्थके निभकारादौ पूर्व्वपदार्थावच्छिन्नस्यैव सदृशाद्यर्थस्य बोधकतायास्तत्र व्युत्पन्नत्वात्। नचैवमेवकारादेरन्ययोगाद्यर्थे प्रकृतित्वं न स्यात् पार्थ एव धनुर्द्धर इत्यादौ पार्थादिपदार्थविशेषितस्यैव तादृशस्वार्थस्यान्वयबोधं प्रति हेतुत्वादितिवाच्यम् इष्टत्वात् प्रकृतेः स्वोत्तरविभक्तिसाकाङ्क्षसजातीयत्व नियमात् एवकारादेस्तु सविभक्तिकत्व एव प्रमाणाभावात्। ये तु मन्यन्ते पार्थान्ययोगत्वावच्छिन्नव्यवच्छेदस्यैव तत्रैवकारार्थत्वं तादृशार्थ बोधने तात्पर्य्यग्राहकत्वेन शवादिवदाकाङ्क्षासम्पादकत्वेनैव वा पार्थादि शब्दस्योपयोगादेवकारादिनिपातः प्रकृतिरेव तस्य च लुप्तविभक्तिकत्वेन तादृशविभक्त्यंशएव तन्निश्चयस्य पार्थान्ययोगत्वाद्यवच्छिन्नव्यवच्छेदरूपस्वार्थान्वयबोधं प्रति हेतुत्वमिति तेषां पार्थ एवेत्यत्र पार्थैवकारार्थयोर्भेदेनानुभविकस्यान्वयबोधस्यापलापप्रसङ्गः प्रसङ्गस्तु तयोरभेदेनान्वयस्य तथा व्यवच्छेद एवेत्यादावपि प्रातिपदिकार्थयोरभेदान्वये तत्वस्य नाम्नोः समानविभक्तिकत्वस्यानपायादिति। यत्तु उपसर्गाणामिवैवकारादिनिपातानामपि न प्रकृतित्वं निरर्थकत्वात् परन्तु समभिव्याहृतपार्थादिपदानां तदन्ययोगव्यवच्छिन्नादिलक्षणायां निरूढ़त्वसम्पादकत्वमात्रमिति मतं तच्चिन्त्यम्।

लाघवादन्यथा निर्व्वक्ति।

स्वोपस्थाप्ययदर्थस्य बोधने यस्य निश्चयः।
तत्त्वेन हेतुरथवा प्रकृतिः सा तदर्थिका॥

तत्त्वेन यन्निश्चयत्वेन स्वोपस्थाप्ययादृशार्थस्यान्वयबोधं प्रति स्वाव्यवहितोत्तरत्वसंसर्गेण यादृशशब्दवत्तानिश्चयत्वेन हेतुत्वं तादृश एव शब्दस्तथाविधार्थे प्रकृतिरिति तु फलितार्थः। बहुगुडो द्राक्षेत्यादौ बहुत्वाद्यर्थस्यान्वयबोधं प्रति न गुडादिपदधर्मिकबहुत्वादिनिश्चयत्वेन हेतुत्वमपितु सुबादिधर्मिकबहुगुडादिपदनिश्चयत्वेन अन्यथा केवलादपि बहुगुडादिशब्दात् द्राक्षादौ बहुत्वाद्यर्थस्यान्वयबोधापत्तेरिति न तत्र प्रसङ्गः।

प्रत्ययं लक्षयति विभजते च।

यादृशार्थे प्रकृत्यन्योनिपातान्यश्च वृत्तिमान्।
स तादृशार्थे शब्दः स्यात् प्रत्ययोऽसौ चतुर्विधः।

यादृशार्थ इति वृत्तावप्यन्वेति तेन यादृशार्थकप्रकृतिनिपाताभ्यां भिन्नोयादृशार्थे शक्तिनिरूढलक्षणान्यतरात्मकप्रशस्तवृत्तिमान् यादृशः शब्दः स तादृशार्थकप्रत्ययः प्रशंसायां मतुपोविधानात् शक्त्या निरूढलक्षणया च गुणगुणिनोः स्थितिप्रस्थानयोश्च बोधका अपि शुक्ल स्थाप्रभृतयः प्रकृतिभ्योन भिन्नाः तथा शक्त्या समुच्चयादिप्रतिपादका अपि चादयोन निपातेभ्यः सुबादयस्तु स्वपरतायामेव प्रकृतयोनत्वेकत्वाद्यर्थे। तृतीयादौ कर्म्मत्वादेः सत्यपि लक्षणा न निरूढा प्रायशः प्रयोगविरहात्। अतएव यत्रास्ति प्रयोगस्तत्र तृतीयादितोऽपि कर्म्मत्वादेरवगमः यथा पशुना रुद्रं यजेत इत्यादौ। अतएव चान्वर्थबलादेवैकवचनादेरेकत्वादिबोधकत्वप्राप्तौ द्व्येकयोर्द्विवनैकवचने बहुषु बहुवचनमिति यत् पाणिनिः प्राह तदिदं द्वित्वैकत्वादावेव द्विवचनैकवचनादिनियमार्थमिति फणिभाष्यकृतः तेन द्वित्वादावपि नैकवचनादिः प्रमाणम्। तद्धिताख्यातकृतोऽप्येतेन व्याख्याताः तत्रापि शक्तिवन्निरूढलक्षणाया एव प्रत्ययत्वसम्पादकत्वात् नहि भक्षकोदाद्भिः पच्यतीत्यादौ भक्षणादेर्लक्षणया देशाद्यवगमः कृतादितः

कस्यापि स्वार्थिकप्रत्ययमात्रस्य च स्वरूपमर्थत्वेन जुगुप्सते देवतेत्यादौ सन् तलादौ नार्थाशः भावविहितानामपि घञादीनामुक्तैव गतिः तथापि भावपदस्य धात्वर्थस्वरूपपरत्वात् । अन्यथा पाकं पश्येत्यादौ धात्वर्थस्य पचनादेः कर्म्मत्वादावनन्वयापत्तेः सुबर्थे धात्वर्थस्यान्वयस्या व्युत्पन्नत्वात् इत्थमेव च स्तोकः पाक इत्यादिप्रयोगस्य परिशिष्टा द्युक्तस्य प्रामाण्यम् अन्यथा स्तोकादीनां धात्वर्थे विशेषणत्वे नियमतो द्वितीयापत्तेः अतएव सञ्चारोरतिमन्दिरावधि सखोकर्णावधि व्याहृतमित्यादिकं काव्यम् आगमोनिष्फलस्तत्र भुक्तिः स्तोकापि यत्र नो इत्यादिस्मृतिश्च सङ्गच्छतइति नव्याः । स्वोत्तरप्रत्ययार्थसाकाङ्क्षस्यैव धातोरर्थैविशेषणतापन्नस्य बोधने तदर्थकनाम्नो द्वितीयाद्यपेक्षा नतु धातुमात्रस्य तथाच स्तोकः पाक इत्यादिरेव प्रमाणं नतु स्तोकं पाकइत्यादिःघटत्वयूपक्रियाया विशेषणं कर्म्मत्वाद्यनुशिष्टेरपि तत्रैव तात्पर्य्यात् । अतएव स्तोकं स्थीयते साधु गतं चकितं द्रष्टव्यमित्यादौ धात्वर्थस्य तिङाद्यर्थकालादिसाकाङ्क्षत्वान्न तद्विशेषणस्य द्वितीयाद्यनुपपत्तिरिति तु शाब्दिकसंप्रदायः । यत्तु वाक्यपदीये भर्त्तृहरिणोक्तं यः स्वेतरस्य यस्यार्थे स्वार्थस्यान्वयबोधने । यदपेक्षस्तयोः पूर्व्वा प्रकृतिः प्रत्ययः परइति तदङ्गजादावव्याप्तिप्रसङ्गादुपेक्षितम् । यदपि स्वेतरार्थानवच्छिन्नस्वार्थस्यान्वयबोधने । योऽसमर्थः सैष शब्दः प्रत्ययोऽयं चतुर्व्विधइत्युमापत्युक्तं तदप्ययुक्तं सुप्तिङोः पदार्थान्तरानवच्छिन्नस्वार्थसंख्यादिप्रकारकबोधसमर्थत्वेन तयोस्तव्यादौ चाव्याप्तेः सैष इत्यत्र सस्य पादपूरणे पुनः सन्धिः ।

लाघवादन्यथा निर्व्वक्ति ।

इतरार्थानवच्छिन्ने स्वार्थे यो बोधनाक्षमः ।
तिङर्थस्य भिभार्थान्यः स वा प्रत्यय उच्यते ।

यः शब्दः शब्दान्तरार्थाविशेषिते यादृशस्वार्थे धर्म्मिणि तिङ-

र्थस्यान्वयबोधने स्वरूपायोग्यः स वा निभादिशब्देभ्योभिन्नस्तादृ-शार्थे प्रत्यय इत्यर्थः। चैत्रोऽस्तीत्यादावर्थान्तरानवच्छिन्ने स्वार्थे नाम्नां तिङर्थान्वयबोधकत्वम्। एवं यजेत स्थीयेतेत्यादौ यजादिधातूनाम् पचतीत्यादौ तिङां पाचकोऽस्तीत्यादौ कृतां काश्यपिरित्यादौ च तद्धितानाम् प्रकृत्यर्थावच्छिन्न एव स्वार्थे कृत्यादौ तिङर्थस्य वर्त्त-मानत्वादेर्बोधकत्वं नतु तदवच्छिन्नइति न तेष्वप्रसङ्गः। निभ निपातादिकन्तु शब्दान्तरार्थानवच्छिन्ने सादृशसमुच्चयादिस्वार्थे तिङ-र्थस्यान्वयं प्रति स्वरूपायोग्योऽपि निभादिरेवेति न तत्र प्रसङ्गः।

निपातं लक्षयति।

स्वार्थे शब्दान्तरार्थस्य तादात्म्येनान्वयाक्षमः।
सुबाद्यन्योनिपातोऽसौ विविधश्चादिभेदतः।

यः शब्दः केवले यादृशस्वार्थे शब्दान्तरार्थस्य तादात्म्येनान्वय बोधं प्रत्यसमर्थः सुबादिप्रत्ययेभ्यः प्रत्येकं भिन्नः स तादृशार्थे निपातः चादयोनिपाताः स्वार्थे समुच्चयादौ नामाद्यर्थस्याभेदेनान्वयबोधं प्रत्य योग्याः नहि स्मृतमनुभूतञ्चेत्यादितः कस्यापि स्मृतः समुच्चय इत्यादि रनुभवः किन्तु स्मृतानुभूतयोः समुच्चय इत्यादिरेव। स्तोकं पचती-त्यादौ धातुरपि स्वार्थे नामार्थस्य तादात्म्यं बोधयंस्तत्समर्थएव प्रत्य यस्तु सुबादिरेव चः शब्द इत्यादौ नामार्थस्याभेदसाकाङ्क्षचकारादिः स्वपरतायान्न निपातः किन्तु नामैव पुरन्दरप्रभृतौ तु नाम्नि निपात व्यपदेशः सूत्रानिष्पाद्यत्वप्रयुक्तोभाक्तः कार्त्तिक्यादौ यन्न दानं तद-त्यन्तविनिन्दितमित्यादौ न केवले नञर्थे यदर्थस्य तादात्म्येनान्वयः किन्तु दानाद्यवच्छिन्ने। स्वर्दिवा नक्तमाद्यव्ययमपि नामैव नतु निपातः शोभनं स्वरित्यादौ तदर्थे नामार्थस्य तादात्म्येनान्वयात्। प्रादयस्तूपसर्गा न सार्थकाः सार्थकाश्चेत् निपाता अपि जातौ सत्ता नास्तीत्यत्र सत्तायां जातिवृत्तित्वस्य समवेतत्वनिरूपितस्वरूपसम्बन्धे-

नात्यन्ताभावेनञा प्रत्याय्यते न तु सत्त्वस्याभावः प्रथमान्तपदानुपस्थाप्यत्वेन नञर्थे तत्रास्तित्वादिक्रियान्वयस्यायोगात् जातौ जाती न स्त इत्यत्र जातिद्वयत्वावच्छिन्नाभावस्यैकत्वेन तत्र तिङर्थद्वित्वस्य पर्य्याप्तिबाधेनान्वयासम्भवाच्च । सत्ता समवायेन जातौ नास्तीत्यादौ तु समवेतत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वे समवायशब्दस्य लक्षणा परेषामपि सत्ताभावस्य समवायावच्छिन्नत्वासम्भवेन समवायावच्छिन्नप्रतियोगिताकत्वे तल्लक्षणाया आवश्यकत्वात् प्रथमार्थप्रतियोगित्वे समवायावच्छिन्नत्वस्य तत्रान्वय इति तु साहसं प्रथमायाः प्रतियोगितार्थकत्वस्य क्वचिदप्यकल्पनात् विशिष्टसत्ता गुणे नास्तीत्यादिकस्तु प्रयोगोयदि प्रमाणं तदाधेयत्वस्याव्याप्यवृत्तित्वेन द्रव्यवृत्तित्वावच्छेदेन तस्यां गुणवृत्तित्वाभावसत्त्वात् विशिष्टस्यातिरिक्तत्वादित्यपि कश्चित् । न क्रोधोन च मात्सर्य्यं न लोभोनाशुभा मतिः । भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तम इत्यादावनेकनञामानर्थक्यप्रसङ्गस्तु न तं विरिञ्चिर्न भवान श्रीर्नापि धनाधिपः । दातुमर्हन्ति विभवं विष्णोराराधनेन यद्दित्यादाविव प्रकारान्तरवादिनामपि समानः समानसमाधानश्च । पदात् परस्य युष्मदादेस्तेप्रभृत्यादेशविधौ च पदशब्दः साकाङ्क्षनिपातस्याप्युपलक्षकस्तेन न ते धनं धर्म्मपमित्यादौ न तस्यानुपपत्तिः सदृशाद्यर्थे निभादेर्निपातत्वव्युदासस्तु प्रागुक्तदिशावसेयः । स चायं निपातश्च तु नञ पुनरिवेव मास्मादि भेदाद्बहुविधः ।

ननु यदि प्रकृतिः प्रत्ययोनिपातो वा स्वार्थोपस्थितिद्वारान्वयबोधं कुर्य्यात् प्रत्येकमाकं निराकाङ्क्षशब्दसहकृतं वा किन्न कुर्य्यात् मिलितानामेव तेषान्तथात्वन्तु सर्व्वत्रासम्भवीत्यत आह ।

वाक्यभावमवाप्तस्य सार्थकस्यावबोधतः ।
सम्पद्यते शाब्दबोधोन तन्मात्रस्य बोधतः ।

सार्थकस्य प्रकृत्यादेर्व्वाक्यतामापन्नस्यैव स्वार्थोपस्थितिद्वाराऽन्वय बोधकत्वं नतु प्रत्येकस्य निराकाङ्क्षसहितस्य वा ।

वाक्यं यदि शब्दसमूहस्तदा मिथोनिराकाङ्क्षस्यापि तस्यान्वय बोधकत्वापत्तिरतोवाक्यं लक्षयति ।

मिथः साकाङ्क्षशब्दस्य व्यूहोवाक्यं चतुर्व्विधम् ।
सुप्तिङन्तचयोनैवमतिव्याप्त्यादिदोषतः ।

यादृशशब्दानां यादृशार्थविषयिताकबोधं प्रत्यनुकूला परस्परा-पाङ्क्षा तादृशशब्दस्तोमएव तथाविधार्थे वाक्यम् । तच्च चतुर्व्विधं चतस्रश्च विधावक्ष्यन्ते। वह्निना सेक इत्यादपि वाक्यमेव परन्तु बाधि तार्थकत्वादयोग्यम् । शाब्दमतेराहार्य्यत्वोपगमे निर्व्वह्निर्व्वह्निमान् पचन्न पचतीत्यादिकमपि वाक्यमेव नो चेदपार्थकमेव यादृशबोधत्वाव-च्छेदेनाहार्य्यत्वं तादृशबुद्ध्यर्थं प्रयुक्तपदानामेव तथाविधार्थबोधं प्रत्यपार्थकत्वात् । यत्तु सुप्तिङन्तचयोवाक्यमित्यमरसिंहेनोक्तं तन्न युक्तं सुबन्तादेः प्रत्येकसमुदायविकल्पेनातिव्याप्त्यतिव्याप्त्योः प्रसङ्गात् नहि घटं पटमित्याकारः पचति गच्छतीत्यानुपूर्व्वीकोवा शब्दसमूहो वाक्यं न वा घटं पचतीत्येतयोः प्रत्येकं न वाक्यं क्रियारहितन्न वाक्य मस्तीत्यादिकस्तु प्राचां प्रवादोनिर्युक्तिकत्वादश्रद्धेयः ।

प्रकृतिं विभजते ।

निरुक्ता प्रकृतिर्द्वेधा नामधातुप्रभेदतः ।
यत् प्रातिपदिकं प्रोक्तं तन्नाम्नोनातिरिच्यते ।

निरुक्ता न तु सांख्यानामिव जगदुपादानभूता यच्च पाणिनि प्रभृतिभिः प्रातिपदिकं प्रकृतिरित्युक्तं तदपि नाम्नोनातिरिच्यते नातोविभागन्यूनता ।

तत्र प्रथमोद्दिष्टं नाम लक्षयति ।

येन स्वीययदर्थस्य मख्यतः प्रतिपादने ।

स्वोत्तरप्रथमापेक्ष्या तन्नाम स्यात्तदर्थकम् ।

याद्दशशब्देन स्वोपस्थाप्ययदर्थमुख्य विशेष्यकान्वयबोधार्थं स्वोत्तरप्रथमाविभक्तिरपेक्ष्यते ताद्दशः शब्द एव तदर्थकं नाम । घटादयोहि शब्दाः प्रथमान्तत्वेन निश्चिता एव स्वार्थमुख्यविशेष्यकं बोधमुत्पादयन्ति नत्वन्यथा नहि घट इत्यादित इव घटादित्यादितोऽपि घटादिमुख्य विशेष्यकः सुवर्थसंख्यादेरवगमः । पीतपटेत्यादिकः समासोऽपि स्वोत्तरं प्रथमाप्रतिसन्धानदशायामेव पटादिमुख्यधर्म्मिताकस्य पीताद्यन्वयबोधस्य जनकः अतएव नापदं प्रयुञ्जीतेति वृद्धाः । पदं विभक्त्यन्तं पीतपटरूपमित्यादावपि नावान्तरवाक्यार्थ बोधपूर्व्वको महावाक्यार्थ बोधः पटादिनाम्नः प्रथमान्तत्वाभावेन तदर्थे पीताद्यन्वय धियः पूर्व्वमसम्भवात् विशिष्टवैशिष्ट्यावगाहितायाः प्रमाणान्तरेण पटधर्म्मिकपीतनिश्चयादपि तत्र सम्भवात् । नचान्योन्यपरस्परादि नामस्वव्याप्तिरेभ्यः प्रथमा नाभिधीयते इति वृद्धैः स्मरणादिति वाच्यं मल्लाभ्यामन्योन्यं हन्यत इत्यादौ मल्लयोः परस्परकर्त्तृकहननकर्म्मत्वान्वयानुरोधेन तेषामपि प्रथमान्तत्वादन्यथा सकर्म्मकस्य हन्तेर्भावाख्यातसाकाङ्क्षत्वानुपपत्तेरकर्म्मकस्यैव धातोस्तथात्वात् ।

निरुक्तं नाम विभजते ।

रूढञ्च लक्षकञ्चैव योगरूढञ्च यौगिकम् ।
तच्चतुर्द्धा परैरूढयौगिकं मन्यतेऽधिकम् ।

तन्नाम चत्रयमवधारणार्थं तेन किञ्चिन्नाम क्वचिदर्थे रूढमेव यथा गोप्रभृतौ गवादि गमेर्डो दाभाभ्यां नुर्घटश्चेत्यादेरौणादिक प्रत्ययस्य शक्तिविरहेण यौगिकत्वविरहात् किञ्चिल्लक्षकमेव यथा तीरादौ गङ्गादि आद्यव्युत्पत्त्या पूरवत्तीरे शक्तिग्रहस्याविशिष्टत्वेऽप्याजानिकप्रयोगापत्त्या तदप्रामाण्यकल्पनात् शक्तेः पूर्व्वपूर्व्वप्रयोग नियतत्वात् किञ्चिद्योगरूढमेव यथा पङ्कजातपद्मादौ पङ्कजादि किञ्चित्

यौगिकमेव यथा पाककर्त्रादौ पाचकादि । रूढयौगिकमप्यधिकं नाम यथा मण्डप मन्दारजतादि तद्धि कदाचिदवयवशक्त्या योगार्थमेव कदाचिच्च समुदायशक्त्या रूढ्यर्थमेवाभिधत्ते इत्यपरेषाम्मतम् । गौर्व्वाहीकइत्यादौ तु शक्यार्थसदृशत्वावच्छिन्नबोधकतया गौणं गवादि-पदं गोसदृशादौ लक्षकमेव नतु ततोभिद्यते ।

रूढं नाम लक्षयति विभजते च ।

रूढं सङ्केतवन्नाम सैव संज्ञेति कीर्त्त्यते ।
नैमित्तिकी पारिभाषिक्यौपाधिक्यपि तद्विदा ।

यन्नाम यादृशार्थे सङ्केतितमेव नतु यौगिकमपि तद्रूढं योग रूढन्तु पङ्कजादिकं न तथा रूढनामैव च संज्ञापदेनाभिलप्यते नतु रूढादिवत् संज्ञापि नाम्नोऽवान्तरभेदः येन विभागव्याघातः स्यात् । संज्ञायाश्च त्रयोभेदाः नैमित्तिकी पारिभाषिकी औपाधिकी चेति पाचकपाठकादयस्तु न संज्ञाः सङ्केतशून्यत्वादिति वक्ष्यते ।

ये तु रूढस्य नाम्नश्चतुर्व्विधत्वमाहुस्तन्मतमुपन्यस्यति ।

जातिद्रव्यगुणस्पन्दैर्धर्म्मैः सङ्केतवत्तया ।
जातिशब्दादिभेदेन चातुर्व्विध्यं परे जगुः ।

गोगवयादीनां गोत्वादिजात्या पश्वाढ्यादीनां लाङ्गलधनादि-द्रव्येण धन्य पिशुनादीनां पुण्यद्वेषादिगुणेन चलचपलादीनाञ्च शब्दानां कर्म्मणावच्छिन्नशक्तिमत्त्वाच्चातुर्व्विध्यमेव रूढानामिति । यदुक्तं दण्ड्याचार्य्यैः शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः । चातुर्व्विध्यादमीषान्तु शब्द उक्तश्चतुर्व्विधइति तदेतज्जडमूकमूर्खा-दीनामन्यशून्यादीनाञ्च शब्दानामपरिग्रहापत्त्या परित्यक्तमस्माभिः ।

नैमित्तिकसंज्ञां लक्षयति ।

जात्यवच्छिन्नसङ्केतवती नैमित्तिकी मता ।
जातिमात्रे हि सङ्केताद्यक्तेर्भानं सुदुष्करम् ।

यन्नाम जात्यवच्छिन्नसङ्केतवत् सा नैमित्तिकी संज्ञा यथा गो चैत्रादिः सा हि गोत्वचैत्रत्वादिजात्यवच्छिन्नमेव गवादिकमभिधत्ते ननु गोत्वादिजातिमात्रं गोपदं गोत्वे सङ्केतितमित्याकारकग्रहाद्गामानयेत्यादौ गोत्वादिना गवादेरन्वयानुपपत्तेः एकशक्तत्वग्रहस्यान्यानुभावकत्वेऽतिप्रसङ्गात् । ननु गामानयेत्यादौ गोत्वादिकर्म्मताकत्वेनैवानयनादेरन्वयधीर्गोत्वादिशक्तत्वेन पदज्ञानस्य गोत्वाद्यन्वयबुद्धिं प्रत्येव हेतुत्वात् सुबर्थकर्म्मत्वादौ स्वाश्रयवृत्तित्वसम्बन्धेनैव प्रकृत्यर्थस्य गोत्वादेः साकाङ्क्षत्वात् गवादिकर्म्मताकत्वेन बोधस्तूत्तरकालमाक्षेपात् कर्म्मत्वं गोवृत्तिगोत्वनिष्ठकर्म्मतात्वादानयनं गोवृत्तिकर्म्मताकं गोत्ववृत्तिकर्म्मताकत्वादित्याद्यनुमानसाम्राज्यात् । नच वस्तुगत्या यद्गोत्वशक्तत्वं तज्ज्ञानस्य हेतुत्वे गोपदं जातिशक्तमित्येवं ग्रहादपि शुद्धगोत्वस्यान्वयबोधापत्तिः गोत्वत्वावच्छिन्नशक्तत्वप्रकारकज्ञानत्वेन तथात्वे च लाघवाद्गोत्वावच्छिन्नशक्तताप्रकारकज्ञानत्वेनैव हेतुत्वं गोत्वत्वाद्यप्रवेशादितिवाच्यं गोपदं गोत्वशक्तमित्याकारज्ञानत्वेन हेतुतायां शुद्धस्यैव गोत्वस्य विषयितासम्बन्धेन शक्त्यंशे विशेषणत्वेन गोत्वत्वादिप्रवेशगौरवस्यायोगात् । नहि समवायान्यसम्बन्धेन जातेः प्रकारतायां धर्म्मावच्छिन्नत्वनियमोमानाभावात् अयं गौरित्यादिव्यवसायोत्तरमिमं गोत्वेन जानामीत्याकारे तस्य ज्ञाततालिङ्गकानुमानेऽनुव्यवसाये वा व्यभिचाराच्च प्रागनुपस्थित्या गोत्वत्वादेस्तत्रोपनयायोगात् । एतेन जातेर्निरवच्छिन्नप्रकारत्वस्य समवाय संसर्गावच्छिन्नत्वनियमात् केवलस्य गोत्वादेः शक्त्यंशे विषयतया सुबर्थकर्म्मत्वांशे च परम्परया प्रकारत्वायोग इत्यपि प्रत्युक्तम् उक्तस्थल एव व्यभिचारात् । नचैवं कालोगौः पदं गौरित्यादिप्रत्ययोऽपि प्रमा स्यात् कालिकादिसम्बन्धेन गोत्वादिमति तत्प्रकारकत्वादिति वाच्यं कालिकादिसम्बन्धेन गोत्वादेः प्रामाण्यस्य गोत्वत्वाद्यव-

च्छिन्नप्रकारतागर्भत्वेन तादृशमतेः प्रमात्वायोगात् अन्यथा घट-त्वादिजातेः संस्थानसमवेतत्वमते संयोगेघट इत्यादिप्रतीतेः सम-वायेन प्रमात्वस्य दुर्व्वारतापत्तेः शाब्दस्येव प्रत्यक्षस्यापि कालेगौरि-त्यादिबोधस्य नियमतोगवाद्यभेदावगाहित्वेनैवाप्रमात्वसम्भवाच्चेति भट्टमतानुवर्त्तिनः। तन्मन्दं विनाप्याक्षेपं गामानयेत्यादितोगवादि कर्म्मताकत्वेनानयनादेरन्वयबोधस्यानुभविकत्वात् गौर्गच्छतीत्यादौ शुद्धगोत्वे गतिमत्त्वाद्यन्वयस्यानुभवेनास्पर्शनात् गोत्वत्वाद्यनुपस्थित्या च गोत्वं गच्छतीत्याद्यनुभवस्यासम्भवात् स्वाश्रयवृत्तित्वसम्बन्धेन गति मत्त्वादिहेतुना गवादौ साक्षात्सम्बन्धेन गतिमत्त्वाद्याक्षेपस्य व्यभि-चारादिदोषेण दुःशक्यत्वाच्च। एतेन कर्म्मत्वादौ गोत्वादेः स्वाश्रय वृत्तित्वसम्बन्धेनान्वयबोधोत्तरं कर्म्मत्वस्य गोत्ववृत्तित्वं गोवृत्तित्वं विनानुपपन्नमित्यनुपपत्तिधीसहकृतेन गामित्यादिवाक्येनैव कर्म्मत्वं गवीयमित्योपादानिकोगवादिव्यक्तिबोधइति श्रीकरमतमप्यनादेयं मिथोविरुद्धाभ्यां शाब्दत्वार्थापत्तित्वाभ्यामवच्छिन्नबोधस्यालीकत्वेन शब्दानुपपत्तिभ्यां सम्भूय तथाविधौपादानिकबोधस्य जननायोगाच्च। यत्तु गौर्ज्ज्ञायते गौर्नश्यति सर्व्वत्र गोत्वादिजातिशक्त्यैव गवादि-पदेन लक्षणया गोत्वादिविशिष्टा व्यक्तिर्बोध्यते व्यक्तीनां बहुत्वेनान्य लभ्यत्वेन च तत्र शक्तेरकल्पनात् तात्पर्य्यानुपपत्तेरपि लक्षणाया वीजत्वात् यदाहुर्मण्डनाचार्य्याः जातेरस्तित्वनास्तित्वे न हि कश्चि-द्विवक्षति। नित्यत्वाल्लक्षणीयायाव्यक्तेस्ते हि विशेषणे इति तदपि तुच्छं व्यक्तिविनाकृतायां गोत्वादिजातौ गवादिपदस्य मुख्य प्रयोगाभावेन तन्मात्रस्याशक्यत्वे तद्वति गवादौ लक्षणाया वक्तु-मशक्यत्वात् शक्यसम्बन्धस्यैव लक्षणात्वात्। नच गोरन्यो महिष इत्यादौ पञ्चम्यर्थेऽवधित्वे प्रतियोगित्वे वा स्वावच्छेद्यत्वसम्बन्धेन शुद्धस्य गोत्वादेरन्वयात्तथाविधस्थल एव जातौ मुख्यप्रयोगः तत्र

पञ्चम्याः स्वार्थेऽवधित्वादौ स्वनिष्ठगोत्वावच्छेद्यत्वसंसर्गेण प्रकृत्यर्थस्य गवादेरन्वयबोधकत्वात् अन्यथा गोगोत्वयोर्भिन्नशक्तिभ्यां गोपदेन बोधने वृत्तिद्वययौगपद्यापत्तेः वस्तुतः शुद्धस्य गोत्वादेः शाब्दधी प्रकारतायाः समवायावच्छिन्नत्वनियमात्तस्यावधित्वादौ स्वावच्छेद्यत्वादिसम्बन्धेनान्वयोदुर्घटएव इत्थं घटइत्यादिप्रतीतेः समवायेन प्रमात्वानुरोधाद्घटत्वजातेर्नानात्वोपगमादिति ।

प्राभाकरास्तु गोत्वशक्तत्वेन ज्ञातं पदं तादृप्येण गोशाब्दत्वावच्छिन्नं प्रत्येव हेतुरतोगोत्वशक्तिग्रहान्न गोत्वेन गवयादेः नवा द्रव्यत्वादिना गोरन्वयधियोऽतिप्रसङ्गः । नचैवं जातेरिव व्यक्तेरपि शक्यत्वमावश्यकं नहि गवादिपदस्य शक्यत्वं जन्यत्वमपि तु जन्यशाब्द धीविषयत्वं तच्च गोत्वस्येव गोरप्यविशिष्टमितिवाच्यं गवादिपद धर्म्मिकस्वशक्तताज्ञानत्वावच्छिन्नशाब्दधीजनकतावच्छेदकत्वेन गोत्वादेरेव गवादिपदशक्यत्वात् गोत्वशक्ततापेक्षया गोशक्तत्वस्य गुरुतया तज्ज्ञानत्वस्य गोशाब्दं प्रति जनकतानवच्छेदकत्वात् । अतएवान्वयबुद्धेरात्मस्वात्मत्वाद्यवगाहित्वेऽपि न तेषां पदशक्यत्वम् अस्तु वा गोत्वादि शक्तत्वेन ज्ञातं पदं गोत्वादिशाब्दत्वावच्छिन्नं प्रत्येव हेतुर्व्विशेष्यतया तादृशशाब्दं प्रति समवायेन गोत्वस्य नियामकत्वकल्पनाच्च नाति प्रसङ्गः गोत्वादिना गवादेरिव गवादेर्गोत्वादिनान्वयबोधत्वावच्छिन्नं प्रत्यपि विनिगमकाभावेन गोत्वादिशक्तिज्ञानत्वेन हेतुत्वमपेक्ष्य गोत्वशाब्दत्वावच्छिन्नं प्रत्येव गोत्वस्य तच्छक्तत्वज्ञानस्य च द्वयोः कारणतायामेव लाघवात् वस्तुतोगोत्वशाब्दं प्रति गोत्वशक्तिज्ञानमेव हेतुर्नतु गोत्वमपि जातिव्यक्त्योस्तुल्यवित्तिवेद्यत्वनियमादेव गोव्यक्तीनान्तद्विषयत्वसिद्धेः प्रमाणविरहादेव गोत्वादिना गवयादिविषयत्वस्य तन्नासिद्धेश्च । यद्यपि जातेर्व्विषयत्वं तत्समवायिव्यक्तिविषयता निरूपितमिति न व्याप्तिर्गोत्वाद्यालोचने कालोगोत्ववानित्यादिबोधे

च व्यभिचारात् नापि जातेर्निरवच्छिन्नप्रकारतायास्तथात्वनियमः गौरयमित्यादिज्ञानस्य प्रत्यक्षे गोत्वेनेमं जानामीत्याकारे तथात्वा त्तथाप्यन्वयबोधस्य निरवच्छिन्नगोत्वादिप्रकारत्वं गवादिविशेष्यता निरूपितमेवेति व्याप्तिस्तादृशविशेष्यताकत्वं विना शुद्धस्य गोत्वादेरन्वयबोधेनास्पर्शनात् गुरुणां गोत्वेन गवयादिबोधस्यालीकत्वात्। अतएव गवाद्यंशे गोत्वादिप्रकारकोबोधः समवायेनेव सम्बन्धान्तरेणापि तत्प्रकारकः स्याद्गोत्वशक्तिज्ञानस्य तदीयसम्बन्धभानं प्रत्युदासीनत्वादित्यपि प्रत्युक्तं शाब्दमतेः शुद्धगोत्वप्रकारतायां गोविशेष्यताकत्वस्येव समवायावच्छिन्नत्वस्यापि व्याप्तिवलेन सिद्धावपि सम्बन्धान्तरावच्छिन्नत्वस्य प्रमाणविरहेणासिद्धेः। एवञ्च गोत्वादिशक्तिज्ञानत्वेन जनकतायां विषयतयावच्छेदकत्वाद्गोत्वादिरेव गवादिपदस्यार्थः गवादौ तद्व्यवहारस्तु तादृशावच्छेदकधर्म्मवत्त्वप्रयुक्तो गौणः। नचैवं गम्यादिधातोरपि गत्यादौ शक्तिर्नस्याद्गतित्वादिशक्तिज्ञानादेव तादृशेण गत्यादेर्गम्यादिधातुतोबोधसम्भवादितिवाच्यं गुरुणां गतित्वादेः संस्थानाव्यङ्ग्यत्वेन जातित्वासम्भवात् उत्तरसंयोगाद्यवच्छिन्नक्रियात्वाद्युपाधिरूपे च तत्र स्वरूपतः शक्तिग्रहायोगात् सखण्डस्य निरवच्छिन्नप्रकारत्वाभावात् निरुक्तक्रियात्वत्वावच्छिन्नशक्तताज्ञानत्वेन हेतुतानपेक्ष्य लघुतया तादृशक्रियात्वावच्छिन्नशक्तिमत्त्वज्ञानत्वेनैव तथात्वौचित्यात् गुरुत्वादिप्रयोज्यस्य पतनत्वादेरखण्डत्वे पत्यादिधातूनान्तत्र शक्तत्वेऽपि तत्यभावाच्च पश्वादिपदानामपि लोमवल्लाङ्गूलादिपर्य्यवसिते पशुत्वादिमात्रे न शक्तिस्तत्र वृत्तिग्रहोत्तरं तन्मात्रस्यैवानुभवेन तदाश्रयस्यालाभात् लोमादीनां स्वाश्रय तुल्यवित्तिवेद्यत्वस्य लोमवल्लाङ्गूलवान् देशइत्याद्यनुभवे व्यभिचारादितिप्राहुः। तत्र ब्रूमः शाब्दमतेर्गवादिव्यक्त्यवगाहित्वमवश्यङ्गारणा प्रयोज्यं जन्यधीविषयतायास्तत्प्रयोज्यत्वनियमादन्यथा पक्षधर्म्मिक

साध्यावगाहित्वादेरपि परामर्शादिप्रयोज्यता न स्यादनुमित्यादि सामान्यं प्रत्येव ज्ञानत्वादिना हेतुत्वस्य लाघवेनौचित्यात् पक्षतादि सहकृतपरामर्शाद्युत्तरज्ञानस्य तत्प्रकाशस्यैव वा पक्षे साध्याव-गाहित्वनियमादेवानुमित्यादेः प्रतिनियतपक्षाद्यवगाहित्वसिद्धेः । किञ्च गोत्वशक्तत्वं न गोत्वसमर्थत्वं यस्य धीरन्वयधीहेतुरप्रसिद्ध-त्वात् नापि तद्गोचरमभिधानामकं पदार्थान्तरं तत्र मानाभावात् न वा गोत्वानुभवजनकत्वं पटादिपदस्यापि गोत्वशक्तत्वापत्तेस्तस्यापि गवादिपदाकाङ्क्षादिसाचिव्येन गोत्वानुभवजनकत्वात् नच गोत्वानु-भवसामान्यं प्रति हेतुत्वन्तथा गवादिपदेऽप्यसत्त्वात् नापि गोत्वानु-भवजनकत्व प्रकारकनित्यसङ्केतवत्त्वं तादृशसङ्केतवत्त्वमात्रं वा गोत्व शक्तत्वमिति सांप्रतं गोपदं गोत्वेन गवानुभवस्य जनकतया न सङ्के-तितमित्यादिग्रहेऽपि तस्य ग्रहाद्गोत्वेन गोरन्वयधीप्रसङ्गात् किन्तु गोत्वेन गवानुभवस्य जनकतया सङ्केतितत्वं तथा तथाच पदधर्म्मिक तज्ज्ञानत्वेन गोत्वप्रकारकशाब्दं प्रति हेतुतायां गोत्वस्येव तद्विशि-ष्टस्य गोरपि विषयविधयावच्छेदकत्वादवश्यं गोत्वादिविशिष्टो गवादि गंवादिपदस्यार्थः ।

स्यादेतत् निरूक्तस्यैव सङ्केतस्य कुतः प्रथमतोग्रहः नोपमानान्न कोषान्न विवरणान्न प्रसिद्धार्थशब्दसामानाधिकरण्यान्नापि वाक्य-शेषादमीषां शक्तिग्रहमूलकत्वेन पूर्व्वं एककस्य कस्यापि तदसत्त्वा-दत आह ।

सङ्केतस्य ग्रहः पूर्व्वं वृद्धस्य व्यवहारतः ।
पश्चादेवोपमानाद्यैः शक्तिधीपूर्व्वकैरसौ ।

प्रथमं पदेषु सङ्केतग्रहोऽवृद्धस्य व्युत्पन्नस्य शब्दाधीनव्यवहारादेव बालानां तथाहि गामानयेति केनचिन्निपुणेन नियुक्तः कश्चन व्युत्पन्न स्तद्वाक्यतोऽर्थं प्रतीत्य गवानयनं करोति तच्चोपलभमानोबाल इदं

गवानयनं स्वगोचरप्रवृत्तिजन्यं चेष्टात्वान्मदीयस्तनपानादिवदित्यनुमाय सा गवानयनप्रवृत्तिः स्वविषयधर्म्मिककार्य्यताज्ञानजन्या प्रवृत्तित्वान्निजप्रवृत्तिवदिति प्रवृत्तेर्गवानयनधर्म्मिककार्य्यताज्ञानजन्यत्वं प्रसाध्य गवानयनगोचरतज्ज्ञानमसाधारणहेतुकं कार्य्यत्वाद्घटवदित्येवमनुमिन्वानः समुपस्थितत्वाल्लाघवाच्च श्रुतं वृद्धवाक्यमेव तदसाधारणकारणत्वेनावधारयति तदनन्तरञ्च गवादिपदानां प्रत्येकमावापोद्वापेन गवादिबुद्धौ जनकत्वमवगत्यानतिप्रसक्तये गवादिसङ्केतस्य तदनुकूलत्वं कल्पयति। पश्चात्तु क्वचिदुपमानाच्छक्तिग्रहो यथा गवादिपदशक्तिधीसाचिव्ये न गोसादृश्यातिदेशवाक्याद्गवयपदवाच्यत्वबोधोत्तरं गवयत्वजात्यवच्छिन्ने गोसादृश्यग्रहाद्गवयो गवयपदवाच्य इत्याकारः क्वचिच्च व्याकरणात् यथा कर्म्मणि द्वितीया कर्त्तरि परस्मैपदमित्याद्यनुशासनात् कर्म्मत्वादौ द्वितीयादेः क्वचित् कोषादपि यथा गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति। शीतं गुणे तदर्थाः सुषीमः शिशिरो जड़ः। चूर्णे क्षोदः समुत्पिञ्जपिञ्जलौ भृशमाकुले इत्यादि कोषेभ्यः श्वेत्यादौ शुक्लादिशब्दस्य। क्वचिद्विवरणादपि यथा पचति पाकं करोतीति तुल्यार्थकवाक्यात् कृत्यादौ तिङादेः। क्वचित् प्रसिद्धार्थशब्दसामानाधिकरण्यादपि यथा नीरूपस्पर्शवान् वायुर्निस्पशमूर्त्तिमन्मन इत्यादौ रूपशून्यस्पर्शवदादिषु वाय्वादिपदस्य वायुत्वादिजातेरतीन्द्रियत्वेन स्वरूपतस्तदवच्छिन्नस्यानुपस्थित्या तत्र शक्तिग्रहायोगात् यथा वा सत्कृत्यालङ्कृतां कन्यां ददानः कुकुदः स्मृत इत्यादावुक्तरीत्या कन्यादात्रादिषु कुकुदादिपदस्य। सहकारतरौ मधुरं रौति पिक इत्यादिकन्तु न युक्तमुक्तक्रमेण शक्तिग्रहस्योदाहरणं तिङर्थे धर्म्मिण्यभेदेन नामार्थान्वयस्याव्युत्पन्नत्वात् प्रत्यक्षसिद्धकोकिलत्वजात्यवच्छिन्न एव लाघवेन पिकशब्दस्य शक्त्यवच्छेदाच्च। क्वचिद्वाक्यशेषादपि यथा यवपदस्य कङ्गुप्रभृतौ म्लेच्छानां दीर्घशूके च

शिष्टानां व्यवहारादेकमात्रशक्तेः परिच्छेत्तुमशक्यत्वात् नानार्थत्वस्य चान्याय्यत्वात् यवमयश्चरुर्भवतीतिश्रुतौ यवपदस्यार्थसन्देहे वसन्ते सर्व्वशस्यानां जायते पत्रशातनम् । मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनइतिविध्यर्थाकाङ्क्षया प्रवर्त्तमानाद्वाक्यशेषाद्दीर्घशूकएव यवपदस्य शक्तिग्रहः । यथावा स्वाराज्यकामोऽग्निष्टोमेन यजेतेत्यादिविधिशेषीभूतेभ्यः यन्न दुःखेन सम्भिन्नं नच ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमित्यादिवाक्येभ्यः स्वरादिपदस्य ।

ननु व्यवहारादनुमितेर्गवाद्यानयनधर्म्मिककार्य्यतान्वयज्ञाने पदानां प्रथमतः कारणत्वं साकाङ्क्षपदत्वावच्छेदेनैव गृहीतमुपस्थितत्वादतस्तदुपपत्तये शाब्दसामान्यं प्रत्यवश्यं कार्य्यतावाचिपदस्य तत्साकाङ्क्षपदस्य वा हेतुत्वमुपेतव्यं तथाच कथं केवलकोषादितः शक्तिग्रहस्तस्य विध्यनाकाङ्क्षत्वेनार्थवादतया शाब्दबोधानर्ज्जकत्वादिति प्राभाकराशङ्कां निरस्यति ।

कार्य्यत्वस्यान्वयज्ञाने प्राग्गृहीतापि हेतुता ।
पदानामर्थवादेभ्यः पश्चाद्बोधादुपेक्ष्यते ।

साकाङ्क्षपदत्वावच्छेदेन कार्य्यताधीजनकत्वं पूर्व्वगृहीतमप्युत्तरकालमर्थवादेभ्यः शाब्दबोधानुरोधादुपेक्ष्यते पूर्व्वगृहीतस्यापरिहार्य्यत्वानियमात् प्रतिबिम्बिते वस्तुनि व्यभिचारात् नवोपस्थितधर्म्मावच्छेदेनैव जनकत्वस्य ग्रहनियमः पटजनकं देग्द्रव्यमित्यादौ तत्सामानाधिकरण्येनापि ग्रहात् अन्यथान्यथाख्यात्यापत्तेस्तत्रैव दुर्व्वारतापत्तेः । नच कार्य्यतासाकाङ्क्षपदान्तर्भावेणैव शब्दानामन्वयानुभवहेतुत्वस्य क्लृप्तत्वादर्थवादस्थले न शाब्दधीः परन्त्वसंसर्गाग्रहमात्रमाकाङ्क्षान्तरकल्पने गौरवादितिवाच्यं कार्य्यतानिराकाङ्क्षपदान्तर्भावेणैव शाब्दधीहेतुत्वस्य कल्पनया विधिस्थले न शाब्दधी-

रित्यस्यापि सुवचत्वात् उभयत्राप्यन्वयमतेरानुभविकत्वेनैकशेषस्य दुष्करत्वादिति दिक्।

पारिभाषिकीमौपाधिकीञ्च संज्ञां क्रमेण लक्षयति।

उभयावृत्तिधर्म्मेण संज्ञा स्यात् परिभाषिकी।
औपाधिकी त्वनुगतोपाधिना या प्रवर्त्तते।

उभयावृत्तिधर्म्मावच्छिन्नसङ्केतवती संज्ञा पारिभाषिकी यथाकाशडित्यादिः साहि द्वितयावृत्तिनैव शब्दादिना रूपेण तदाश्रयमभिधत्ते नचाकाशादिपदस्य गगणादौ निरवच्छिन्नैव शक्तिः पटादिपदस्यापि पटादौ तादृशशक्त्यापत्तेः पटे शक्तमपि पटपदं न पटत्वावच्छिन्नशक्तिमदित्यादिग्रहोत्तरं ततः पटत्वविशिष्टस्याननुभवादवश्यं तच्छक्तिरवच्छिन्नेति चेत् शब्दवति शक्तमप्याकाशपदं न शब्दवत्त्वावच्छिन्नशक्तिमदित्येवंग्रहदशायामाकाशादिपदान्न शब्दवत्त्वेन गगणस्य प्रतीतिरतस्तस्यापि शब्दवत्त्वावच्छिन्नैव तत्र शक्तिरिति विभाव्यताम्। एतेन पटत्वाद्युपलक्षिते धर्म्मिण्येव शक्तिग्रहस्य तादृप्येण पटाद्यनुभवं प्रति हेतुत्वान्मास्तु पटादिपदस्यापि पटत्वाद्यवच्छिन्ने शक्तिः परन्तु पटत्वाद्युपलक्षितव्यक्तिष्वेवेति शिरोमण्युक्तमपि प्रत्युक्तं शब्दोपलक्षिते धर्म्मिणि शक्तिग्रहादेवाकाशादिपदात्तदंशे निर्व्विकल्पकात्मकस्मरणमन्वयानुभवश्चोत्पद्यतइति तु नानुभविकं नवा यौक्तिकम्। या चानुगतोपाध्यवच्छिन्नसङ्केतवती संज्ञा सा त्वौपाधिकी यथा भूतदूतादिः सा हि सचेतनावृत्तिविशेषगुणवत्त्ववार्त्ताहारकत्वाद्यनुगतोपाधिपुरस्कारेणैव प्रवर्त्तते शब्दादिस्तु सखण्डत्वेनोपाधिरपि नानुगतोद्वितयावृत्तित्वादतः पारिभाषिके गगनादिपदे नातिप्रसङ्गः। घटत्वादेः संस्थानवृत्तित्वमते यदि घटादिपदं विलक्षणसंस्थानवत्त्वेन शक्तं तदौपाधिकमेव यदिच परम्परया वैलक्षण्यवत्त्वेन

तदा नैमित्तिकमेव वस्तुतः सामान्यस्य शाब्दबुद्धौ स्वरूपतः प्रकारत्वं समवायेनैवेत्यभिहितं प्रागिति ।

ये तु जात्यवच्छिन्नसङ्केतवतामपि चैत्रादिपदानां पारिभाषिकत्वमाहुस्तेषां मते त्रैविध्यमन्यथा निर्व्वक्ति ।

यद्वाधुनिकसङ्केतशालित्वात् पारिभाषिकम् ।
जात्या नैमित्तिकं शक्तमौपाधिकमुपाधिना ।

यत्रार्थे यन्नामाधुनिकसङ्केतवत्तदेव तत्र पारिभाषिकं यथा पित्रादिभिः पुत्रादौ सङ्केतितं चैत्रादि यथावा शास्त्रकृद्भिः सिद्धप्रभावादौ पक्षतादि। जात्यवच्छिन्नशक्तिमन्नाम नैमित्तिकं यथा गोगवयादि । यदुपाध्यवच्छिन्नशक्तिमन्नाम तदौपाधिकं यथाकाशपश्वादि । आधुनिकस्तु सङ्केतो न शक्तिर्नित्यस्यैव तस्य तथात्वात् । तदुक्तं भर्त्तृहरिणा । आजानिकस्वाधुनिकः सङ्केतोद्विविधोमतः । नित्य आजानिकस्तत्र या शक्तिरिति गीयते । कादाचित्कस्त्वाधुनिकः शास्त्रकारादिभिः कृतइति । नच पित्रादिना सङ्केतिते चैत्रादिपदे नित्यसङ्केतवत्त्वे मानमस्ति द्वादशेऽहनि पिता नाम कुर्य्यादिति श्रुतेः पितृकर्त्तव्यसङ्केतविधायकमात्रत्वात् चैत्रादिपदस्य शक्तिमत्त्वे पूर्व्वपूर्व्वप्रयुक्तत्वापाताच्च तस्य तन्नियतत्वादित्युक्तत्वात् चैत्रादिपदानामिव पारसीकादिशब्दानां सङ्केतवत्त्वाविशेषेऽपि न तेषां धर्म्मकर्म्मण्युप्रयोगः साधुर्भाषितव्यं नापभ्रंशित वै न म्लेच्छितवै इति श्रुत्या तत्र तन्निषेधात् म्लेच्छितवै म्लेच्छमात्रसङ्केतितैः । खरादिशब्दास्तु रासभादौ म्लेच्छैरिवार्य्यैरपि सङ्केतिताः । ननु गवादिपदं गोत्वादिनेव संस्थानप्रभेदेनापि विशिष्टएव गवादौ शक्तमिति तथापि तदौपाधिकं स्यात् न स्याच्छक्यत्वाविशेषेऽपि गोत्वाद्यपेक्षया गुरुत्वेन संस्थानस्य गवादिपदशक्यतानवच्छेदकत्वात् । नच संस्थानमशक्यमेव गवादिपदस्येति देशनीयं गवादिपदाद्गोत्वादिजात्या इव सास्नादि

लक्षणाविलक्षणाकृत्यापि नियमतो गवादेरनुभवेन तस्यापि तच्छक्यत्वात् तथाच न्यायसूत्रं जात्याकृतिव्यक्तयस्तु पदार्थइति पदार्थो गवादि पदस्यार्थः त्रिष्वेकशक्तेर्लाभार्थमेकवचनम् अन्यथा विभिन्नशक्तौ विशकलितानामेव तासामनुभवस्य गौर्नित्या गुणोवेत्यादौ लक्षणाद्यभावस्य च प्रसङ्गादिति साम्प्रदायिकाः। नव्यास्तु जातिव्यक्त्योरेवैक शक्तिप्राप्त्यर्थं सौत्रमेकवचनं आकृतिरूपन्तु संस्थानं पृथगेव शक्यं शक्यञ्चैकपदोपस्थाप्ययोरप्याकृतिव्यक्त्योर्भेदान्वयबोधनं गवादिशब्देन व्युत्पत्तिवैचित्र्यात् अतएव संस्थानानुपस्थितौ केवलगोत्वप्रकारेण व्यक्तेरवगमः शक्त्यैव सम्पद्यते। यद्येवं संस्थानव्यक्त्योरेवैकशक्ति र्गोत्वादिजातावेव शक्त्यन्तरं तद्वैशिष्ट्यन्तु पदार्थविधया युष्माक मिवास्माकं वाक्यार्थ इत्येव किं नस्यात् न स्यात् समवायेन गोत्वादि मदपेक्षया परम्परया संस्थानवतः परमगुरुत्वेनाशक्यत्वात् शक्यतायाः किञ्चिद्धर्म्मावच्छिन्नत्वनियमात् शुद्धगोत्वादौ तदयोगाच्चेत्याहुः। मिथोवैशिष्ट्यविधुराभ्यां चन्द्रत्वसूर्य्यत्वाभ्यामवच्छिन्नैकशक्तिमतः पुष्प वन्तपदस्येव गोत्वसंस्थानप्रभेदाभ्यामवच्छिन्नैकशक्तिमतो गवादिपदस्यापि जात्यवच्छिन्नशक्तिमत्तया नैमित्तिकसंज्ञात्वेऽपि नौपाधिक संज्ञात्वं सखण्डोपाधिमात्रावच्छिन्नशक्तिमतएव तास्नत्तथात्वादिति वस्तुगतिः। सौत्रमाकृतिपदं न संस्थानपरं परन्तु करणव्युत्पत्त्याकार निरूपकार्थकं जातिव्यक्त्योः संसर्गपरमेव अन्यथा समवायादेरपि सम्बन्धविधया गवादिपदशक्यत्वेन तदनुक्त्या मुनेर्न्यूनतापत्तेः। क्वाचित्कास्तु जातिसंस्थानाभ्यां गवादेरवगमो गवादिपदस्य जात्याकृति विशिष्टे शक्तिभ्रमेण लक्षणया वा सम्पाद्य इति पुनर्न्यायरहस्ये अस्मद्गुरुचरणाः।

लक्षकं नाम लक्षयति।

याद्दशार्थस्य सम्बन्धवति शक्तान्तु यद्भवेत्।

तत्र लक्षकं नाम तच्छक्तिविधुरं यदि ।

यादृशार्थसम्बन्धवति यन्नाम सङ्केतितं तदेव तादृशार्थे लक्षकं यदि तादृशार्थे शक्तिशून्यं भवेत् सैन्धवादयश्च शब्दास्तुरगादिसम्बन्धिनि लवणादाविव तुरगादावपि शक्ताएव गङ्गादयस्तु तीरादावसङ्केतिताः तत्सम्बन्धिनीरादिशक्तत्वेन गृहीताएव तीराद्यन्वयं बोधयन्तीति तत्र लक्षका एव शक्तत्वे पूर्व्वपूर्व्वप्रयुक्तत्वापत्तेः तस्य तद्व्याप्यत्वात् कथञ्चित्तीरादिसम्बन्धित्वेन गृहीतादपि गङ्गादिपदात्तीरादेरन्वयाबोधेन नीराद्यशक्तत्वे सति तत्सम्बन्धितामात्रन्तु न लक्षणा गङ्गागङ्गायां घोष इत्यादावपि गङ्गागङ्गेतिभागस्य निरुक्तलक्षणायाः सत्त्वेन वैयर्थ्याभावप्रसङ्गाच्च । एतेन तीराद्यशक्तत्वे सति तीरादिपरत्वं तीरादिसम्बन्ध्यनुभावकत्वं वा तल्लक्षकत्वमित्यपि प्रत्युक्तम् अपभ्रंशस्यापि लक्षकत्वापाताच्च नचेष्टापत्तिः शक्तिलक्षणान्यतरवृत्तिमत्त्वे तस्य साधुतापत्तेः पदसाधुतायां वृत्तिमत्त्वस्यैव तन्त्रत्वात् । किञ्चानुभावकत्वं यद्यनुभवस्योपधायकत्वं तदा घोषादिपदसाकाङ्क्षस्य गङ्गादिपदस्य तीरलक्षकता न स्यात् तेन तीरसम्बन्धिनो नीरस्यानुभवानर्ज्जनात् स्वरूपयोग्यत्वन्तु गङ्गायामिति वाक्यस्य दुर्व्वारं तस्याप्याधेयताधर्म्मिकनीरानुभवं प्रति नीरार्थकनामोत्तरसप्तमीत्वेन तथात्वात् नीराधेयत्वस्य च तीरसम्बन्धित्वानपायात् । ननु वाक्यमपि लक्षकं भवत्येव कथमन्यथा चित्रगुसमुदायस्य लक्षणया चित्रगोस्वामिनो बोधः कथं वा गभीरायां नद्यां घोषइत्यादौ गभीरनदीतीरस्य नहि तत्र नदीपदं तीरलक्षकं गभीरायामित्यस्यानन्वयापत्तेः नहि तीरं गभीरं नापि गभीरापदं तथा नद्यामित्यस्यायोग्यतापत्तेः नहि तीरं नदी तस्माद्वाक्यमेव तत्र गभीरनदीतीरलक्षकमिति मीमांसकाः तन्न गभीरायां नद्यामिति विभक्त्यन्तभागस्य तादृक्तीरलक्षकत्वे घोषादावाधेयत्वेन तदन्वयानुपपत्तेः समासादन्यत्र

नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वात्। एतेन तादृशतीरवृत्तिताया-मेव तद्भागस्य लक्षणयापि न निस्तारः तादृशतीरवृत्तेश्च लक्ष्यत्वे घोषादावभेदेन तदन्वयायोगः समासभिन्नस्थले नामार्थयोरभेदान्वये नाम्नोः समानविभक्तिकत्वस्य तन्त्रत्वात्। नच गभीरायां नदीति भागस्यैव तादृक्तीरलक्षकत्वं तदर्थे विभक्त्यर्थस्यानन्वयापत्तेर्नहि स भागः प्रकृतिर्येन तदर्थे विभक्त्यर्थस्यान्वयः स्यात् गभीरायां नद्यां व्रजेत्यादितोऽपि गभीरनदीतीरकर्म्मकत्वादिबोधापत्तेस्तद्भागस्य वाक्यादन्यत्वाच्च तस्माद्गभीरापदं नदीपदं वा तत्र गभीरनदीतीर लक्षकं पदान्तरन्तु तत्र तात्पर्य्यग्राहकमिति सिद्धान्तविदः। घट-पटाद्यनुकरणस्य ऊंफड़ादिस्तोभस्य च स्वानुभावकत्वमपभ्रंशानामिव शक्तिभ्रमादेव गौर्व्वाहीकइत्यादौ तु शक्यार्थसदृशत्वावच्छिन्नबोधक-तया गौणं गवादिपदं गोसदृशादौ लक्षकमेव न ततोभिद्यते।

स्यादेतत् मुखं विकसितस्मितमित्यत्र विकसितपदेन विस्तृतार्थ लक्षणया मुखस्य प्रकटितस्मितवत्तामनुभाव्योत्तरकालं कुसुमतुल्य सौरभादिमत्त्वं तस्य लक्षणामूलकव्यञ्जनया वृत्त्या बोध्यत इति रूढ़ादिवद्व्यञ्जकमपि शब्दान्तरमास्थेयं नहि तत्र विकसितादिपदं कुसुमसदृशादौ रूढ़मसङ्केतितत्वात् नापि यौगिकं स्वावयववृत्त्या तद प्रापकत्वात् नवा लक्षकं उपस्थितार्थान्वयानुपपत्तिधीरूपस्य लक्षणा-बीजस्य तत्रासत्त्वादित्यालङ्कारिकाः तत्र वदन्ति अन्वयानुपपत्ते-र्लक्षणाबीजत्वं न तज्जनकत्वं शक्यसम्बन्धात्मिकाया लक्षणायास्तद-जन्यत्वात् नापि तज्ज्ञापकत्वं मुख्यार्थान्वयानुपपत्तिज्ञानमन्तरेणापि प्रमाणान्तरेण तद्ग्रहसम्भवात् अतएव न लक्ष्यार्थतात्पर्य्यग्राहकत्वमपि प्रकरणादितोऽपि लक्ष्यार्थपरत्वग्रहात् नच लक्षणाजन्यान्वयबोधं प्रति तस्याः कारणत्वमेव लक्षणाबीजत्वमिति साम्प्रतं यष्टीः प्रवेशयेत्यादौ व्यभिचारात् तादृशहेतुतायां प्रमाणाभावाच्च। अथास्ति नानार्थ

शब्दैः प्रकरणादिसाचिव्यादेकविधानामर्थानामन्वयबुद्धेरनन्तरमप्यन्यविधानामन्वयानुभवः सहृदयस्य यथायं गौरवितोमहान् इत्यादौ यथावा वयस्या नागरासङ्गादङ्गानां हन्ति वेदनामित्यादौ। सचाय मनुभवो न शक्तिधीप्रभवः शक्यार्थबुद्धौ तत्परत्वग्रहस्य तद्ग्राहकप्रकरणाद्यवगमस्य वा हेतुत्वेन तदसत्त्वात् नापि लक्षणाप्रयुक्तः शक्यार्थे तदयोगात् परन्त्वभिधामूलव्यञ्जनयैव सम्पाद्यः तदुक्तम् अनेकार्थस्य शब्दस्य प्रस्तावाद्यैर्नियन्त्रिते। एकत्रार्थेऽभिधामूलव्यञ्जनान्यस्य बोधिका इति चेन्न तात्पर्य्यधियोहेतुत्वस्य पूर्व्वं परास्तत्वात् अतएव प्रकरणादीनामननुगतानां क्वचिदसत्त्वेऽपि क्षत्यभावात् वस्तुतः शक्त्या द्युपस्थितानामेकविधानां पदार्थानामन्वयमतेरनन्तरं यद्यन्यविधानामन्वयबोधः स्यात् स्यादपि तदनुरोधेन व्यञ्जनास्वीकारः नचैवं तत्तदर्थकशाब्दसामान्यं प्रत्येव तत्तदर्थनिष्ठतात्पर्य्यकत्वधियः प्रतिबन्धकत्वात् तत्तदर्थानां यथाकथञ्चिदुपनयवशेन मनसैव विशिष्टधी सम्भवात् मानोरथिकसुखप्रभेदपर्य्यवसितं चमत्कारं प्रत्यपि शाब्दस्येव मानसस्यापि बोधविशेषस्य हेतुतायाः सुवचत्वात् व्यञ्जनाख्य पदार्थान्तरस्य स्वरूपसत्तया अन्वयबुद्धौ तद्धेतुत्वस्य च प्रमाणविरहेणासत्त्वाच्चेति संक्षेपः।

लक्षकं नाम विभजते।

जहत्स्वार्थाजहत्स्वार्थनिरूढ़ाधुनिकादिकाः।
लक्षणा विविधास्ताभिर्लक्षकं स्यादनेकधा।

काचिल्लक्षणा शक्यावृत्तिरूपेण बोधकतया जहत्स्वार्थेत्युच्यते यथा तीरत्वादिना गङ्गादिपदस्य। काचिच्छक्यलक्ष्योभयवृत्तिना शक्यवृत्तिनैव वा रूपेणानुभावकत्वादजहत्स्वार्था यथा द्रव्यत्वादिना नीलघटत्वादिना च घटपदस्य। काचिल्लक्ष्यतावच्छेदकीभूततत्तद्रूपेण पूर्व्वपूर्व्वं प्रत्यायकत्वात् निरूढ़ा यथा आरण्यादिप्रकारेण

तदाश्रयद्रव्यानुभावकत्वाद्दण्डादिपदस्य। काचिच्च पूर्व्वपूर्व्वं ताद्रूप्येण प्रत्यायकत्वादाधुनिकी यथा घटत्वादिना पटादिपदस्य। आदिना शक्यसदृशत्वप्रकारेण बोधकतया गौण्युपगृह्यते यथा अग्निर्माणवक इत्यादावग्निसदृशत्वादिना अग्न्यादिपदस्य। तदेवं विविधलक्षणा-वत्त्वाल्लाक्षणिकं नामापि जहत्स्वार्थादिभेदादनेकविधमित्यर्थः। स्यादे-तत् यदि तीरादिलक्षकतया गङ्गादिपदस्य ज्ञानं तीराद्यनुभवे भवे हेतुर्भवेदप्युक्तक्रमेण लक्षकाणां विभागः नत्वेतदस्ति तीराद्यन्वयबोधं प्रति तीरादिशक्तत्वेनैव पदज्ञानस्य लाघवेन हेतुतया लक्षकाणा मननुभावकत्वात् गुरुत्वामग्ने। शैत्यं स्पृशेदित्यादौ शक्येन दहनादि-नेव गङ्गायां घोष इत्यादौ लक्षितेन तीरादिना सार्द्धमगृहीता-संसर्गकस्यैव सप्तम्यर्थाधेयत्वादेरन्वयबोधप्रविष्टत्वादिति चेन्न प्रकृ-त्यर्थावच्छिन्नस्यैव प्रत्ययार्थस्य धर्म्मान्तरेऽन्वयबुद्धेर्व्युत्पन्नतया तीरा-द्यविशेषितस्य सुबर्थाधेयत्वादेर्घोषादावन्वयबोधायोगात्। नच शक्तस्यैव पदस्य स्वसाकाङ्क्षपदान्तरोपस्थाप्यार्थान्वितस्वार्थधर्म्मिकान्वय बोधं प्रति हेतुत्वादन्वयबुद्धौ लक्ष्यार्थस्य प्रवेशः, कुन्ताः प्रविशन्ती-त्यादौ लक्ष्यस्य कुन्तधरादेरन्वयविशेष्यत्वानुपपत्तेः कुमतिः पशु-रित्यादौ लक्ष्यार्थयोर्मिथोऽन्वयबोधस्याप्यानुभविकत्वाच्च तस्माच्छक्ते-रिव भक्तेरपि ज्ञानमनुभावकं भवत्येव कार्य्यतावच्छेदकस्य सङ्कोचाच्च न व्यभिचारः।

योगरूढं नाम लक्षयति।

स्वान्तर्निविष्टशब्दार्थस्वार्थयोर्बोधकृन्मिथः।
योगरूढं न यत्रैकं विनान्यस्यास्ति शाब्दधीः।

यन्नाम स्वावयववृत्तिलभ्यार्थेन समं स्वार्थस्यान्वयबोधकृत् तन्नाम योगरूढं यथा पङ्कजकृष्णसर्पाधर्म्मादि तद्धि स्वान्तर्निविष्टानां पङ्कादि शब्दानां वृत्तिलभ्येन पङ्कजनिकर्त्रादिना समं स्वशक्यस्य पद्मादेरन्व-

यानुभावकं पङ्कजमित्यादितः पङ्कजनिकर्तृ पद्ममित्यनुभवस्य सर्व्वसिद्धत्वात् । इयांस्तु विशेषोयद्रूढमपि मण्डपरथकारादिपदं योगार्थविनाकृतस्य रूढ्यर्थस्येव रूढ्यर्थविनाकृतस्यापि योगार्थस्य बोधकं मण्डपे शेते इत्यादौ योगार्थस्य मण्डपानकर्त्रादेरिव मण्डपं भोजयेदित्यादौ समुदितार्थस्य गृहादेर्योग्यत्वेनान्वयाबोधात् । योगरूढन्तु पङ्कजादिपदमवयवशक्त्या रूढ्यर्थमेव समुदायशक्त्या चावयवलभ्यार्थमेवानुभावयति नत्वन्यं व्युत्पत्तिवैचित्र्यात्तथैव साकाङ्क्षत्वात् । अतएव पङ्कजं कुमुदमित्यत्र पङ्कजनिकर्तृत्वेन भूमौ पङ्कजमुत्पन्नमित्यादौ च पद्मत्वेन पङ्कजपदस्य लक्षणयैव कुमुदस्थलपद्मयोर्बोध इतिवार्त्तिकम् । ननु पुष्पं पङ्कजेत्यादौ पङ्कजादेरन्वयस्याबोधात् बोधाच्च पङ्कजपुष्पमित्यादौ निर्विभक्तिकेन पङ्कजादिपदेनोपस्थाप्यार्थस्यान्वयधीसामान्यं प्रत्येव तादृशपङ्कजादिपदोत्तरशब्दोपस्थाप्यत्वं तन्त्रम् एवं पुष्पं पङ्कजमित्यादौ अन्वयबोधदर्शनात्तदनुरोधेन सविभक्तिकपङ्कजादिपदोपस्थाप्यार्थान्वयबोधं प्रति स्वसमानविभक्तिकपदोपस्थाप्यत्वञ्च अतस्तदुपस्थापितस्य पङ्कजातादेः कथं पदान्तरानुपस्थापिते पद्मादावन्वय इति चेदपङ्कजवृत्तिः सत्तेत्यादौ स्खलद्वारसंशोभि तरुणामुखपङ्कजमित्यादौ च व्यभिचाराद्युक्तव्युत्पत्तेः सङ्कोचेनेति गृहाण । नच धेनुपदस्य धानकर्म्मत्वविशिष्टायां गवीव पङ्कजादिपदस्यापि पङ्कजातत्वादिविशिष्टपद्मादौ रूढिरेवास्तु नतु योगरूढिरिति साम्प्रतं अन्यत्र क्लृप्तशक्तिकेभ्यः पङ्कजन्यादिपदेभ्य एवाकाङ्क्षादिसाचिव्येन पङ्कजनिकर्तृत्वादेर्लाभसम्भवे तद्विशिष्टस्य पद्मस्य गुरोः समुदायाशक्यत्वादनन्यलभ्यस्यैव शब्दार्थत्वात् । यद्यपि कर्तृवाचकडप्रत्यये एव पद्मत्वविशिष्टस्य लक्षणया लाभसम्भवान्न पङ्कजभागस्य तत्र शक्तिरुचिता प्रकारान्तरालभ्यस्यैव शब्दशक्यत्वमित्युक्तत्वात् तथापि तिवर्त्समानत्वयोरिवैकपदार्थयोरपि कर्तृपद्मयोर्मिथो

ऽन्वयस्य सम्भवित्वात् तथाप्यवयवानां शक्तेरग्रहे ग्रहेऽपि वा पद्मादौ तदर्थस्यान्वयधीविरोधिधीदशायां पङ्कजमस्तीत्यादितः पद्ममस्तीत्याद्यनुभवार्थमवश्यमपद्मत्वादिर्विशिष्टे पङ्कजादिभागस्य रूढिरपेया इतरथा प्रकृत्यर्थावच्छिन्नस्यैव प्रत्ययार्थस्य पदार्थान्तरेणान्वयस्य व्युत्पन्नतया डप्रत्ययोपस्थापितस्यापि पद्मस्यास्तित्वादिना सहान्वयानुपपत्तेः। अतएव पङ्कजादिपदागृहीतशक्तिकस्य पुंसः पङ्कजमस्तीत्यादितो जात्वपि कर्त्तास्तीत्याकारकोनान्वयबोधः प्रत्ययमात्रोपस्थाप्यस्य कर्त्तुरन्यत्रान्वये निराकाङ्क्षत्वादिति वक्ष्यते। किञ्चैवमेकाक्षरकोषावधृतशक्तिकानां कखादिप्रत्येकवर्णानामेव निरूढलक्षणया तत्तदर्थानुभावकत्वसम्भवाद्ककनखादिसमुदायस्यापि तत्तदर्थे शक्तिर्विलीयेत कादिप्रत्येकवर्णस्य शक्तिग्रहं विनापि वकादिशब्दाद्वकादेरनुभवार्थं तत्र समुदाये शक्तिरिति तु प्रकृतेऽपि समानं डादिप्रत्ययमात्रस्य पद्मादौ वृत्तिमत्त्वाग्रहेऽपि पङ्कजादिसमुदायात् पद्मादेरनुभवस्य सर्व्वसिद्धत्वात्। नचैवं चित्रगुरित्यादावपि चित्रगोस्वाम्यादौ समुदायस्य शक्तिप्रसङ्गः समासत्वस्याविशिष्टत्वादिति वाच्यम् अगृहीतावयववृत्तिकस्य पुंसस्ततोऽर्थानधिगमेनावयवानां वृत्तेरवश्यापेक्षायां तेषामेव तथाविधार्थबोधकत्वौचित्यस्य वक्ष्यमाणत्वादिति।

पङ्कजादिपदेभ्यः केवलस्यैव योगार्थस्य रूढ्यर्थस्य वा बोधव्युदासार्थन्तादृशार्थयोर्मिथः साकाङ्क्षत्वनियमोन कल्प्यते परन्तु रूढ्यर्थभिन्ने योगार्थस्य बोधं प्रति रूढिधियः प्रतिबन्धकत्वं तेन रूढेरप्रतिसन्धानदशायामवयवशक्त्यैव पङ्कजं कुमुदमित्यादौ पङ्कजनिकर्तृत्वादिना कैरवादेरवगमस्तथावयवशक्तेरनुपस्थितौ समुदायशक्त्यैव भूमौ पङ्कजमुत्पन्नमित्यादौ पद्मत्वप्रकारेण स्थलपद्मादेरतएव च तैलपदं योगेन तिलप्रभवं रूढ्या च विलक्षणमवयवमध्यपर्य्यवसितं स्नेहं बोधयेद्योगरूढमपि तैलं पत्रमित्यादौ सर्षपस्य तैलमित्यादौ च

शक्तौ एव प्रत्येकस्य बोधकमिति मीमांसकानाम्मतमुपन्यस्यति ।

रूढ्यर्थभिन्ने योगार्थबुद्धौ रूढेर्व्विरोधिताम् ।
वदन्ति केचिदेकैकबुद्धिस्तैः क्वचिदिष्यते ।

क्वचित्समुदायावयवयोरेकमात्रस्य शक्तिप्रतिसन्धानस्थले यद्यपि पद्मान्यधर्म्मिकपङ्कजातत्वान्वयधीसामान्यं प्रति पङ्कजपदं पद्मशक्त मित्येवं रूढ़िज्ञानत्वेन न विरोधित्वं तादृशधीसत्त्वेऽपि कर्दमजादि शब्देभ्यस्तादृप्येण कैरवादेरवगमात् नापि पङ्कजपदजन्यतादृशबोधं प्रत्येव तथा विरोधित्वं रूढ़िज्ञानदशायामपि समुदायस्य लक्षणया शक्तिभ्रमेण वा पङ्कजपदात् पङ्कजातत्वेन कुमुदबोधस्य सर्व्वैरुपगमात् तथाप्यवयवशक्त्या पङ्कजपदजन्यपद्मान्यधर्म्मिकपङ्कजातत्वान्वयबोधं प्रत्येव रूढ़िज्ञानत्वेन प्रतिबन्धकत्वम् । नच कुमुदएव पद्मत्वेन रूढ़िभ्रमदशायां तादृप्येण कुमुदस्य बोधानस्याद्विरोधिन्या रूढ़िधियः सत्त्वादितिवाच्यं पद्मान्यधर्म्मिकेत्यनेन पद्मत्वानवच्छिन्नविशेष्यताकत्वस्योक्तत्वात् । पद्मस्येव कुमुदस्यापि समुदायशक्यत्वधीदशायामवयवशक्त्या पङ्कजातं कुमुदमित्याकारकधीस्वीकारे तु कुमुदादिशक्तत्व ज्ञानाजन्यत्वेनापि प्रतिवध्यं विशेषणीयम् । नच यत्र तात्पर्य्यादि धीविलम्बादयोग्यताभ्रमादिना प्रतिबन्धाद्वा रूढ्यानुपस्थिते पद्मे योगार्थस्य पङ्कजनिकर्त्तुरनन्वयस्तत्रावयवशक्त्या पङ्कजातत्वेन कुमुदादि बोधोन स्यात् विरोधिनोरूढ़िज्ञानस्य सत्त्वादितिवाच्यं मीमांसका नामिष्टत्वात् ते हि मण्डपं भोजयेत्यादावपि गृहादौ रूढ़िधीसत्त्वे मण्डपादिपदानामवयवशक्त्या मण्डपानकर्त्रादेर्न मन्यन्ते बोधं भ्रमत्व ग्रहानास्कन्दितस्येव रूढ्यर्थगोचरतत्तदयोग्यताज्ञानाद्यभावविशिष्ट स्यैव रूढ़िज्ञानस्य विरोधितायाः सुवचत्वाच्च । यदि च समुदाय एव पद्मत्वेन पङ्कजनिकर्त्तृत्वेन च शक्तेः प्रमाभ्रमाभ्यां पङ्कजातं पद्म मित्याकारकोबोधः प्रामाणिकस्तदानीं च पङ्कजनिकर्त्तृत्वेन कुमुदस्य

माम्वयधीः तदावयवशक्त्यप्रत्यपवाय पङ्कजपदघटकशब्दशक्तेति प्रति-बध्यकुक्षौ निक्षेपणीयं तद्घटकत्वस्येह तद्विषयिताव्यापकविषयिताकत्व मात्रं तदवयवइव तत्राप्यविशिष्टम् । यत्तु स्वावयवशक्त्या पङ्कजपद जन्यं पङ्कजनिकर्तृत्वेनान्वयबोधं प्रति पद्मत्वं हेतुस्तत्र कार्य्यस्य विशेष्यत्वं तदवच्छेदकत्वं वा कारणस्य तु समवायस्तादात्म्यं वा प्रत्यासत्तिरित्येतावतैव योगार्थमर्य्यादया कुमुदादेर्बोधानुदासम्भ-वात् उक्तक्रमेण प्रतिबन्धकतायां मानाभावः पद्मत्वं पङ्कजप्रयोगो-पाधिरिति प्राचीनप्रवादस्याप्युक्तार्थ एव पर्य्यवसानादिति तत्तुच्छं पद्मा गृहीतशक्तिकस्यापि पुंसः पङ्कजनिकर्तृत्वेनावयवशक्त्या कुमुदस्य बोधानुदयप्रसङ्गात् नचेष्टापत्तिरनुभवविरोधात् नच रूढ़िज्ञान कालीनमेव योगार्थस्य बोधं प्रत्युक्तरीत्या पद्मत्वस्य हेतुत्वं तथासति रूढ़िधीदशायामपि तदसमानकालीनस्य पङ्कजातत्वेन कुमुदबोधस्य सामान्यसामग्रीमहिम्ना दुर्व्वारतापत्तेः रूढ़िज्ञानासमानकालीन तादृशबोधं प्रति विशेषतोहेतुत्वकल्पनस्यावश्यकत्वात् तत्कल्पने चातिगौर-वात् । यद्यपि पङ्कजननकर्तृषु पङ्कादिपदानां शक्तिसत्त्वेपि पङ्कज पदान्न तादृप्येण बोधः परन्तु पद्मत्वमात्रेण योगार्थमर्य्यादया पङ्क जातत्वप्रकारकबोधसामान्यं प्रत्येव पद्मत्वविशिष्टे रूढ़िज्ञानस्य लाघ-वेन विरोधित्वात् पद्मान्यधर्म्मिकबाधेगौरवेण प्रतिबध्यकोत्थप्रविष्ट-त्वादतोयोगरूढ़ं नामैव नास्ति युधिष्ठिरादिशब्दादपि रणस्थिरत्वादिकं योगार्थं परित्यज्यैव वैजात्यादिप्रकारेण कुन्तीपुत्राद्यवगमात् । यदुक्तमभियुक्तैः या वृत्तिरजहत्स्वार्था सेयमत्रोपपादिता । अजहत्-स्वार्था तु तत्रैव यत्र रूढ़िर्व्विरोधिनी । पङ्कजं मनसैदेवी पद्मनाभोयुधिष्ठिरइति । तदेतद्वैयाकरणमतं पङ्कजमस्तीत्यादितः पङ्कजातं पद्ममस्तीत्याद्यनुभवस्य न्यायमीमांसादिसकलतन्त्रसिद्धत्वेन गौरवस्य प्रामाणिकत्वादनादेयमन्यथा स्ववयवशक्तेरपि प्रतिबध्यताया

मप्रवेशापत्तेर्लाघवेन पङ्कजातत्वप्रकारकशाब्दसामान्यं प्रत्येव रूढ़ि धियः प्रतिबन्धकत्वस्य सुवचत्वात् । नन्वेवं ह्रदे सरसिजमस्ती- त्यादितो ह्रदनिष्ठं सरोजमिव ह्रदाभिन्ने सरसि जातं पद्ममपि प्रतीयेत नामार्थयोरभेदान्वये तत्वस्य नाम्नोः समानविभक्तिकत्वनियमान पायादिति चेत् सत्यं सविभक्तिकनामार्थस्य नामान्तरार्थान्वये वृत्ति शब्दैकदेशान्येनैव समानविभक्तिकनामान्तरेण कारितत्वस्य तन्त्र- तायाः स्वीकार्य्यत्वादिति ।

यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते । तेन तेनान्वितः स्वार्थः पदैः समधिगम्यतइति रूढ्यर्थयोगार्थयोर्युगपदुपस्थितौ तयोराकाङ्क्षादिसाचिव्यादाहत्यान्वयबुद्धिस्थलएव योगार्थस्य रूढ्यर्थस्य वा नान्यत्रान्वयेनतु तयोरेव मिथःसाकाङ्क्षत्वं अन्यत्र योगार्थस्य बोधने रूढ़िधियः प्रतिबन्धकत्वं वा प्रमाणाभावात् एवञ्च यत्र योगरूढ़ि लभ्यार्थयोस्तात्पर्य्याद्यग्रहादिरोधिसमवधानाद्वा न प्रथममन्वयधी- स्तत्र योगार्थमर्य्यादया पङ्कजातत्वेन कुमुदादेः समुदायशक्त्या च पद्मत्वेन स्थलकमलस्य बोधोभवत्येवेति मणिकृन्मतं दर्शयति ।

रूढ्यर्थेऽन्यत्र वा यत्र यदाकाङ्क्षादिनिश्चयः ।
तदैव तत्र योगार्थस्यान्वयोमणिकृन्मतः ।

समुदायशक्त्युपस्थापिते पदान्तरवृत्त्युपस्थापिते वा यत्र धर्म्मिण्य वान्तरवृत्तिलभ्यार्थस्य यदाकाङ्क्षानिश्चयादिस्तदैव तत्र तस्यान्वय बोधउत्पद्यते सम्भूतसामग्रीकत्वात् रूढ्यर्थभिन्ने योगार्थस्यान्वयबोध मुदासाय तु रूढेर्योगापहारितावादो रूढ्यर्थमात्रे योगार्थस्यान्वय बोधसामग्रीसत्त्वाभिप्रायकइति चिन्तामणिकृतांमतम् ।

योगरूढं विभजते ।

सामासिकं तद्धितात्तमिति तत् द्विविधं भवेत् ।
योगरूढं कृदन्तस्य समासत्वव्यवस्थितेः ।

तत् योगरूढं सामासिकं समासात्मकं कृष्णसर्पादि तद्धितान्तं वासुदेवादि । कृदन्तस्य पङ्कजादियोगरूढस्य सामासिकएवान्तर्भावइति नाधिक्यम् ।

यौगिकं नाम लक्षयति विभजते च ।

योगलभ्यार्थमात्रस्य बोधकं नाम यौगिकम् ।
समासस्तद्धितान्तश्च कृदन्तश्चेति तत्त्रिधा ।

यन्नाम स्वान्तर्निविष्टशब्दानां योगलभ्यस्यैव यादृशार्थस्यान्वय बोधं प्रति हेतुस्तन्नाम तादृशार्थे यौगिकम् । योगरूढन्तु कृष्णसर्पादिपदं योगेनावच्छिन्नस्य रूढ्यर्थस्य बोधकं नतु तन्मात्रस्य । तच्च यौगिकं त्रिविधं समासस्तद्धितान्तं कृदन्तश्चेति द्वन्द्वोऽपि समासः स्वघटकशब्दानामाकाङ्क्षया लभ्यस्य धवखदिराद्यर्थस्यान्वय बोधकतया यौगिकएव । सर्व्वत्रेदं रूढान्यत्वेन विशेषणीयं नातः कृष्णसर्पादौ वासुदेवादौ पङ्कजादौ च योगरूढेऽतिप्रसङ्गः । ब्राह्मणी श्वश्रूः श्रूद्रेत्यादौ ङीबादेः स्त्रीत्ववाचित्वे तादृशं नाम यौगिकमेव अन्यथा तु स्त्रीत्वादिमति तत्तदर्थे रूढमेव नातोविभागस्य व्याघातः ।

यौगिकेषु समासं लक्षयति ।

यादृशस्य महावाक्यस्यान्तस्त्वादिनिजार्थके ।
यादृशार्थस्य धीहेतुः स समासस्तदर्थकः ।

यादृशमहावाक्योत्तरस्त्वतलादिः स्वार्थस्य यादृशार्थावच्छिन्न विषयताशालिबोधे हेतुस्तादृशं तद्वाक्यं तथाविधार्थे समासः । पाचकादिकन्तु पाककर्त्राद्यर्थकं वाक्यमपि स्वघटकानेकनामलभ्यतादृशार्थकत्वविरहान्न महावाक्यं प्रकृत्यर्थमात्रावच्छिन्नप्रत्ययार्थस्यान्वय बोधं प्रत्ययोग्यत्वं वा प्रकृते वाक्यस्य महत्त्वं बोध्यं तेन उपकुम्भादौ मात्यापिर्नवा नीलघटत्वमित्यादौ नीलघटत्वादिभागेऽतिप्रसङ्गः ।

क्षीरपायीत्यादिकस्तु प्रकृत्यर्थावच्छिन्नतदर्थस्यान्वयबोधे समर्थोऽपि न प्रकृत्यर्थमात्रावच्छिन्नस्य ततः पानशीलसामान्यस्याप्रत्ययात् राज्ञः पुरुषत्वमित्यादितोराजन्येव पुरुषभावः प्रतीयते नतु राजपुरुषस्य भावः तद्धितानां प्रकृत्यर्थमात्रान्वितस्वार्थबोधकत्वादतो राज्ञःपुरुषेत्यादिभागे न प्रसङ्गः। पायं पायमित्यादिणमन्तभागस्तु स्वार्थावच्छिन्नस्य धात्वन्तरार्थस्यैवान्वयबोधको नतु त्वादिप्रत्ययार्थस्य प्रस्थायेत्यादौ समासव्यपदेशोल्त्वादिशब्दसंस्कारप्रयोजनको गौणः।

विभजते।

सचायं षड्विधः कर्म्मधारयादिप्रभेदतः।
यश्चोपपदसंज्ञोऽन्यस्तेनासौ सप्तधा मतः।

सचायं निरुक्तसमासः कर्म्मधारयद्विगुतत्पुरुषाव्ययीभाव बहुव्रीहिद्वन्द्वभेदात् षड्विधः यश्च कुम्भकारादिरप्युपपदसंज्ञकः समासोऽस्ति तेन समं समासः सप्तविधः। सङ्ग्रामशनिभनीकाशादीनामिव कारादीनामपि शब्दानामुपपदार्थान्वितस्यैव स्वार्थस्यबोधक तया तथाविधनामान्तत्वमेव चैतस्य समासान्तराद्विशेषः।

ननु यदि षड्विधः सप्तविधोवा समासस्तदास्य पञ्चविधत्वोक्तिः प्राचामसङ्गतेत्यतस्तामुपपादयति।

पूर्व्वमध्यान्तसर्व्वान्यपदप्राधान्यतः पुनः।
प्राच्यैः पञ्चविधः प्रोक्तः समासो वाभटादिभिः।

कश्चित्समासः पूर्व्वपदार्थधर्म्मिकान्वयबोधजनकतया पूर्व्वपद प्रधानउच्यते यथा प्राप्तजायार्द्धपिप्पलीपूर्व्वकायादिकस्तत्पुरुषः यथा वा उपकुम्भाद्यव्ययीभावः पुरुषसिंहादि कर्म्मधारयश्च। कश्चिन्मध्य पदार्थधर्म्मिकधीजनकतयैव मध्यपदप्रधानो यथा पटानधिकरण प्रतियोगितानवच्छेदकेत्यादिकस्तत्पुरुषः पटस्य नाधिकरणमित्यादि

विग्रहे मध्यपदार्थस्यैव विशेष्यत्वात् बहुपदे बहुव्रीहिरेवेत्यस्य तत्पुरुषादेर्बहुनामगर्भलाभावे तात्पर्य्यमित्यग्रे व्युत्पाद्यत्वात्। कश्चिदन्यपदार्थधर्म्मिकधीहेतुत्वादन्यपदप्रधानः यथा राजपुरुषादिकस्तत्पुरुषो नीलोत्पलादिकः कर्म्मधारयो द्विगार्ग्याद्यव्ययीभावश्च। कश्चित्सर्व्वपदार्थधर्म्मिकबुद्धिहेतुत्वात् सर्व्वपदप्रधानः यथेतरेतरद्वन्द्वो द्वन्द्वमात्रं वा। कश्चित्तद्घटकान्यपदार्थधर्म्मिकज्ञानजनकत्वादन्यपदार्थप्रधानः यथा बहुव्रीहिः खलेयवाद्यव्ययीभावश्च। तदेवं पञ्च भेदानादायैव पञ्चविधत्वं प्राचैरुक्तमतो न विरोधः। नित्यानित्यभेदेन समासस्य द्वैविध्यमप्यस्ति यदुक्तं जयादित्येन विभक्तिमात्रप्रक्षेपान्निजान्तर्गतनामसु। स्वार्थस्याबोधबोधाभ्यां नित्यानित्यौ समासकाविति। स्वान्तर्गतनामसु विभक्तिमात्रप्रक्षेपेण यल्लभ्यार्थस्याबोधः स नित्यः समासः यथा कृष्णसर्पनिर्मक्षिकासुरादिः कृष्णः सर्पो मक्षिकाया निः न सुर इत्यादितस्तल्लभ्यस्य वैजात्यादेरग्रहात् यल्लभ्यस्य च बोधः सोऽनित्यो यथा राजपुरुषपूर्व्वकायादिः तल्लभ्यार्थस्य राज्ञः पुरुषः पूर्व्वं कायस्येत्यादिवाक्यादपि प्रतीतेः। स्फुरद्वाणी चलच्चैत्र इत्यादिकः कर्म्मधारयोऽप्यनित्य एव समासः स्फुरन्ती वाणीत्यादिविग्रहस्य वाण्यादौ स्फुरदादिविधेयकबोधाजनकत्वेऽपि स्फुरदभिन्नवाण्यादावेकत्वादिबोधकत्वमादायैव तदर्थप्रकाशकत्वात् स्फुरन्तीं वाणीमित्यादिवाक्यस्यैव तत्र विग्रहत्वसम्भवाच्च विग्रह एव समासलभ्यार्थस्य बोधकत्वं तन्त्रं न तु समासे विग्रहार्थस्य विग्रहलभ्ययोर्लिङ्गसंख्ययोर्व्यञ्जकवैधुर्य्येण प्रायशः समासाबोध्यत्वात्। अतएव यत्र समासे तयोर्व्यञ्जकसद्भावस्तत्रावगमोऽपि यथा जरतीचित्रगुर्जनः प्रियतिसा पुरुष इत्यादौ स्त्रीत्वस्य स्त्रीप्रत्ययतिस्रादेशयोरुदभिव्यञ्जकयोः सत्त्वात् यथावा अक्षपरि शलाकापरि प्रिययुवा इत्यस्य-मित्यादावेकत्वादेः अक्षशलाकयोरेकत्व एवाव्ययीभावस्य यद्वक्ष्यदो-

दित्वएव युवाद्यादेशस्य सेनाङ्गानां बहुत्वएव समाहारद्वन्द्वस्य विधानात्। तदुक्तमभियुक्तैः संख्या तु व्यञ्जकाभावादव्यक्ता प्रातरादिवत्। यत्र तु व्यञ्जकं किञ्चित्तत्र संख्या प्रकाशते शलाकापरि हृस्वश्च पूर्व्वकायोऽर्द्धपिप्पलीति। पूर्व्वादेरर्द्धस्य च इत्यर्थैकत्वमन्तर्भाव्यैव वचनं विना तत्पुरुषस्य व्युत्पन्नत्वात् सरसिजादौ कण्ठेकालादौ चालुक् समासे सुपः संख्यावगमेऽपि न क्षतिः तत्र व्यञ्जकसुपः सत्त्वेऽपि संख्या न बुध्यतइति तु समासशक्तिवादिनः पातञ्जलाः।

समासेषु कर्म्मधारयं लक्षयति।

क्रमिकं यन्नामयुगमेकार्थेऽन्यार्थबोधकम्।
तादात्म्येन भवेदेष समासः कर्म्मधारयः।

क्रमिकं यन्नामद्वयं तयोरेकस्य नाम्नोऽर्थे धर्म्मिणि तादात्म्येनापरनाम्नोऽर्थस्यान्वयबोधं प्रति समर्थं तादृशनामद्वयं कर्म्मधारयः नीलोत्पलमित्यादावुत्पलादिपदस्यार्थे नीलादिपदार्थस्य तादात्म्येनान्वयः तथा पुरुषसिंहइत्यादावपि पुरुषादावुत्तरपदलक्ष्यस्य सिंहादिसदृशस्य पुरुषः सिंह इवेत्यादिविग्रहे प्रायेणोपमेयस्योपमानैरिति कर्म्मधारयानुशासनात्। कुम्भस्य समीपमित्याद्यर्थक स्तूपकुम्भादिर्न तादात्म्येनान्वयबोधकः प्रवलमपद्रव्यमित्यादेः संग्रहाय नामपदस्य धातुभिन्नोपलक्षकत्वात् सार्थकसामान्यपरत्वेऽपि क्षत्यभावाच्च। नीलमुत्पलमित्यादौ तु समानविभक्तिकं नामद्वयं स्वार्थयोरभेदान्वयं बोधयदपि न क्रमिकं विभक्त्या व्यवधानात्। यदिच तादात्म्येन नीलादिनामार्थस्यान्वयबुद्धौ नीलादिनामोत्तर नामोपस्थाप्यत्वं तन्त्रमतोन तत्राभेदसम्बन्धेन नीलादेरन्वयः परन्तु विशेषणविभक्त्युपस्थापिते तादात्म्यएवाधेयत्वेन नील घटपटावित्यादौ च नीलपदाव्यवहितेन घटपटेत्येवंद्वन्द्वात्मकनाम्नैवोपस्थापिते पटे नीलस्य तादात्म्येनान्वयान्न व्यभिचारः स्तोकं पचति धान्येन धनं

प्रशस्त्या पटुरित्यादावपि स्तोकादेर्न धात्वाद्यर्थे तादात्म्येनान्वयः किन्तु द्वितीयाद्यर्थे तादात्म्यस्वाधेयत्वेनेत्यादिकं विभाव्यते तदा क्रमिकत्वमनुपादेयमेव। राजपुरुषइत्यादिकस्तु तत्पुरुषेण पुरुषे पूर्व्वपदलक्षितराजसम्बन्धिनस्तादात्म्येनान्वयबोधकः समासविग्रहयोस्तुल्यार्थकत्वव्याघातापत्तेः परन्तु राजसम्बन्धस्यैव अतएव राजपुरुषइत्यादौ पूर्व्वपदे षष्ठ्यर्थसम्बन्धे लक्षणेति मणिकृदुक्तमपि सङ्गच्छते। ययाच नामार्थयोर्भेदेनान्वयेऽपि न क्षतिस्तथोपरिष्टा द्वक्ष्यते। किञ्चिदिशिष्टसुबर्थानवच्छिन्नस्यैव वा तादात्म्येनान्वय बोधकत्वमुक्तनिरुक्तौ निवेश्यम्। नचैवमपि पञ्चपुण्यादिद्विगौ द्विगार्ग्यं गच्छत इत्यादिस्थलीये द्वितयाद्यभिन्नगार्ग्यादिबोधकाव्ययीभावे चातिव्याप्तिस्तदन्यत्वेनापि विशेषणीयत्वात्। क्वच च मानुषब्राह्मणो ब्राह्मणमानुषइत्याद्यप्रयोगाद्विशेषणविशेष्ययोर्यत्र मिथस्तादात्म्येन व्यभिचारस्तत्रैव कर्म्मधारयः साधुः प्रमेयधूमइत्यादौ तु नरस्य शरीरं राहोः शिर इत्यादाविव तादात्म्यसम्बन्धार्थकषष्ठ्या तत्पुरुषएवेति वृद्धाः। चन्दनतरुर्व्विन्ध्यगिरिर्वसन्तसमयइत्यादिप्रयोगस्य प्रामाणिकत्वात् विशेष्यस्यैव विशेषणव्यभिचारित्वं कर्म्मधारये तन्त्रं नतु विशेषणस्यापि तद्व्यभिचारित्वं पुरुषोत्तमइत्यत्र चोत्तमत्वं न नित्यज्ञानादिमत्त्वं किन्तु भ्रमविधुरत्वम् अतएव तत्र पुरुषस्येव पुरुषेऽपि तस्य व्यभिचारसत्त्वादुत्तमपुरुषइत्यपि कर्म्मधारयः साधुरिति तु नव्याः। तदाद्युत्तरपदकः कर्म्मधारयः प्रायशो नेष्यते नीलतदस्तीत्यादितोजात्वपि नीलोत्पलादेरक्तित्वाद्यप्रतीतेः। पङ्कयङ्गाजनं रम्यमामतङ्क्षनं वृथा। नीलयदसत्वास्वाद्यः कटुतद्रूपमीक्ष्यते इत्यादिप्रयोगात् क्वचिदिष्यतेऽपि प्रयुक्तञ्च जुमरनन्दिना परमः स इत्याद्यर्थे परमसः परमतावित्यादि। तत्पुरुषोऽप्येतेन व्याख्यातः। नन विशेष्यतया नामार्थप्रकारकान्वयबद्धिमात्रं प्रत्येव नामोत्तर

विभक्त्युपस्थाप्यत्वं तत्त्वं ननु तादात्म्यसम्बन्धानवच्छिन्नतत्प्रकारताकबुद्धिं प्रति गौरवादतो नामार्थयोर्नीलोत्पलयोरन्वयासम्भवात् कर्म्मधारयादिकः समासो न यौगिकः किन्तु नीलोत्पलत्वादिविशिष्टे रूढ़ एव । तदुक्तं भर्तृहरिणा अबुधान् प्रत्युपायाश्च विहिताः प्रतिपत्तये । शब्दान्तरत्वादत्यन्तं भेदो वाक्यसमासयोरिति वैयाकरणाः तन्मन्दं नीलोत्पलमित्यादौ समुदाये रूढ्यप्रतिसन्धानेऽपि नीलादि प्रत्येकपदोपस्थित्या तयोस्तादात्म्येनान्वयबोधस्यानुभविकत्वेन गौरवस्य प्रामाणिकत्वादन्यथा नामार्थस्यान्वयबोधसामान्यं प्रत्येव नामान्तरनामोपस्थाप्यत्वं तत्त्वमुरीकृत्य नीलमानयेत्यादौ नामार्थसुबर्थयो र्नान्वयबोधः परन्तु सुबन्तभागस्य नीलविशिष्टकर्म्मत्वादौ रूढ़िरेवेत्यपि किन्न रोचयेः । नच समासस्याशक्तत्वे नीलो द्रव्यञ्च घट इत्यादाविव नीलघटो द्रव्यमित्यादावपि घटे धर्म्मिण्येकत्र द्वयमिति न्यायेन नीलद्रव्ययोस्तादात्म्येनान्वयापत्तिरिति वाच्यं नामार्थस्य मुख्यविशेष्यताक इव तादात्म्यावच्छिन्नविधेयताकेऽपि बोधे नाम्नः प्रथमान्तत्वस्य तत्त्वात् विधेयत्वञ्च विषयतावच्छेदकतान्यप्रकारत्वं प्रकारताप्रभेदो वेत्यन्यदेतत् पटमित्यादौ तु कर्म्मत्वादौ पटादिर्न तादात्म्येन विधेय इति न तत्र व्यभिचारः । ननु नीलं पीतञ्चोत्पलं यत्र इत्यर्थे नीलपीतोत्पलं सर इत्यादिको बहुव्रीहिरिव नीलं पीतञ्चोत्पलमित्यर्थे नीलपीतोत्पलं पुष्पमित्यादिकः कर्म्मधारयोऽप्येकत्र द्वयमिति न्यायेन नीलपीताभ्यामवच्छिन्नोत्पलनिष्ठधर्म्मिताकधीजनकः कथं न स्यात् इति चेन्न बहुपदे बहुव्रीहिरेव नेतरो द्वन्द्वान्यः समास इत्यनुशिष्टिबलेन बहुव्रीहेरेव सन्निविष्टनामद्वयोपस्थाप्यार्थद्वयावच्छिन्न तादृशनामान्तरार्थनिष्ठविषयताकबोधं प्रति हेतुत्वेन समासान्तरस्य तादृशधियं प्रत्यसमर्थत्वात् । नीलपीतोत्पले रम्ये पीतनीलोत्पलाश्रितमित्यादौ तु नीलोत्पलं पीतोत्पलञ्च रम्यमित्याकारक एव बोधो

न तु नीलं पीतञ्च यदुत्पलं तदन्यमित्याकारः । अतएव द्वन्द्वात् परस्य प्रत्येकाभिसम्बन्धसूचनार्थं नीलपीते च ते उत्पले चेत्यादिक मेव तत्र विग्रहं वर्णयन्ति न तु नीलं पीतञ्च तदुत्पलञ्चेत्यादिकम् । घटस्य नाधिकरणमित्यादिविग्रहे घटानधिकरणमित्यादिकस्तु मध्य पदप्रधानस्तत्पुरुषेण बहुनामगर्भो नवेकत्वदयमितिन्यायेन स्वार्थस्य बोधक इति सम्प्रदायविदः ।

स्यादेतत् समासानां समुदायशक्तत्वे वाचस्पतिर्मितायाः स श्यामे कण्ठे व्रणः पुमान् इत्यादौ वाचि मितायाः कण्ठे च श्यामादे र्नाभेदेनान्वयो वाणादेः पदार्थैकदेशत्वेन तत्र पदान्तरार्थस्य पशुरपशु र्गणणां समवेतमित्यादाविव निराकाङ्क्षत्वादेवं पत्न्या द्विजातिस्वाध्यायो जटाभिस्तापसस्येत्यादौ पत्नीसहभावस्य द्विजातौ जटावैशिष्ट्यस्य च तापसे भेदेनापि नान्वयो यथाकाशमभिघातादित्यादौ । यौगिकत्वे तु तत्र तत्र तथाविधान्वयो दुर्व्वारोवाक्प्रभृतेः पदार्थत्वादिति चेन्न वृत्त्येकदेशपदस्याथ सम्बन्धस्य कारकस्य वा बोधकान्यविभक्तेः स्वार्थानुभावकतायां निराकाङ्क्षत्वादेव तस्य निरस्तत्वादतएव चैत्रस्य गुरुकुलं शरैः शातितपत्रकइत्यादौ गुर्व्वादिपदस्य वृत्त्येकदेशत्वेऽपि तदर्थे षष्ठ्यर्थसम्बन्धस्य तृतीयार्थकरणत्वादेश्चान्वयः सर्व्वसिद्धः । समासस्येव क्यजादिप्रत्ययान्तस्यापि वृत्तित्वात् परिष्कृतायाः सततं यस्तु वाचस्यतीयते । सम्पदा जटया वापि पुत्रीयति स पूरुष इत्यादेरपि वागाद्यंशे परिष्कृतादेः पुत्राद्यंशे च सम्पदादेः सह-भावादिबोधकतायां न सामर्थ्यमतएव प्रतियोगिपदादन्यद्यदन्यत् कारकादपि । वृत्तिशब्दैकदेशार्थे न तस्यान्वय इष्यतइत्यपि पठन्ति । कर्म्मचाण्डालयोगोत्थं कुरु पापक्षयं ममेत्यत्र च योगोत्थमित्यस्य योगप्रयोज्यमित्यर्थः स चाभेदेन पापक्षयेऽन्वितः । यस्मिन् राशिगते

सूर्य्ये विधर्त्तिं यान्ति मानवाः । तेषान्तत्रैव कर्त्तव्या पिण्डदानादिका क्रियेति वचनन्तु अमूलं समूलत्वे तु यस्मिन् राशौ गते सूर्य्ये इत्येव तत्र पाठ इत्यास्तां विस्तरः ।

द्विगुं लक्षयति ।

संख्याशब्दयुतं नाम तदलक्ष्यार्थबोधकम् ।
अभेदेनैव यत्स्वार्थे स द्विगुस्त्रिविधो मतः ।

संख्यावच्छिन्नशक्तयत्पदोत्तरत्वविशिष्टं यन्नाम स्वार्थधर्म्मिकं तादात्म्येन तदलक्ष्यार्थस्यान्वयबोधं प्रति समर्थं तन्नामोत्तरतापन्नं तन्नामैव तदलक्ष्यार्थाभिन्नस्वार्थे द्विगुरुच्यते । त्रिकटु त्रिभुवन चतुर्युग चतुर्व्वर्ग पञ्चगव्य पञ्चामृत षड्रस षट्पदार्थ सप्तर्षि अष्टनाग अष्टवसु नवरस नवग्रह दशमूल एकादशरुद्र एकादशेन्द्रिय द्वादशादित्यादिकस्तु कर्म्मधारयः शुण्ठ्यादिपर्य्याप्तत्रित्वावच्छिन्नबोधकतया न पूर्व्वपदालक्ष्यार्थस्य बोधकस्त्रिकटुप्रभृतिभ्यः कटुत्रयादिसामान्यस्याप्रतीतेः पञ्चमूलीत्यादौ तु मूलपञ्चकत्वेनैव मूलविशेषेषु तात्पर्य्यं नतु विशेषरूपेणापि अतएव कण्टकार्य्यादिकं स्वल्पं गाम्भार्य्यादि च यन्महत् । पञ्चमूलं तदुभयं दशमूलमुदाहृतमित्यादिकस्ताद्रूप्येण बोधस्थलीयः प्रयोगः वर्षाकाले मघर्क्षेण युक्ता चापि त्रयोदशीत्यादिवदेकवचनस्य साधुत्वसम्भवात् द्वयोरूपमित्याद्यर्थे द्विरूपादि पदं नाभेदेन द्विप्रभृतेरनुभावकम् एकत्वसंख्यया विशिष्टं बोधयदपि एकपदं न पर्य्याप्तिसंसर्गेण तदवच्छिन्नस्य बोधकं द्वितयादिपदं पर्य्याप्त्या द्वित्वावच्छिन्नं प्रतिपादयदपि न तत्र शक्तं वाक्यत्वादतोनैक घटद्वितयपटेत्यादिकर्म्मधारयेऽतिप्रसङ्गः । सप्तशती पठ्यतामित्यादौ च यद्यपि शते धर्म्मिणि सप्तानामभेदेन नान्वयोबाधितत्वान्नापि सप्तपदलक्षितस्य सप्तगुणितस्य द्विगुत्वक्षान्यापत्तेः तथापि शतपदार्थैकदेशे शतत्वसंख्यायां तस्याः सप्तत्वसम्भवादिति वदन्ति । द्विगार्थं

गच्छतइत्याद्यव्ययीभाववारणन्तु पूर्ववत् । सचायं द्विगुस्त्रिविधः तद्धितार्थोत्तरपदसमाहारभेदात् ।

तत्र तद्धितार्थं द्विगुं लक्षयति ।

तद्धितार्थान्वितस्वार्थस्तद्धितार्थद्विगुर्मतः ।
तद्धितार्थे लाक्षणिकस्त्वान्त्यनामा त्वसर्व्वगः ।

योद्विगुः स्वोत्तरतद्धितार्थान्वितस्वार्थकः स तद्धितार्थद्विगुः । द्विमुद्रो पटइत्यादौ द्वाभ्यां मुद्राभ्यां क्रीतस्य द्विवर्षो गौरित्यादौ द्वाभ्यां वर्षाभ्यामभिन्नवयस्कस्य द्विदलं पवित्रमित्यादौ द्वाभ्यां दलाभ्यां निर्म्मितस्य द्विगुञ्जं स्वर्णमित्यादौ द्वाभ्यां गुञ्जाभ्यां तुलितस्य त्रिकाण्डः पुरुषइत्यादौ त्रिभिः काण्डैः परिमितस्य पञ्चकपालश्चरुरित्यादौ पञ्चभिः कपालैः संस्कृतस्य बोधने लुप्तस्यैव ठगादितद्धितस्य क्रीताद्यभिधायकत्वात् परिशिष्टकृतामतेनेदम् । उक्तप्रयोगेषु द्विगोरन्तिमनाम्नैव क्रीतादिरूपार्थो लक्ष्यते नतु लुप्तष्ठगादिरप्यपेक्ष्यतेऽतस्तद्धितार्थलाक्षणिकस्त्वान्त्यनामकोद्विगुरेव तद्धितार्थद्विगुरिति भणिभाष्यमतन्तु न युक्तम् असर्व्वगत्वात् पाञ्चपुरुषिरित्यादौ पञ्चानां पुरुषाणामपत्यस्य पञ्चगर्ग्यरूप्योगौरित्यादौ पञ्चानां गर्गाणां भूतपूर्व्वस्य बोधने तद्धितेनैव स्वार्थस्यापत्यप्रभृतेरुपस्थापनात् द्विस्वर्णमुद्रः पशुरित्यादावुत्तरपदस्य शक्तिविरहेण क्रीताद्यर्थे लाक्षणिकत्वायोगाच्च ।

उत्तरपदद्विगुं लक्षयति ।

स्वान्तर्निविष्टशब्दाभ्यां शब्दान्तरसमासगः ।
योद्विगुः शाब्दिकैरुक्तः स उत्तरपदद्विगुः ।

योद्विगुः स्वघटकनामभ्यां सह साकाङ्क्षनामान्तरेण समासस्यान्तर्गतः स उत्तरपदद्विगुः यथा पञ्च गावोधनमस्येत्यादिविग्रहे पञ्चगवधनः पुरुष इत्यादौ बहुव्रीह्यादिनिविष्टः पञ्चगवादिः ।

समाहारद्विगुं लक्षयति ।

स्वार्थान्वितसमाहारलक्षकस्वान्त्यशब्दकः ।
उक्ताभ्यामितरः किं वा समाहारद्विगुर्द्विगुः ।

स्वोपस्थाप्यार्थस्य समाहारलक्षकोयदीयान्त्यशब्दः स द्विगुः समाहारद्विगुः पञ्चपुलीत्यत्र हि योगलभ्यानां पञ्चाभिन्नपुलानां समाहारः परस्थपुलशब्देन लक्ष्यते नतु तत्र द्विगोः शक्तिरन्यलभ्ये शक्त्ययोगात् अतएव न लक्षणापि शक्यसम्बन्धस्यैव लक्षणात्वेन वाक्ये तदसम्भवात् । यदिच पञ्चपुलीत्यतः पञ्चानां पुलानामेव बोधो नतु तत्समाहारस्यापि अतएव पञ्चपुलीं छिनत्ति इत्यादिकः प्रयोगः प्रमाणम् अन्यथा समूहात्मनः समाहारस्य छिदाद्यसम्भवेन तदयोग्यत्वापत्तेः पुलादेर्द्वित्वबहुत्वेऽप्येकवचनन्त्वानुशासनिकं दारादेर्बहुवचनवदुपपद्यते । नच द्रव्यप्राधान्ये पञ्चखट्वीत्यादौ ह्रस्वोन स्यात् गोशब्दस्येव स्त्रीप्रत्ययस्यापि समासान्त्यस्योपसर्ज्जनस्यैव तद्विधानादिति वाच्यं समाहारसंज्ञकद्विगोरप्यन्त्यस्य स्त्रीप्रत्ययस्य पृथगेव ह्रस्वविधेर्व्वक्तव्यत्वात् प्रयोगानुसारित्वात् कल्पनायाः पञ्चपाचकीत्यादावव्याप्तिश्च तत्रोत्तरपदस्य वाक्यत्वेन लक्षकत्वायोगादिति सूच्यमीच्यते तदा पूर्व्वनिरुक्ताभ्यां तद्धितार्थोत्तरपदद्विगुभ्यां भिन्नद्विगुरेव समाहारद्विगुर्बोध्यः । एवञ्च द्विगोः कर्म्मधारयान्तर्गतत्वेऽपि न क्षतिरिति तु विभावनीयम् ।

तत्पुरुषं लक्षयति ।

यदीयेन सुबर्थेन युतयद्बोधनक्षमः ।
यः समासस्तस्य तत्र स तत्पुरुष उच्यते ।

यदर्थगतेन सुबर्थेन विशिष्टस्य यदर्थस्यान्वयबोधं प्रति यः समासः स्वरूपयोग्यः स तदर्थस्य तदर्थे तत्पुरुषः नतु यन्नामोत्तरं यन्नाम यदर्थगतसुबर्थावच्छिन्नस्य यत्स्वार्थस्य बोधकं तदुत्तरं तन्नामैव तदर्थयोस्तत्पुरुषः पर्व्वकायोऽर्द्धपिप्पलीत्यादावव्याप्तेः । लोक

पक्तौ त्यादौ क्रियाविशेषणैः कर्म्मधारयएव महाकविर्महाविभइत्यादौ कवित्वादाविव प्रकृतेऽप्येकनामार्थैकदेशे पचनादावपरनामार्थस्या भेदान्वयबोधकतया तथात्वसम्भवात् स्तोकं पक्तौ त्यादौ श्रमस्तादात्म्य वाचित्वे तु तत्पुरुषः सम्भवत्येव क्रियाविशेषणैः समासएवानुत्पन्न इति तु न देश्यं स्तोकनम्रा स्तनाभ्यामित्यादेः कालिदासाद्यैः प्रयुक्तत्वात् द्विगौ कर्म्मधारये च शाब्दिकानां तत्पुरुषत्वव्यपदेशः पद संस्कारार्थौगौणः ।

विभजते ।

द्वितीयादिसुबर्थस्य भेदादेष च षड्विधः ।
क्रियान्वयी द्वितीयादेरर्थः प्रायोऽत्र योजितः ।

ग्रामगतः चैत्रनीतः ब्राह्मणदत्तः वृक्षपतितः चैत्रधनं मैत्रगतिः गृहस्थितइत्यादौ द्वितीयादिसुबर्थस्य कर्म्मत्वकर्तृत्वादेर्बोधभेदादेतस्य द्वितीयातृतीयादितत्पुरुषत्वेन षड् भेदाः स्वघटकैकपदार्थनिष्ठ द्वितीयार्थावच्छिन्नापरपदार्थबोधकसमासत्वादेर्धर्म्मषट्कस्य सुवचत्वात् । इयांस्तु विशेषोयदेतेषु धात्वर्थान्वय्येव द्वितीयादेरर्थः प्रायो घटकः पीठं परितः पुण्येन सुखं शमाय विद्या दण्डाद्घटः गवां कृष्णा सम्पन्नक्षीरा तिलेषु तैलमित्यादिविग्रहे तत्पुरुषस्यासाधुत्वात् वर्षसुखी लोहकाणः कुण्डलहिरण्यं घटान्यः कुवेरवलिः कर्म्मकुशल इत्यादौ तु तत्तद्विशेषविधेर्द्वितीयादितत्पुरुषः ।

ननु ग्रामगतइत्यत्र गतौ ग्रामकर्म्मत्वस्य राजपुरुष इत्यत्र च पुरुषे राजसम्बन्धस्यावगमोन ग्रामादिपदेभ्योलुप्तसुपः स्मरणात् तल्लोपमजानतोऽप्यन्वयबोधात् सम्बद्धं ग्रामगतइत्यादितः सम्बद्धग्रामयो रभेदान्वयधीप्रसङ्गाच्च सम्पन्नं दधि पश्येत्यादाविव तत्रापि नामार्थयोरभेदान्वयबोधोपयुक्तस्य नाम्नोः समानविभक्तिप्रतिसन्धानस्या विशिष्टत्वात नापि ग्रामादिपदस्य ग्रामकर्म्मत्वादिलक्षकत्वात् अभे-

दान्यसम्बन्धेन नामार्थस्यान्वयबोधं प्रत्यनुकूलस्य नामोत्तरविभक्त्युप स्थाप्यत्वस्य तादृशप्रत्ययोपस्थाप्यत्वस्य वा गत्यादावसत्त्वात् । नच ग्रामादिपदलक्षितस्य ग्रामकर्म्मकादेरेव तत्र गत्यादौ तादात्म्येऽ-न्वय इति साम्प्रदायिकानाम्मतमेव साम्प्रतं तत्पुरुषस्यापि समस्य-मानपदार्थयोरभेदान्वयबोधकत्वे कर्म्मधारयत्वापत्तेः ग्रामं गतः राज्ञः पुरुष इत्यादिविग्रहस्य समासतुल्यार्थकत्वहान्यापत्तेश्चेति चेन्न प्रत्य-यान्ततत्तन्नामार्थस्यैव भेदेनान्वयबोधं प्रति तत्तन्नामोत्तरप्रत्ययोप-स्थाप्यतायास्तन्त्रत्वेन ग्रामगतइत्यादौ ग्रामादिपदलक्षितग्रामकर्म्म-त्वादेर्गत्यादौ भेदेनान्वये बाधकाभावात् । नचैवं गतोग्रामेत्यत्रापि ग्रामपदलक्षितस्य ग्रामकर्म्मत्वादेर्गत्यादौ भेदेनान्वयबोधप्रसङ्गः प्रत्ययान्तान्यतत्तन्नामोपस्थाप्यार्थस्यान्वयबोधसामान्यं प्रत्येवोत्सर्गत स्तादृशतत्तन्नामोत्तरनामोपस्थाप्यत्वस्य हेतुत्वेन तदसम्भवात् । अत एवार्द्धपिप्पलीच्छेदइत्यादौ पूर्व्वपदप्रधानत्वेनानभिमतस्य तत्पुरुषा-देरन्यपदार्थानां पिप्पलीप्रभृतीनां अर्द्धाद्यर्थे घटपटमठानामि-त्यादौ च सर्व्वपदप्रधानत्वेन द्वन्द्वस्यानन्यपदार्थानां घटादीनां सुबर्थे अन्वयः तथा बहुगुड़द्राक्षेत्यादौ गुड़ादीनामपि बहुजर्थे प्रकृत्यर्थ-स्येषदसमाप्तौ नाम्नः प्राग्बहुचो विधानादिति ।

ननु यदि नामार्थयोरपि भेदेनान्वयोव्युत्पन्नस्तर्हि ग्रामगत इत्यादौ कर्म्मत्वादिसंसर्गेण ग्रामादेरेव गत्यादावन्वयोऽस्तु कृतं ग्रामादिशब्दस्य ग्रामकर्म्मत्वादिलक्षणयेति चेत् सत्यं विग्रहवाक्यानां समाससमानार्थकत्वरक्षणाय तत्र लक्षणास्वीकारात् मास्तु वा ग्रामादिपदस्य तत्कर्म्मत्वादौ लक्षणा कर्म्मत्वादिसंसर्गेणैव ग्रामादे-र्गत्यादावन्वयसम्भवात्तथापि न क्षतिः ग्रामं गत इत्यादिविग्रहस्यापि कर्म्मत्वार्थकद्वितीयाद्युपसन्धानवशादेव कर्म्मत्वादिसंसर्गेण गत्यादौ ग्रामाद्यन्वयबोधकतया समाससमानार्थकत्वसम्भवात् ग्राममित्यादौ

कर्म्मत्वादिधर्म्मिकान्वयबोधानुरोधेन द्वितीयादेः कर्म्मत्वाद्यर्थकत्वात् अतएवाघटः पटइत्यादावन्यस्य असुरोदैत्यइत्यादौ विरोधिनः अनित्यः शरइत्यादौ सदृशस्य अब्राह्मणोवार्द्धुषिकइत्यादावप्रशस्तस्य अनुदरमुदरन्तरण्याइत्यादौ स्वल्पस्य वाचकेन नञ्निपातेन स्वार्थे प्रतियोगित्वादिसम्बन्धेनैव घटादेरनुभावनेऽपि तत्रत्य तत्पुरुषे नाव्याप्तिः। पटस्याभावइत्यर्थे प्रसज्यनञा अव्ययीभावएवसमासः प्रमाणन्तेनापटंवर्त्तते इत्याद्येव तत्र प्रयोगस्तत्पुरुषस्योत्तरपदलिङ्गकत्वनियमात् इति वृद्धाः। प्रसज्यनञाप्यपटइत्यादिस्तत्पुरुषएव साधुर्नाव्ययीभावः नञ्तत्पुरुषविधेस्तदपवादकत्वात् अतएव वादिनामविवादइत्यादिकः किरणावल्यादौ पुंसि प्रयोगइति तु पक्षधरमिश्राः। युज्यते चोत्तरः कल्पोनचेदेवं दृश्यते राजमातङ्गास्तस्यैव मी तुरङ्गमाः। चैत्रोग्रामगतस्तत्र मैत्रः किं कुरुतेऽधुना इत्यादौ राजसम्बन्ध्यादेराजादिपदलक्ष्यत्वे तदेकदेशस्य राजादेस्तदा परामर्शो न स्यात् विशेष्यविधया वृत्त्या पूर्व्वोपस्थापितस्यैवार्थस्य परामर्शकत्वात् तदादिशब्दानां नहि प्रजावतीयं मे त्वं तस्मै देहि कम्बलम्। नीलोमणिर्गुणः सोऽत्र भ्रात्रादिर्बाध्यते तदा।

नन्वेवमनयैव ऋचा निषादस्थपतिं याजयेदितिश्रुतौ निषादानां स्थपतिरिति व्युत्पत्त्या न तत्पुरुषः परन्तु निषादः स्थपतिरित्यर्थे कर्म्मधारयएवेति सिद्धान्तोव्याहन्येत तत्पुरुषे भक्तिभिया हि तत्र कर्म्मधारयस्वीकारस्तन्मूलके निषादस्याधानेऽपूर्व्वविद्याप्रयुक्तिस्स कल्प्यते कल्प्यते च निषादीयतत्तदध्ययने निषेधविधिबाधात् स्त्री शूद्रौ नाधीयतामितिश्रुतौ तत्तदध्ययनेतराध्ययनपरत्वं धातोः शूद्रपदस्य त्रैवर्णिकान्योपलक्षकत्वात्। यदि च कर्म्मधारयइव तत्पुरुषेऽपि न लक्षणा तदा तत्पुरुषएव तत्रोचितस्त्रैवर्णिकस्यैव निषादीयस्थपतित्वेन प्राप्तावपूर्व्वविद्याप्रयुक्तो स्तन्मूलकानिषेधविधिसङ्कोचस्य

चाकल्पत्वादिति चेत् तत् पुरुषे लक्षणापत्तेऽपि किमिति कर्म्मधारय एव तत्राभ्युपेयते नतु तत्पुरुषः निषादानां स्थपतिरिति व्युत्पत्त्या निषादस्थपतिपदान्निषादसम्बन्धवत्त्वेन स्थपत्यनुभवसहस्रस्य सर्व्वसिद्धत्वेन तदनुरोधाल्लक्षणायाः क्लृप्तत्वेन तत्कल्पनाभयस्यासम्भवात् नहि निषादस्थपत्यादिपदं निषादादिसम्बन्धवत्तया स्थपत्यादिबोधने निराकाङ्क्षं तथा सति निराकाङ्क्षत्वादेव तत्पुरुषत्वासम्भवेन लक्षणापत्तेस्तद्बाधकतयोपन्यासानौचित्यात् । अथ बाधकं विना मुख्यार्थएव श्रुतीनां प्रामाण्यं नतु प्रमाणान्तरविषयेऽपि लक्ष्यार्थे मुख्ये शब्दसाम्येत्यादिमीमांसया तथैव सम्प्रतिपत्तेरिति चेत्तर्हि बाधकासत्त्वे कर्म्मधारयविधयैव वेदानां प्रामाण्यं नतु प्रमाणान्तरविषयेऽपि तत्पुरुषविधया कर्म्मधारयात् समासान्तरस्य दौर्व्बल्यमित्यादिमीमांसया तथैव प्रतिपत्तेरित्यपि किन्न रोचयेः । तत्पुरुषाद्बहुब्रीहेर्जघन्यत्वमित्यत्राप्युक्तैव रीतिरनुसर्त्तव्या नहि बहुब्रीहौ समस्तपदानां लाक्षणिकत्वादेव ततोदुर्व्वलत्वम् एकपदमात्रलक्षणयापि बहुब्रीहेर्व्यवस्थाप्यत्वादित्यास्तां विस्तरः ।

अव्ययीभावं लक्षयति ।

उत्तरार्थान्वितस्वार्थाव्ययपूर्व्वस्तु योभवेत् ।
समासः सोऽव्ययीभावः स्त्रीपुंलिङ्गविवर्ज्जितः ।

यः समासः स्वोत्तरपदोपस्थाप्येन यदर्थेनान्वितस्य यदर्थस्य बोधकाव्ययपूर्व्वभागकः स तद्विशिष्टस्य तदर्थस्य बोधनेऽव्ययीभावः गृहे निर्मक्षिकम् उपकुम्भमित्यादौ हि मक्षिकाया अभावः कुम्भादेश्च सामीप्यादिर्मक्षिकादिपदप्राग्वर्त्तिना निराद्यव्ययेनानुभाव्यते अर्द्धशरीरमित्यादौ उत्तरपदार्थान्वितस्वार्थबोधकमप्यर्द्धपदं नाव्ययं निर्मक्षिका भूमिः निर्मनुष्योदेश इत्यादौ तु मक्षिकादेरभाववत्त्वं बोधयन्नपि निर्मक्षिकादिकस्तत्पुरुषो न तादृशार्थे स्त्रीपुंलिङ्गकार्थ्यविधरइति तत्र न प्रसङ्गः ।

नन्वक्षस्याक्षस्य शलाकाया वा दूरेऽन्ययापातनमित्यर्थेऽक्षपरि शलाकापरि इत्यव्ययीभावेऽव्याप्तिरव्ययगर्भत्वेऽपि तत्पूर्व्वकत्वा-भावात् एवं द्वौ गार्ग्यौ इत्यर्थे द्विगार्ग्यं गच्छत इत्यादौ द्वाभ्यां दण्डाभ्यां इत्यर्थे द्विदण्डि प्रहरतीत्यादौ त्रिस्रणां यमुनानां समाहार इत्यर्थे त्रियमुनं स्नातीत्यादौ लोहिता गङ्गा यस्मिन्नित्यर्थे लोहित गङ्गं देश इत्यादौ दण्डैन मिथः प्रहृत्य वृत्तमित्यर्थे दण्डादण्डि रण मित्यादौ केशेषु मिथः प्रगृह्य वृत्तमित्याद्यर्थे केशाकेशि युद्धमित्यादौ खले यवा यदा संहृता यवा यदा तिष्ठन्तीत्याद्यर्थे खलेयवं संहृतयवं तिष्ठद्‌गु वा काल इत्यादौ द्विगार्ग्यद्विदण्ड्यादिष्वपि तेष्व व्ययगर्भत्वस्याप्यभावादतः प्रकारान्तरेण निर्व्वक्ति ।

असादेशं विना श्रूयमाणषष्ठी न बोधिका ।
स्वार्थे यदर्थस्य सदा सोऽव्ययीभाव इष्यते ।

असादेशं विना श्रूयमाणषष्ठी स्वार्थे यत्समासार्थस्यान्वयबोधं प्रत्यसमर्था सएव वाव्ययीभावः श्रूयमाणैव षष्ठी स्वार्थे समासान्तरा-र्थस्यान्वयबोधने समर्था नतु लुप्तापि तत्तयोरक्षपरिव्यर्थत्वमित्यादौ त्वव्ययीभावार्थस्य लुप्तापि तत्तदेकाक्षान्वयापातनयोर्निरूपकत्व-मित्यन्वये लुप्तषष्ठ्यैव पातनस्य सम्बन्धप्रत्यायनात् । स्निग्धस्योप-गङ्गं पावित्र्यमित्यादौ स्निग्धस्य गङ्गासमीपस्य पवित्रत्वमित्याद्य-न्वये समीपादेः सम्बन्धः श्रुतयाप्यमादेशवशादेव षष्ठ्यानुभाव्यते इति न तत्रोपगङ्गाद्यव्ययीभावेऽव्याप्तिः अनुगङ्गेन कस्चारः उपगङ्गेषु पतचमुपकुम्भादानीतमित्यादावमादेशं विनापि श्रूयमाणाभिस्तृतीया सप्तम्यादिमुभिरव्ययीभावार्थस्य करणत्वाधिकरणत्वादिकं बोध्यत इति षष्ठीपर्य्यन्तानुसरणम् ।

बहुव्रीहिं लक्षयति ।

बहुव्रीहिः स्वगर्भार्थसम्बन्धित्वेन बोधकः ।

निरूढ़या लक्षणया स्वांशज्ञापकशब्दवान्।

समास इति प्रकृतं तथाच स्वांशस्य निरूढ़लक्षणया ज्ञापकेन शब्देन घटितः स्वगर्भस्य यादृशार्थस्य सम्बन्धित्वप्रकारेणान्वयबोधं प्रति समर्थः समासः स्वगर्भतादृशार्थसम्बन्धिबोधने बहुव्रीहिरित्यर्थः। आरूढ़वानरोवृक्ष इत्यत्रारूढ़ोवानरो यमिति व्युत्पत्त्या स्वकर्म्मकारोहणकर्तृवानरसम्बन्धित्वेन वृक्षं पीतपयस्कं पात्रमित्यत्र पीतं पयोयेन इति रीत्या स्वकरणकपानकर्म्मजलसम्बन्धित्वेन पात्रं पक्वतण्डुलश्चैत्र इत्यत्र पक्वस्तण्डुलोयेनेति दिशा स्वकर्तृकपाककर्म्म तण्डुलसम्बन्धित्वेन चैत्रं दत्तदक्षिणोद्विज इत्यत्र दत्ता दक्षिणा दस्मै इति क्रमेण स्वसम्प्रदानकदानकर्म्मदक्षिणासम्बन्धित्वेन द्विजं पतित पत्रस्तरुरित्यत्र पतितं पत्रं यस्मादिति विग्रहेण स्वापादानकपतनाश्रयपत्रसम्बन्धित्वेन तरुं चित्रगुरित्यत्र चित्रा गौर्यस्येति वाक्यानुसारेण चित्राभिन्नस्वगोसम्बन्धित्वेन चैत्रं रक्तपटः काय इत्यत्र रक्तः पटो यत्रेति व्युत्पत्त्या रक्ताभिन्नस्ववृत्तिपटसम्बन्धित्वेन कायम् एवं वाणच्छिन्नकरोनर इत्यादावपि वाणेन छिन्नः करोयेन यस्य वा इत्यादि विग्रहे वाणकरणकस्वकर्तृकच्छिदाकर्म्मकरसम्बन्धित्वादिना नरादिकं बहुव्रीहिर्बोधयतीति सर्व्वत्र स्वगर्भतत्तदर्थसम्बन्धित्वेन धर्म्मिणामवगमः। दक्षिणपूर्व्वा पूर्व्वोत्तरेत्यादिविदिग्बहुव्रीहिस्थले दक्षिणया पूर्व्वा यस्या इत्यादिविग्रहेण स्वपार्श्वस्थदक्षिणसहितपूर्व्वसम्बन्धित्वादिना आग्नेयीप्रभृतीनां विदिशां बोधः। अस्तिक्षीरा नास्तिक्षीरा गौरित्यादावप्यस्ति क्षीरं यस्या इत्यादिविग्रहेणास्तित्ववत्क्षीरसम्बन्धित्वादिप्रकारेण गवादेरवगतिः। इयांस्तु विशेषो यत्तत्रैकेषामस्तेऽस्तीत्यादिकं तिङन्तमन्येषां तत्प्रतिरूपकाव्ययमिति। उप समीपे दश येषामिति समीपगणितत्वार्थकषष्ठ्या विग्रहादुपदशाः शकुनय इत्यादौ स्वसमीपगणितदशसम्बन्धित्वेन नवानामेका-

दशानाञ्च पञ्चानामवगमस्तत्र दशशब्दस्य दशत्वलक्षणया स्वपर्य्याप्त संख्यासमीपगणितदशत्वसम्बन्धित्वेनैव नवादेर्बोध इति दुर्गप्रभृतयः। अधिका दश येषामित्यादिविग्रहे अधिकदशाः पुरुषा इत्यादावपि स्वपर्य्याप्तसंख्याधिक दशवृत्तिसंख्यापर्य्याप्त्यधिकरण दशसम्बन्धित्वेन नवादिपुंसां प्रत्ययः। द्वौ त्रयो वा येषां इत्यन्यतरार्थकवाशब्देन विग्रहे द्वित्राः पवित्राः परमित्यादौ द्वित्र्यन्यतरपर्य्याप्तस्वपर्य्याप्त संख्यासम्बन्धित्वेन द्वयोस्त्रयाणां वा पवित्राणां बोधः पटे घटे वा घटत्वमित्याद्यनुरोधेन वाकारस्यान्यतरार्थकतया व्युत्पाद्यत्वात् तस्य च वृत्तौ गतार्थत्वादश्रुतिः पञ्च षड्वा येषामित्यादिविग्रहात् पञ्चषाः पुरुषा इत्यादावप्युक्तरीत्यैवान्वयोद्रष्टव्यः। परे तु द्वौ वा त्रयोवा येषामित्यादिविग्रहे वाशब्दस्य संशयकोट्यर्थकतया द्वित्राइत्यादि बहुव्रीहिः स्वधर्म्मिकसंशयकोटितापन्नद्वित्रिसम्बन्धित्वेन द्विप्रभृति बोधकत्वमित्याहुः।

द्विस्त्रयोयेषामिति विग्रहे तु द्विशब्दस्य द्विगुणितवाचित्वेन द्विगुणितत्रिपर्य्याप्त वृत्तिसंख्यासम्बन्धित्वेन द्वित्रा रसा इत्यादौ षसामवगमः सुजन्तर्भावेणैव विग्रहस्य व्युत्पन्नत्वाच्च पञ्चकृत्वोदश येषामित्यर्थे पञ्चदशा इत्यादिको न समासः सर्व्वत्रोक्तबहुव्रीहौ राजादित्वादति चरमस्वरादेर्लोपः। स्वधनसम्बन्धी चैत्र इत्यादौ स्वधनस्य सम्बन्धीति व्युत्पत्त्या स्वगर्भार्थस्य सम्बन्धित्वेन चैत्रं बोधयन्नपि तत्पुरुषो न स्वांशस्य निरूढ़लक्षणया प्रत्यायकपदेन घटितः। तथा आधुनिकलक्षणया स्वपटबोधकेन पटपदेन गर्भितः पटसम्बन्धीत्यादिरपि। मातृभक्त इत्यादिकस्तु तत्पुरुषः स्वमातृत्वेन निरूढ़ लक्षणया बोधकेन विशेषितोऽपि न तत्सम्बन्धित्वेन बोधकः। नच द्वौ मुनी त्रयोवा मुनयोयस्येति वक्तृत्वार्थकषष्ठ्या विग्रहे स्ववक्तृ मुनिद्वयादिसम्बन्धित्वेन बोधके द्विमुनि त्रिमुनि वा ग्रन्थ इत्यादौ

द्विमुन्याद्यव्ययीभावे स्वमातृसम्बन्धित्वेन बोधके मातृसम्बन्धीत्यादि तत्पुरुषे चातिव्याप्तिरूदन्यत्वेनापि विशेषणीयत्वात्। इदमत्राव-धातव्यं चित्रगुरस्तीत्यादौ चित्राभिन्नस्वगोसम्बन्धिप्रभृतीनां प्रती-त्यर्थं न चित्रगुसमुदायस्य लक्षणा तस्य वाक्यत्वेन लक्षकत्वायोगात् वाक्ये लक्षणायाः प्रागेव परास्तत्वात्। नच चित्रपदमेव तत्र चित्राभिन्नस्वगोसम्बन्धिलक्षकं गोपदन्तु तादृशार्थे तात्पर्यग्राहकं लक्षणाया निरूढत्वसम्पादकं वेति वाच्यं चित्रपदस्य प्रथमान्तत्वा-भावेन तदर्थेऽस्तित्वाद्यन्वयस्यानुपपत्तेः प्रथमान्तपदोपस्थाप्यस्यैव भावनाविशेष्यत्वात्। अन्यथा राजपुरुषोऽस्तीत्यादावपि राज-न्यस्तित्वान्वयप्रसङ्गात् प्रकृत्यर्थस्यैव सुपः संख्याबोधकत्वव्युत्पत्तेः गोपदोत्तरप्रथमया चित्रपदोपस्थाप्ये चित्राभिन्नस्वगोसम्बन्धिन्येकत्व बोधनायोगाच्च। यत्तु गोपदमेव तादृशगोसम्बन्धिलक्षकं चित्र पदन्तु तत्र तात्पर्यादिग्राहकमिति मणिकारादुक्तं तन्न युक्तं पूर्व्व पदार्थसाकाङ्क्षस्यैव स्वार्थस्योपसर्ज्जनतायां गोपदस्य ह्रस्वविधानात् चित्रपदार्थेन समं तदर्थस्यान्वये तदनुपपत्तेरन्यथा गौरस्तीत्यादा-वपि चित्राभिन्नस्वगोसम्बन्धित्वेन गोपदस्य लक्षणायामुदन्तापत्तेः नच नामोत्तरवर्त्तिनएव गोपदस्य स्वार्थोपसर्ज्जनतायां ह्रस्वविधिरत्र गोपदेन लक्षणयोपस्थापिते स्वगोसम्बन्धिन्यभेदेन चित्रपदस्यान्वयः तत्र चित्रावोऽस्तीत्यादिकर्म्मधारयेऽपि गोपदस्य ह्रस्वप्रसङ्गात् वस्तुतः कृतपाकश्चैत्र इत्यादौ स्वकृतिविषयपाकसम्बन्धित्वादिना चैत्रा द्यवगमः पूर्व्वपदस्य परपदस्य वा लक्षणया न सम्भवद्भक्तिकस्तयो रशक्तत्वेन भाक्तत्वायोगात्। नच तत्र कादिवर्णस्य स्वरूपपरक्तघञादि प्रत्ययस्य वा स्वकृतिविषयपाकसम्बन्धिनि लक्षणा तन्निरूढत्वसम्पा-दकञ्च शब्दान्तरमिति साम्प्रतं कृतादिपदेभ्यः स्वार्थानुपस्थितावपि तदन्वयबोधप्रसङ्गात् घञादिमात्रस्य नामत्वाभावेन तन्मात्रोपस्था-

प्यार्थे सुवर्थान्वयायोगात् प्रकृत्यर्थावच्छिन्नस्यैव तदर्थस्य पदार्थान्तरे ऽन्वयबुद्धेर्व्युत्पन्नत्वाच्च तस्माच्चित्रगुरित्यत्र गोपदं स्वगोसम्बन्धिलक्षकं तदेकदेशे च गवि तादात्म्येन चित्रपदस्यान्वयः। नच गोधर्म्मिकान्वयबुद्धौ तद्धर्म्मिकवृत्तिज्ञानत्वेन हेतुत्वात् पदार्थैकदेशे गवि चित्रस्याचयोदुर्घटः चित्रगोऽस्तीत्यादौ गोसमानस्य च्छागस्यैकदेशे गवि चित्रस्यान्वयेन तादृशव्युत्पत्तेरावश्यकत्वादिति वाच्यं घटशून्यं चैत्रगेत्यादिवत्पुरुषे भेदेनैव चित्रगुप्रभृतिबहुव्रीहावप्यभेदेन पदार्थैकदेशधर्म्मिकान्वयबोधस्य व्युत्पत्तिवैचित्र्येण सम्भवात् फलानुरोधित्वात् कल्पनायाः प्राचैरपि सुन्दरराजपुरुष इत्यादावभेदेन सुन्दरादेः पदार्थैकदेशे राजन्यन्वयबुद्धेः स्वीकाराच्च। यत्तु गोपदं तत्र स्वकीयगोत्वेन सम्बन्धित्वेन च लक्षकमतश्चित्रस्य गोपदार्थस्यैव स्वकीये गवि तस्य च सम्बन्धिन्यन्वयान्न पदार्थैकदेशान्वयित्वमेकपदार्थयोश्च मिथोऽन्वयः क्रतिवर्त्तमानत्वयोरिव नाव्युत्पन्न इति तन्मन्दं तथा सति चित्रगुः पुरुषस्तस्याः सञ्चारोऽतिमनोहर इत्यादौ तदादेः स्वकीयगवादिपरामर्शकत्वापत्तेः पदार्थैकदेशस्यैव परामर्शकतायास्तदादावव्युत्पन्नत्वादिति। एवञ्चारूढवानरो वृक्ष इत्यादावपि रुहधातुना स्वकर्म्मकारोहण कर्त्तृत्वेन वानरपदेन च वानरसम्बन्धिन उपस्थापनादमीषामाकाङ्क्षादिधीसाचिव्यादेव स्वसमवायारोहणकर्त्तृभिन्नवानरसम्बन्धिनादिना वृक्षादेर्बोध इत्यास्तां विस्तरः।

ननु आरूढो वानरो यस्य वृक्षमित्यादिविग्रहादारूढवानरपदं स्वकीयवृत्त्यारूढवानरसम्बन्धित्वेन ग्रामादिकं बोधयदपि बहुव्रीहिः स्यादतस्तादृग्वाक्यस्य विग्रहत्वं खण्डयन्नाह।

अस्यैकं प्रथमान्तं सप्तम्यन्तैरितरैः सह।
यदा भेदसुबन्तेन साकाङ्क्षं नाम विग्रहः।

अस्य बहुव्रीहेर्घटकमेकं नाम प्रथमान्तं सप्तम्यन्तैरितरनामभिः

सह भेदार्थकसुबन्तयच्छब्देन साकाङ्क्षं विग्रहः कथ्यते यथोक्तवाक्ये तथा सुबन्तस्यापि यदस्तत्र तत्पदेनैव साकाङ्क्षत्वात् आरूढोवानरोयं इत्यादौ तु यच्छब्दो न भेदार्थकसुबन्त इति न तादृशस्यापि वाक्यस्यार्थे बहुव्रीहिः पतितस्य धनं यस्य दण्डाद्घटोयस्मादित्यादिकस्तु समानार्थकसुब्द्वयीमन्तर्भाव्य न विग्रहः सम्प्रदायविरोधात् एवं घटेन पटोयत्रेत्यादिकः सहाद्यर्थमन्तर्भाव्यापि सुबन्तैरिति तु सम्भवाभिप्रायं तेनाघटोदेश इत्यादिबहुव्रीहेर्न घटोयत्रेत्यादिविग्रहेण नञादेः सुबन्तत्वाभावेऽपि नाव्याप्तिः सपुत्र इत्यादौ तु सह पुत्रोयेनेत्यादिरेव विग्रहो न तु पुत्रेण सहेत्यादिरन्यपदार्थाप्राप्तेः सघटो देश इत्यादौ च सह घटोयेनेत्यादिविग्रहे सहार्थो वैशिष्ट्यं न तु सामानाधिकरण्यं घटे देशस्य तद्बाधात् । जीवत्पितृकइत्यादेस्तु जीवन् पिता यस्येति विग्रहो यस्य च पिता जीवन्नित्येवं जीवद्विधेयकान्वये निराकाङ्क्षोऽपि जीवदभिन्नः पिता यदीय इत्यन्वयएव साकाङ्क्षः । इदन्तु बोध्यं यत्र विग्रहवाक्ये सुबन्तयदः क्रियासाकाङ्क्षत्वसम्भवस्तत्र तदर्थान्वितक्रियागर्भितएवार्थे विना बाधकं बहुव्रीहिर्व्युत्पन्नः तेन गन्तव्योग्रामोयस्येति विग्रहे गन्तव्यग्रामकस्चैत्र इत्यादितः स्वकर्तृकगतिकर्मग्रामसम्बन्धित्वेनेव चैत्रादेरौत्सर्गिकोबोधः कदाचित्तु तात्पर्य्यादिवशाद्गन्तव्याभिन्नस्वकीयग्रामसम्बन्धित्वेन यत्र तु न यदस्तत्साकाङ्क्षत्वसम्भवस्तत्र विशेषविध्यसत्त्वे यन्नामार्थमुख्यविशेष्यकोविग्रहवाक्याद्बोधः सुबन्तयदर्थान्विततन्नामार्थगर्भित एवार्थेऽतएव धनी दासोयस्येत्यर्थे यदीयधनवान् दासस्तस्य धनिदासकोऽयमित्यादितो नावगमः किन्तु धनवत्स्वदाससम्बन्धिनएव चन्द्रस्चूडायां यस्येत्यादिकस्तु विग्रहोन यदीयस्चन्द्रस्चूडायामित्यर्थकः किन्तु यदीयचूडायां चन्द्रइत्यर्थकस्तादृशार्थ एव सप्तम्यन्तेनेन्द्वादेर्व्विशेषतोबहुव्रीहिविधानात्तेन चन्द्रचूडः शिव इत्यादौ स्वचूडावृत्तिचन्द्रसम्बन्धित्वेनैव

शिवस्यावगमो न तु चूडावृत्तिस्वकीयचन्द्रसम्बन्धित्वेन तस्य गणादेर्वा बोधः ससम्बन्धिकपदार्थस्य विशेषणत्वस्थले तु सुबन्तयदर्थान्वितेन तादृशपदस्यार्थेन गर्भितेऽपि अतएव चैत्रः पुत्रकृतोत्कर्ष इत्यादौ स्वपुत्रकृतोत्कर्षवानेव चैत्रादिः प्रतीयते नत्वन्यदीयपुत्रकृतोत्कर्षा-श्रयः ।

बहुव्रीहिं विभजते ।

तदतद्गुणसंविज्ञानौ द्वौ भेदौ तदादिमः ।
विग्रहस्य विशेष्यांशस्तद्विशेष्यकबोधकृत् ।

तद्गुणसंविज्ञानोऽतदद्गुणसंविज्ञानश्च बहुव्रीहेर्द्वौ भेदौ तत्र विग्रहवाक्यस्य विशेष्यविधया प्रत्याय्यो योऽर्थस्तद्विशेष्यकबोधकृद्बहु-व्रीहिः तयोरादिमस्तद्गुणसंविज्ञानस्तस्य स्वार्थगुणीभूतस्य सम्यग्वि-शेष्यविधया विज्ञानं यस्मादिति व्युत्पत्त्या सान्वयसंज्ञाकत्वात् तद्भिन्न-श्चातद्गुणसंविज्ञानश्चरम इत्यर्थाद्गम्यते घटस्वरूपः पदार्थः इत्यादि-तौ हि घटः स्वरूपं यस्येति विग्रहस्थले स्वस्वरूपाभिन्नघटसम्बन्धित्वेन घटाभिन्नस्वस्वरूपसम्बन्धित्वेन वा विग्रहविशेष्यं कलसमेव विशेष्य-विधया बोध्यते घटस्य स्वरूपं यस्मादिति विग्रहे च विग्रहस्य यद्वि-शेष्यं ततोऽन्यदेव स्वजन्यस्वरूपाभिन्नघटसम्बन्धित्वेन कुटादिर्गणा इत्यादिरपि कुट आदिर्यस्येति व्युत्पत्त्या कुटाभिन्नस्य स्वधर्म्मिक व्यवस्थाधर्म्मिणः सम्बन्धित्वेन धात्वन्तरमिव कुटमपि बोधयंस्तद्गुण संविज्ञानएव बहुव्रीहिः ।

प्राचां मतेन तद्गुणसंविज्ञानबहुव्रीहिमन्यथा निर्व्वक्ति ।

यः स्वार्थघटकार्थस्य स्वार्थान्वयिनि बोधने ।
अनुकूलो बहुव्रीहिः स तयोरथवादिमः ।

यो बहुव्रीहिः स्वार्थस्यान्वयिनि स्वार्थघटकस्याप्यर्थस्यान्वयबोधने समर्थः स तयोस्तद्गुणातद्गुणसंविज्ञानयोरादिमः सम्बकर्णामानय

ष्टारयोवं पश्येत्यादौ हि बहुव्रीहिर्लम्बकर्णसम्बन्धिनः स्वर्णीवाइति ष्टारसम्बन्धिनश्च स्वार्थस्यान्वयिनि कर्म्मत्वादौ स्वार्थघटकीभूतस्य तादृशकर्णहारादेरपि व्युत्पत्तिवैचित्र्यादन्वयबोधने समर्थ इत्येवं विध एव तद्गुणसंविज्ञानस्तद्भिन्नएव चार्थादतद्गुणसंविज्ञानः यथा दृष्टसागरमानय इत्यादाविति प्राचाम्मतम् ।

व्युत्पत्तिवैचित्र्यार्थमन्यथापि पुनर्व्विभजते ।

स्वान्तर्निविशद्वित्र्यादिनामभिर्विग्रहात् पुनः ।

बहुव्रीहिर्बहुविधोद्विपदत्रिपदादिकः ।

द्वित्रिचतुरादिभिरेव स्वघटकनामभिर्विग्रहवशात् द्विपदत्रिपद चतुष्पदादिकोबहुव्रीहिर्बोध्यः चित्रा गौर्यस्येति विग्रहाच्चित्रगुरित्यादौ द्विपदस्यैव जरती चित्रा गौर्यस्य महन्नीलमुत्पलं यत्रेत्यादि विग्रहाज्जरतीचित्रगुस्तत्रेमहन्नीलोत्पला सरिदित्यादौ त्रिपदस्यापि बहुव्रीहेरावश्यकत्वात् जरती चित्रगवी यस्य महन्नीलोत्पलं यत्रेति द्विपदविग्रहे जरतीशब्दे पुंवद्भावस्य महच्छब्दे चाकारस्य प्रसङ्गादुत्तरपदे तयोर्व्विधानात् समासान्तपदस्य चोत्तरपदत्वात् एकत्वद्वय मितिन्यायेन गवि चित्र जरतोरभेदानुभवस्यान्तरीत्या सम्पादयितु मशक्यत्वेन तदर्थमेव त्रिपदादिबहुव्रीहेरावश्यकत्वाच्च ।

द्वन्द्वं लक्षयति ।

यद्यदर्थकयन्नामव्यूहोयद्यत्प्रकारके ।

बोधे समर्थः स द्वन्द्वः समासस्तावदर्थकः ।

यद्यदर्थोपस्थापकस्य क्रमिकयादृशनामस्तोमस्य निरूप्यत्तत्तदर्थ प्रकारकान्वयबोधं प्रति तत्त्वेन समर्थस्तादृशनामनिवह एव तावदर्थकोद्वन्द्वसमासः । पाणिपादं वादय धरखदिरौ छिन्धीत्यादौ हि कर्म्मत्वाद्यंशे करचरणादिप्रकारकान्वयबोधं प्रत्यमादिधर्म्मिकः करचरणाद्युपस्थापकस्य पाणिपादादिक्रमिकनामस्तोमस्याव्यवहितोत्तरत्व

सम्बन्धेन निश्चयः कारणम् अतः पाणिपादादिसमुदायः करचरणादि तत्तदर्थे द्वन्द्वः। यत्तु पाणिपादमित्यादौ समाहारद्वन्द्वे सर्व्वत्रो त्तरपदे पाणिपादादिसाहित्ये लक्षणा अतएव नित्यं तत्रैकवचनं समाहारस्यैकत्वात् पदान्तरन्तु तादृशलक्षणायानिरूढ़त्वसम्पादकं तथाविधसाहित्यस्य च स्वाश्रयनिष्ठत्वादिसम्बन्धेनैव द्वितीयाद्यर्थ कर्म्मत्वादौ साकाङ्क्षत्वात् पाणिपादं वादयेत्यादेर्नायोग्यत्वमिति प्राच्यै रुक्तं तन्न युक्तं तुल्यवदेकक्रियान्वयित्वं बुद्धिविशेषविशेष्यत्वं वा पाणिपादयोः साहित्यं तस्य च नानात्वसम्भवेन तद्गतद्वित्वादिबोधार्थं समाहारद्वन्द्वादपि द्विवचनाद्यापत्तेर्दुर्व्वारत्वात्। साहित्यस्य द्वि बहुत्वेपि न समाहारद्वन्द्वस्य द्विवचनादिसाकाङ्क्षत्वं तादृशद्विगोरि- वेति चेत् तर्हि पाणिपादप्रभृतीनां नानात्वेऽपि न तदर्थकस्य द्वन्द्वस्य द्विवचनाद्याकाङ्क्षत्वमित्येव वक्तुमुचितं कृतं साहित्यभक्त्या हस्त्यश्वं धनमित्यादेरयोग्यताया दुर्व्वारतापाताच्च नामार्थयोर्भेदान्वयस्या व्युत्पन्नत्वेन हस्तिनामश्वानाञ्च साहित्यस्य स्वाश्रयत्वादिसम्बन्धेन धनादावन्वयायोगात् तादृशसाहित्ये धनादेरभेदविरहाच्च समा- हारपरिभाषा तु क्लीवलिङ्गत्वनित्यैकवचनत्वादिपदसंस्कारोपयोगि तयैवोपपन्ना न द्वन्द्वस्यार्थव्यवस्थापिका। एतेन धवखदिरावित्यादा- वितरेतरद्वन्द्वेऽप्युत्तरपदे धवखदिरसाहित्याश्रये लक्षणा अन्यथा द्विवचनादेः प्रकृत्यर्थतावच्छेदकवत्येव पर्य्याप्तिसम्बन्धेन स्वार्थद्वित्वा- द्यनुभावकत्वव्युत्पत्तेर्धवखदिरावित्यतोधवद्वयस्य खदिरद्वयस्य च प्रतीत्यापत्तेरितिमीमांसकानाम्मतमप्यपास्तं तुल्यवदेकक्रियान्वयित्वं धवखदिरविशेष्यकधीविशेष्यत्वं वा धवखदिरयोश्च साहित्यं तदाश्र- यश्च धवद्वयादिकमपीति तादृशसाहित्याश्रयलक्षकत्वपक्षेऽपि धव- खदिरावित्यतोधवद्वयादिबोधस्य दुर्व्वारतापत्तेः नच मिलितया विशे- ष्यकधवखदिरधर्म्मिकधीविशेष्यत्वमेव प्रकृते धवखदिरयोः साहित्यं

तच्च न धवद्वयादेरितिवाच्यं तादृशसाहित्यान्वयस्यानुभवेनास्पर्शनात् तस्माद्यत्र नानाधर्म्माणां प्रकृत्यर्थतावच्छेदकत्वं तत्र तत्तद्धर्म्मावच्छिन्ने समुदितएव पर्य्याप्तिसम्बन्धेन द्वित्वादिबोधने द्विवचनादिकं साकाङ्क्षं नतु तादृशैकधर्म्मावच्छिन्नं परित्यज्य तथाविधापरधर्म्मावच्छिन्ने यतोधवखदिरावित्यादितोधवयोः खदिरयोश्च बोधप्रसङ्गइति तत्त्वम् । घटघटेत्यादिकस्य घटकलसेत्यादिकस्य घटतट्टेत्यादिकस्य च क्रमिकनामस्तोमस्य निश्चयत्वेन घटादेरन्वयबोधं प्रत्यहेतुत्वमतोन तादृङ्नामनिवहो घटाद्यर्थे द्वन्द्वः अतएव समस्यमानपदार्थयोस्तत्त्वावच्छेदकयोर्वा यत्र मिथोभेदस्तत्रैव द्वन्द्वस्य साधुत्वसूचनाय चार्थे द्वन्द्व इति पाणिनिः प्राह । अतएव भेदगर्भसमुच्चयार्थकं च शब्दमन्तर्भाव्य धवश्चखदिरश्चेत्यादिकं विग्रहमस्य प्रयुञ्जते वृद्धाः समुपाददते च तत्र मिथोभेदप्राप्त्यर्थश्चकारद्वयं पीततत्पटयोस्तादात्म्यमित्यादौ तत्पटादेः पीताद्यभिन्नत्वेऽपि पीतत्वतत्पटत्वाद्योः पदार्थतावच्छेदकयोरस्त्येव भेदः सुबर्थस्तु द्वित्वं न तत्र प्रकृत्यर्थेऽन्वेति पर्य्याप्तिसम्बन्धेन पीततत्पटे तस्य बाधात् सुबर्थद्वित्वादेस्तादृशसम्बन्धेनैव प्रकृत्यर्थसाकाङ्क्षत्वात् परन्तु प्रकृत्यर्थतावच्छेदकयोः पीतत्वतत्पटत्वयोरेव व्युत्पत्तिवैचित्र्यात् अतएव द्व्यणुकारम्भकसंयोगनाशेभ्यः कार्य्यद्रव्यं नश्यतीति भाष्यस्य योग्यतासम्पत्तये सुबर्थैकत्वस्य कार्य्यद्रव्यत्वेऽन्वयमभिधित्सुनाचार्य्येण जात्यभिप्रायकमेकवचनमिति गुणकिरणावल्यामभिहितम् । अतएव च श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनोदेवृदेवरौ इत्यत्र च द्विवचनमहिम्ना स्वामिनोभ्रातरौ देवृदेवरोभयपदवाच्या इत्यर्थः सुभूत्यादिसिद्धः सङ्गच्छते । यदि च पटद्वयासत्त्वेऽपि भूतले पीतपटावित्यादिकः प्रयोगः स्यात् पीतत्वपटत्वोभयाश्रयस्य तत्र सत्त्वादेवं पीतपटयोरभेद इत्यादितः शुद्धपटत्वादेरबोधप्रसङ्गश्च तदंशे सुबर्थद्वित्वस्य प्रकारत्वादित्यादि

सूक्ष्ममीक्ष्यते तदा गोदौ ग्रामइत्यादाविव साधुत्वार्थमेव तत्र द्विवचन मिति वदन्ति । विद्यते विन्दति विनत्तीनामनिट् इत्यत्र विद्यत इत्यादिशब्दो न विदधातुत्वेनोपस्थापकः किन्तु सत्ताद्यर्थकत्वादृश-धातुत्वेनैव । मृगपाण्डरयोः पदार्थयोर्भेदेऽपि हरिणहरिणाविव्य प्रयोगात् समानशब्दयोर्द्वन्द्वप्रसक्तावेकशेषोव्युत्पत्तिसिद्धस्तेन हरिणा वित्यत्र लुप्तश्रुताभ्यामेव हरिणपदाभ्यामुपस्थितयोर्मृगपाण्डरयोर्बोधः हरी नमस्यावित्यत्राप्युक्तरीत्यैव हरिपदाभ्यां विष्णुचन्द्रयोरवगतिः अन्यथा हरिहरी नमस्यावित्यपि प्रयोगापत्तेः हरी च हरयश्चेति विग्रहस्थले यत्र हरय इत्यादितः समस्यमानपदार्थानामवान्तर संख्यागमस्तत्र तत्तत्संख्यावच्छिन्नस्वार्थलक्षकस्य लुप्तस्य हर्य्यादिपद-स्योत्तरत्वेन प्रतिसंहितमेव हर्य्यादिपदं तथाविधस्वार्थस्य लक्षणया बोधकं तदप्रतिसन्धाने तु श्रुतमेव हरिपदं विष्णुद्वयोः सिंहत्रयस्य चैकया लक्षणया शक्तिभ्रान्त्यैव वा नच विग्रहस्थसुबर्थस्य द्वित्वादेः समासाप्रतिपाद्यत्वनियमात्तथाविधद्वित्वत्रित्वान्तर्भावेण द्वन्द्वस्यैवा साधुत्वादुक्तक्रमेणैकशेषोन युक्तः शलाकापरि हस्त्यश्वमित्यादौ व्यभि चारेणोक्तनियमस्यासत्त्वात् एकत्वे चैकत्वानि चेतिविग्रहे च एक-त्वानीत्येकशेषस्य गुणकिरणावल्यामाचार्य्यैरभिहितत्वाच्च हंसश्चहंसी च इत्यर्थे हंसहंस्यावित्यप्रयोगात् तत्रापि पुंसा स्त्रियाः साहृप्ये इत्य-नुशिष्टेर्हंसीपदस्य लोपे हंसावित्यत्र लुप्तमेव हंसीपदमनुसन्धाय स्त्री पुंसयोर्बोधः तल्लोपमजानतस्तु हंसपदे स्त्रीहंसत्वपुरुषहंसत्वाभ्यां विभिन्नरूपाभ्यामेकस्याः शक्तेर्लक्षणाया वा ग्रहादेव । यत्तु तत्र हंस पदमेव लक्षणया हंसीत्वेन शक्त्या च हंसत्वेन बोधकं सुबर्थस्तु पुं स्त्वं हंसएवान्वेति नतु हंस्यामयोग्यत्वात् इति मतं तन्न तथासति स्त्री हंसत्वहंसत्वयोः पदार्थतावच्छेदकयोर्मिथोभेदविरहेण द्वन्द्वाप्रसक्ता वेकशेषस्य दुष्करत्वापत्तेः अन्यथा घटतद्घटावित्यपि द्वन्द्वप्रसक्तात्

हंसी च हंसाश्चेति विग्रहेपि हंसा इत्यतोहंसद्वयहंसत्रययोः प्रागुक्त रीत्यावगमः दुन्दुभी च दुन्दुभिश्चेति विग्रहे दुन्दुभी सुन्दराविल्य-त्रात्तभेर्य्योर्बोधनस्थले पुंलिङ्गस्यैव दुन्दुभिशब्दस्य शिष्टतया तद्वि-शेषणत्वादेव सुन्दरादेः पुंस्त्वं युवा च युवतिश्च इत्यर्थे युवानावित्य-त्राप्युक्तरीत्यैव युवतीयौवनवतोर्बोधः वरटाहंसौ लक्ष्मणासारसावि-त्यादौ तु स्त्रीपुंसयोर्द्वन्द्वेऽपि पदसाहृप्यविरहान्नैकशेषः दम्पत्यर्चन प्रकरणे ब्राह्मणावानयेदित्यत्रापि ब्राह्मणश्च ब्राह्मणी च इतिविग्रहे प्रागुक्तदिशा ब्राह्मणभार्य्यापत्योरवगमः। एकश्चैका चेत्यत्र एकौ द्वौच द्वे चेत्यत्र द्वौ उभौ चोभे चेत्यत्र उभौ त्रयश्च तिस्रश्च इत्यत्र च विग्रहे त्रयइत्यादिरेकशेष इष्यतएव। ग्राम्यानेकशफेष्वतरुणेषु स्त्रीपुंसयोर्बहुत्वमन्तर्भाव्य सारूप्येण द्वन्द्वस्थले तु पुंस एव लुक् तेन मेष्यश्च मेषाश्चेत्यर्थे मेष्य इत्यत्रापि लुप्तं बहुमेषाणां लक्षकं मेषपदं प्रतिसन्दधतएव बहुमेषाणामनेकमेषीणाञ्चावगमः। एवं महिषाश्च महिष्यश्चेत्यर्थे महिष्यइत्यत्रापि महिषपदं बहूनां महिषाणां मृगाश्च मृग्यश्चेत्यर्थे मृगाइत्यत्र तु मृगादेरग्राम्यत्वान्न पुंसोलुक् परन्तु स्त्रियाः तथा गर्द्दभाश्च गर्द्दभ्यश्चेत्यर्थे गर्द्दभा इत्यत्रापि खराणा मेकशफत्वात् वर्करास्च वर्कर्य्यश्च इत्यर्थे वर्करा इत्यत्रापि तरुणार्थक-त्वात् स्वसा च भ्राता चेत्यर्थे भ्रातरावित्यत्र पुत्रश्च दुहिता चेत्यर्थे पुत्रावित्यत्र च विरूपैकशेषेऽपि स्वसृपदं दुहितृपदञ्च लुप्तं प्रति सन्धायैव भ्रातृभगिन्योः पुत्रकन्ययोश्चावगमः। ज्येष्ठपुत्रदुहित्रोश्च ज्यैष्ठे मासि न कारयेदित्यादिकस्तु प्रयोगः परिचिन्तनीयः। स च मैत्रश्चेतिविग्रहे त्यदादिना तदन्यस्य द्वन्द्वे लुकि तावित्यत्रापि लुप्तं मैत्रादिपदमनुसन्दधतएव मैत्राद्यवगमः स च त्वञ्चेत्यादिविग्रहेण किं पदान्यत्यदादिद्वयगर्भद्वन्द्वे तु पूर्व्वस्यैव स्वानुत्तरस्यैव वा त्यदादे-र्लुकि युवामित्यादावप्युक्तक्रमेणैव तदर्थयुष्मदर्थयोर्बोधः स च स

चैत्रश्चापि विभिन्नार्थयोर्विग्रहे स्वपूर्व्वागणितोपि तदादिः स्वोत्तरा पठितएव तत्तन्मानुषतुल्योऽसौ यद्यद्विद्यातिनिर्म्मलेत्यादौ तु न त्यदादिगणेन द्वन्द्वः परन्तु तदाद्यव्ययेन यथा तत्तत्रामसभूतभीतय इत्यादौ यत्तदादिव्यतिरिक्तानामेवाव्ययानां सरूपैकशेषस्य व्युत्पन्न-त्वात् प्रयोगानुरोधित्वात् कल्पनायाः कश्च त्वञ्चेत्यादिविग्रहेण किमा तादृशद्वन्द्वे तु तदन्तस्यैव त्यदादे र्लुकि कावित्यादिक एव प्रयोगः चैत्रस्य पितराविन्यत्रापि विरूपैकशेषे लुप्तस्य मातृपदस्य स्मरणा-न्मातुरवगमः तदस्मरतस्तु पितृपदे जनकशरीरत्वेन लक्षणया माता पित्रोरवगतिरिति प्राञ्चः। कौमारास्तु मात्रा पितुर्द्वन्द्वे माता पितृभ्यां मातरपितराभ्यामिति प्रयोगद्वयोदर्शनाच्चैत्रस्य पितरा-वित्यत्र नैकशेषः परन्तु पुष्पवन्तादिपदवन्मातृत्वपितृत्वाभ्यां विभिन्न रूपाभ्यामेकशक्तिमदेव नियतद्विवचनाकाङ्क्षं पितृपदं प्रकृत्यन्तरम् एवं श्वश्रूश्च श्वशुरश्चेत्यर्थे श्वशुरावित्यत्र श्वशुरपदमपि श्वश्र्वा श्वशु-रस्य द्वन्द्वे श्वश्रूश्वशुरावित्येव प्रयोगादित्याहुः।

द्वन्द्वं विभजते।

द्वौ भेदावस्य शास्त्रोक्तौ समाहारेतरेतरौ।
एकान्यवचनाकाङ्क्षाहानोपादानतश्च तौ।

अस्य द्वन्द्वस्य द्वौ भेदौ समाहार इतरेतरश्च शास्त्रसिद्धौ तत्रैक वचनान्यसुवाकाङ्क्षाविहीनः समाहारः तथाविधसुवाकाङ्क्षश्चेतरेतरः पाणिपादं हस्त्यश्वमित्यादितो हि करचरणादीनां बहूनामप्यवगता-वेकवचनमेव प्रमाणं धवखदिरावित्यादौ द्विवचनादिः पदिस्कन्दि-खिदेर्दादित्यादौ तु पदिस्कन्दिभ्यां सहितः खिदिरिति विगृह्य मध्य पदलोपी कर्म्मधारयो यथा अथातप्रतिथ्यामेरितिमणिग्रन्थादौ।

उपपदसमासं लक्षयति।

यदुत्तरपदं नामाग्नतरं यदबोधकम्।

धातुत्थकृदन्तमुपपदसमासः स तदन्तकः ।

धातुत्थकृद्भ्यां निष्पन्नं यस्योत्तरपदं शब्दान्तरानुत्तरं सत् यादृशार्थस्य बोधं प्रत्यसमर्थं तादृशार्थकान्त्यपदकः समासः उपपदसंज्ञकः कुम्भकारः क्षीरपायीत्यादिके तूपपदसमासे धातुकृद्भ्यां निष्पन्नं कर्त्राद्यर्थकं कारादिपदं पदान्तरानुत्तरं सन्न कर्त्रादेरन्वयबोधक्षमं चन्द्रनिभमित्यादौ तु तत्पुरुषे निभादिपदं सदृशाद्यर्थे तादृशमपि न धातुकृद्भ्यां निष्पन्नमिति तद्व्युदासः ।

विभजते ।

कारकैकोपपदकः षड्विधोऽयमिति भ्रमः ।

कर्म्मकर्त्राद्युपपदभेदाद्बहुविधस्त्वसौ ।

कारकेषूत्तानशयः पूर्व्वसर इत्यादावुत्तानादिः कर्त्ता कुम्भकारः सौवीरपायीत्यादौ कर्म्म कच्छपः पार्श्वशय इत्यादौ करणं उखास्रत् वङ्क्रभ्रट् इत्यादावपादानं खशयः कुरुचरः इत्यादावधिकरणमुपपदं सम्प्रदानन्तु न कुत्रापि दृश्यते दृश्यते च ब्रह्मभूयमित्यादौ कारकभिन्नेनाप्युपपदेन समास इत्यसावनेकविधएव नतु कारकमात्रोपपदकत्वात् षड्विधएव न्यूनत्वाधिकत्वाभ्यां विभागव्याघातादिति सूर्य्यम्पश्याप्युक्तसमासः परन्त्वव्ययपदस्येव नञा समस्तस्यैव तस्य स्वार्थबोधने व्युत्पन्नत्वान्न केवलस्य तस्य प्रयोगः ।

यौगिकेषु क्रमप्राप्तं तद्धितान्तं नाम लक्षयति ।

यन्नाम तद्धितं यच्च यत्क्रमं सद्यदर्थकम् ।

तद्द्वयं तत्क्रमं तत्र तद्धितान्तं निगद्यते ।

यद्यपि नामोत्तरतद्धितत्वं तद्धितोत्तरनामत्वं वा प्रत्येकं बहुगुडो द्राक्षेत्यादौ दाक्षिरित्यादौ चाव्यापकमेव तद्धितान्ते नाम्नि तथापि यादृशं नाम यच्च तद्धितं यादृशानुपूर्व्व्यवच्छिन्नं सद्यादृशार्थस्यान्वयबोधे समर्थं तादृशानुपूर्व्व्यवच्छिन्नं तद्द्वयमपि तादृशार्थे तद्धितान्तं

नामेत्यर्थः पचतितरामित्यादिकन्तु नामैव न प्रागेव तु तद्धितान्त-तस्यापि लक्ष्यत्वे यः शब्दस्तद्धितं यच्चेतिपठनीयं टावादेरपि तद्धित-त्वोपगमादजाब्राह्मणीत्यादेर्नासंग्रह इति वदन्ति ।

कृदन्तं नाम लक्षयति ।

यद्धात्वर्थान्वितस्वार्थधीकृत् कृत्याद्दृशं भवेत् ।

तद्धातूत्तरगं तत् कृत् कृदन्तं नाम तादृशम् ।

यद्धात्वर्थान्वितस्वार्थान्वयबोधं प्रति यादृशानुपूर्व्व्यवच्छिन्नस्य यत्कृतो निश्चयः कारणं तद्धातूत्तरगं तत् कृदेव तादृशानुपूर्व्व्यव-च्छिन्नं सत् कृदन्तं नाम यथा पाचकपाठ्यमानादि तद्धि धात्वर्थनान्वि-तस्य स्वार्थकर्त्रादेः कर्म्मत्वादावन्वयबोधं प्रति द्वितीयाद्यंशे तादृ-शानुपूर्व्वीकत्वेन निश्चीयमानं हेतुः चैत्रेण ग्रामस्य गन्तव्यमित्यादौ धात्वर्थे स्वार्थमिष्टसाधनत्वादिकं बोधयदपि तव्यादिकं धात्वर्थनिष्ठ विषयतानिरूपितस्वार्थविषयताकबोधजनकत्वेन धात्वर्थान्वितस्वार्थक-मेव भावकृतामपि स्वरूपार्थकत्वं व्युत्पादितमेव ।

तदेवं रूढ़योगाद्यर्थभेदेन नाम्नश्चातुर्विध्यमुक्तं सम्प्रति शब्द संस्कारानुगुणलिङ्गभेदेन त्रैविध्यमाह ।

स्त्रीलिङ्गमपि पुंलिङ्गं क्लीबलिङ्गमिति त्रिधा ।

शब्दसंस्कारसिद्ध्यर्थं भाषया नाम भिद्यते ।

स्त्रीलिङ्गं पुंलिङ्गं नपुंसकलिङ्गमित्यपि त्रिधा नाम भिद्यते तत्र स्त्रीलिङ्गत्वादिकं न स्त्रीत्वादिवाचकत्वं तटः तटी तटमित्यादौ प्रकृत्यर्थस्य तटादेः स्त्रीत्वाद्यवगतावयोग्यतापत्तेः । परन्तु स्त्रीलिङ्ग-त्वादिना परिभाषितत्वमात्रं परिभाषायाः प्रयोजनञ्चेह पदसंस्कारः सोपि तट इत्यादौ पुंस्त्वेन सुबादिसद्भावः तटीत्यादौ स्त्रीत्वेन ङीवादि प्रत्ययः तटमित्यादौ क्लीबत्वेन सुबादेर्लुगादिरिति दुन्दुभी सुवर्ण इत्यादौ तु शब्दसंस्कारस्यैव फलमर्थविशेषस्य लाभोनह्ययं दुन्दुभि

रिदं सुवर्णमित्यादितोऽत्यस्याशीतिरक्तिकापरिमितस्वर्णादेस्थावगमः। यत्र च सम्पदादिशब्दे स्त्रीलिङ्गत्वादिप्रयुक्तोनास्ति संस्कारस्य विशेष स्तत्राप्यभेदेन तत्साकाङ्क्षे शोभनादिपदे एवास्ति विशेषणपदानां विशेष्यपदलिङ्गग्राहित्वस्य विनाबाधकं नियमात्। यत्तु तटादिकं द्रव्यमिव तद्गतं स्त्रीत्वादिकं पदार्थान्तरमपि तटादिपदस्यार्थः प्रत्ययानान्तु तद्व्यञ्जकतामात्रमिति वैयाकरणैरुक्तं तन्न युक्तं तटादिपदेभ्यस्तटत्वादिनेव धर्म्मान्तरेण स्त्रीत्वादिना तटादेरननुभवेन तादृश पदार्थान्तरे प्रमाणाभावात् न विप्रा वेदमुच्चरेदित्यादौ च टावादिना प्रत्ययेनैव स्वार्थस्य योन्यादिमत्वलक्षणस्त्रीत्वस्य प्रकृत्यर्थेऽनुभावनात् न प्राणि प्राप्नुयाद्दायं न विप्रोऽध्ययनं त्यजेत् इत्यादावपि लुप्तालुप्ताभ्यां सुभ्यामेवोपस्थितं विलक्षणसंस्थानरूपं नपुंसकत्वं प्राणिनि पुंस्त्वञ्च विप्रेऽनुभूयते न चेदेवं दधि भुञ्जीत इत्यादौ कर्म्मत्वादेरनुभवार्थं तस्यापि प्रकृत्यर्थता किन्न स्यात् स्यादेवेति चेत् संख्याया अपि स्यादिति किन्न रोचयेः रोचयेस्तदपि प्रत्ययानान्तत्तदर्थव्यञ्जकता मात्रत्वादिति तु रिक्तं वचः प्रत्ययानामन्वयव्यतिरेकाभ्यां संख्यादि वाचकत्वव्यवस्थितेः अन्यथा प्रत्ययानामेव तत्तद्विशिष्टार्थबोधकतायां प्रकृतीनामभिव्यञ्जकतामात्रस्य सुवचत्वात् अस्तु वा न प्राणि प्राप्नुयाद्दायमित्यादौ प्राण्यादिमात्रबोधकस्य प्राण्यादिपदस्यैव लक्षणया नपुंसकप्राण्यादिपरतेत्यास्तां विस्तरः।

फणिभाष्याद्युक्तं नाम्नः पञ्चविधत्वमुपपादयति।

एकैकेन तथा द्वाभ्यां वचनैस्त्रिभिरेव च।
साकाङ्क्षत्वप्रयुक्तन्तु नाम पञ्चविधं स्मृतम्।

सुपां मध्ये एकवचनमात्रसाकाङ्क्षत्वेन द्विवचनमात्रसाकाङ्क्षत्वेन बहुवचनमात्रसाकाङ्क्षत्वेन द्विवचनमात्रनिराकाङ्क्षत्वेन वचनत्रयसाकाङ्क्षत्वेन च नाम्नः पञ्चविधत्वव्यपदेशः एकादिकं विंशत्यादिकं सार्थक

भावक्तदन्तं भूयमानभवितव्यादिकं क्रियाविशेषणार्थकं समाहार द्विगुद्वन्द्वावन्योन्यपरस्परादिकञ्च सुपामेकवचनमात्रेण साकाङ्क्षं भवितव्यानाम्भवन्ति दारागौत्यादौ च भवितव्यानामित्यस्य प्राप्तव्याना मित्यर्थः। उभपदं द्विपदं पुष्पवन्तपदं खर्वैद्येऽश्विनपदं भूस्वर्गयो रोदस्यादिपदं ग्रामे गोदपदञ्च द्विवचनमात्रेण प्राणप्रभृतिकं त्रि चतुरादिकपदं कतिपदञ्च बहुवचनेनैव उभयपदमेकवचनबहुवचनाभ्यामेव घटपटादिकं तु त्रिभिरपि वचनैः। यथा चैतत्तथाग्रे प्रतिपादयिष्यामः।

नामधातुभेदात् प्रकृतेर्द्वैविध्यमुक्तं तत्र सामान्यतोविशेषतश्च नाम निरुच्यावसरसङ्गत्या धातुं निरूपयति।

योयत्स्वार्थस्योत्तरस्थतज्जर्थे बोधनक्षमः।

स तादृशार्थकः शब्दोधातुस्त्रिविध ईरितः।

यः शब्दः स्वोत्तरत्वचः प्रक्येऽर्थे स्वोपस्थाप्यस्य यादृशार्थस्यान्वयबोधं प्रति समर्थः स तादृशार्थे धातुरुच्यते। पचपिपठ्यादयोहि शब्दाः पक्तृपिपठिषादिनामनिविशाः स्वोत्तरत्वजर्थे कर्त्रादौ स्वोपस्थाप्यानां पचनपाकेच्छादीनामन्वयधियं प्रति प्रभवो नत्वन्ये घटाद्याः। सचायं मूलधातुः सौत्रः प्रत्ययान्तश्चेति त्रिविधः।

सुबर्थेऽपि धात्वर्थस्यान्वयवादिनाम्मतेन धातुं लक्षयति।

यः सुबर्थे निजार्थस्य स्वान्ते क्वचिन्तनं विना।

यादृशस्यान्वयाहेतुः स वा धातुस्तदर्थकः।

यः शब्दः स्वान्ते क्वचिन्तनं विना सुबर्थे यादृशस्य निजार्थस्यान्वयधियं प्रत्यसमर्थः स एव तादृशार्थकोधातुः पाकं कुरु सम्पदं पश्येत्यादौ हि पचादिकोधातुः स्वोत्तरस्य भावक्तः प्रतिसन्धानदशायामेव सुबर्थकर्मत्वादौ स्वार्थस्य पचनादेरन्वयबोधमाधत्ते न

न्यथा स्वरूपस्य घञाद्यप्रकृतित्वेन तत्र धात्वर्थस्यान्वयायोगादिति प्राञ्चः।

धातोर्विधात्रयं लक्षयति।

मूलधातुर्गणोक्तोऽसौ सौत्रः सूत्रैकदर्शितः।
योगलभ्यार्थकोधातुः प्रत्ययान्तः प्रकीर्त्तितः।

गणोक्तोगणपठितः पचभूप्रभृतिः सौत्रः सूत्रमात्रोपात्तः स्का म्भुप्रभृतिकः योगलभ्यार्थकः स्वावयवलभ्यार्थस्यबोधकः पाचिपिप-क्षादिः तितिक्षादिरपि समर्थस्वरूपाद्यन्तर्भावेण यौगिकएव हिन्दो-लान्दोलादेर्लौकिकस्यापि सत्वाच्चतुर्व्विधएव धातुरिति वोपदेवः। सौत्रपदं यौगिकगणोक्ताभ्यामन्यपरमतोलौकिकस्य नाधिक्यमित्यन्ये।

परस्मैपदित्वादिभेदेनापि त्रैविध्यं सम्भवत्यतस्तदपि निर्व्वक्ति।

योयत्पदार्थकर्तृत्वे यादृक्स्वार्थस्य बोधकः।
स तत्पदी भवेद्धातुस्तादृशस्वार्थबोधने।

यो धातुः स्वोपस्थाप्यस्य यादृशार्थस्य यत्पदोपस्थाप्ये कर्तृत्वे-ऽन्वयबोधं प्रति समर्थः स धातुस्तत्पदी गमभूप्रभृतयः स्वार्थस्य गत्युत्पत्तिप्रभृतेर्मुख्ये गौणे वा परस्मैपदार्थएव कर्तृत्वेऽन्वयं प्रति प्रभवः सत्यपि योग्यतादिग्रहे चैत्रोगच्छति भवति इत्यादितइव गच्छते भवते प्रभृतिभ्योगतिकर्तृत्वाद्यप्रतीतेः सङ्गच्छते भवते इत्या-दितः सङ्गतिप्राप्त्यादिकर्तृत्वावगमात्तादृशार्थे आत्मनेपदिनएव ते यजति करोतीत्यादित इव यजते कुरुते इत्यादितोऽपि यागादिकर्तृ त्वस्यावगतेर्यागाद्यर्थे यजिकृञादिरुभयपदी। तदुक्तमभियुक्तैः पदद्वयेन साकाङ्क्षाः स्वरित्ञित्ण्यन्तधातवः। सनन्ताः प्रायशो मूलधातुवत् पदिनोमताः। ङ्यङ् यङन्ताङानुबन्धा ऋचाद्याश्चात्मने-पदेः। परे परस्मैपदिनोनित्यं कर्त्तरि धातवः। स्वरितः समाहार स्वरानुबन्धा यजपचाद्याः ञितोञानुबन्धाः कृञ्सुञादयोण्यन्ताश्च

भाविप्रभृतयः कर्तृत्ववाचिना पदद्वयेन समं साकाङ्क्षाः सनन्तास्तु स्वप्रकृतिपदभाजस्तेन बुभूषते विवर्द्धिषति इत्यादिकोन प्रयोगः। रुचद्दृशोः परस्मैपदित्वेऽपि सनन्तयोस्तयो रात्मनेपदित्वमेव अत उक्तं प्रायश इति क्यङन्ता हंसायाद्याः यङन्ता बोभूयाद्याः ङानुबन्धाः शीङाद्याः रुचादिगणश्च कर्तृत्ववाचिनात्मनेपदेनैव साकाङ्क्षाः परे पुनर्धातवः परस्मैपदेनैवेत्यर्थः।

प्रत्ययोऽसौ चतुर्व्विधइति यदुक्तं तस्य चतस्रो विधा दर्शयति।

विभक्तिश्चैव धात्वंशस्तद्धितः कृदितिक्रमात्।
चतुर्धा प्रत्ययः प्रोक्तः कादिभिः पञ्चधाथवा।

धात्वंशः सन्क्यजादिः। वत्सकोऽश्वकइत्यादौ दयाकुत्साद्यर्थकस्य कादेः अजा ब्राह्मणी श्वश्रूरित्यादौ स्त्रीत्वाद्यर्थकटाबादेश्च तद्धितत्वोपगमे चतुर्विधएव प्रत्ययस्तदनुपगमे तु पञ्चविध एव अतएवाश्वकभार्य्यइत्यादौ पुंवद्भावस्तद्धितकृतोरेव कोपधस्य तन्निषेधादेवमौपगवइत्यादाविव पट्वीत्यादौ नौत्वादिरिति कालापाः।

प्रत्ययेषु विभक्तिं लक्षयति विभजते च।

संख्यात्वव्याप्यसामान्यैः शक्तिमान् प्रत्ययस्तु यः।
सा विभक्तिर्द्विधा प्रोक्ता सुप्तिङौ चेति भेदतः।

संख्यात्वावान्तरजात्यवच्छिन्नशक्तिमान् यः प्रत्ययः सा विभक्तिः सुप्तिङइति भेदतो द्विविधा एकत्वत्वाद्यवच्छिन्नशक्तिमानपि तदादिर्न प्रत्ययः प्रत्ययश्च त्रजादिर्न संख्याशक्त इति तयोर्व्युदासः।

यद्याख्यातमात्रस्य तदेकवचनस्य वा न संख्याशक्तत्वे प्रमाणं तदान्यथा निर्व्वक्ति।

प्रकृत्यर्थस्य यः स्वार्थं विधेयत्वेन बोधने।
समर्थः सोऽथवा शब्दो विभक्तित्वेन गीयते।

यः शब्दः स्वार्थं धर्म्मिणि स्वप्रकृत्यर्थविधेयकान्वयबोधं प्रति

समर्थः स वा विभक्तिरित्युच्यते घटमित्यादौ सुपा कर्म्मत्वं घटीय मित्यादिरिव पचतीत्यादौ तिङापि कृतिः पाकीयेत्यादिरुद्देश्यविधेय भावेन स्वार्थे प्रकृत्यर्थस्य धीरुत्पाद्यते नतु प्रत्ययान्तरेण तस्य प्रकृत्यर्थावच्छिन्नस्वार्थविषयताशालिन्येव शाब्दे सामर्थ्यात् नहि दाक्षि रित्यादितोऽपत्यं दक्षस्येत्यादिरुद्देश्यविधेयभावेन बोधः कस्यापि किन्तु दक्षापत्यत्वाद्यवच्छिन्ने धर्म्मिण्येव सुबर्थैकत्वादेः अन्यथा अपत्यं दक्षस्य चैत्रस्य चेत्यादाविव दाक्षिश्चैत्रस्य चेत्यादावप्यपत्यादिधर्म्मिकस्य दक्षचैत्राद्योर्विधेयभावेन युगपदन्वयस्य दुर्व्वारतापत्तेः प्रथमाप्यभेदादौ स्वार्थे प्रकृत्यर्थस्य विधेयभावेन धियं जनयत्येव न चेदेवं नीलोघट इत्यादौ नीलाद्यभेदरूपस्यावान्तरवाक्यार्थस्य पूर्व्वमप्रतीतौ महावाक्यार्थबोधस्य तत्पूर्व्वकत्वव्याप्यापत्तिरतोन तस्या मव्याप्तिः ।

विभक्त्योः सुपं लक्षयति विभजते च ।

प्रकृत्यर्थे स्वार्थसंख्यान्वयधीहेतवः सुपः ।

प्रथमादिप्रभेदेन ताश्च सप्तविधा मताः ।

प्रकृत्यर्थधर्म्मिकस्वार्थसंख्यान्वयबोधिका विभक्तयः सुप उच्यन्ते ताः प्रथमाद्वितीयादिभेदेन सप्तविधाः तिङस्तु स्वार्थभावनाद्यन्वयिन्येव स्वार्थसंख्यामवबोधयन्ति नतु स्वप्रकृत्यर्थे इति तासां व्युदासः ।

सुप्सु प्रथमां लक्षयति ।

तादात्म्यभिन्ने स्वार्थे या प्रकृत्यर्थस्य बोधने ।

न समर्था विभक्तिः सा प्रथमा परिकीर्त्त्यते ।

या विभक्तिस्तादात्म्यभिन्नस्वार्थधर्म्मिकप्रकृत्यर्थबोधं प्रति न स्वरूपयोग्या सा प्रथमा द्वितीयादयः स्वार्थे कर्म्मत्वादौ प्रकृत्यर्थ स्यान्वयबोधं प्रति समर्थाः प्रथमा तु विशेषणपदोत्तरस्था तादृशि तादात्म्ये तथान्वयं बोधयन्त्यपि न तादात्म्यभिन्ने तथा प्रथमाया

द्विवचनम् औ द्वितीयायाः पुनः औट् इति न तत्राव्याप्तिशङ्कापीति वदन्ति ।

यदि स्वर्गकामोयजेतेत्यादौ प्रथमोपस्थाप्यस्य नियोज्यत्वस्य यागादावाधेयत्वस्य वा विध्यर्थकृतिसाध्यत्वादिघटकत्वाद्यादौ प्रकृत्यर्थावच्छिन्नस्यान्वयः प्रामाणिकः यदि वा धृतिः स्वाहेत्यादौ चतुर्थ्याः स्थाने न प्रथमा परन्तु प्रथमैवोद्देश्यत्वबोधिका तदा तस्यामव्याप्तिरसम्भवोवा स्यादतोऽन्यथा निर्व्वक्ति ।

धात्वर्थेन विशिष्टस्य तिङर्थस्यान्वयं प्रति ।
यदन्तनामबोध्यत्वं तत्त्वं सुप् साथवा तथा ।

धात्वर्थावच्छिन्नतिङर्थस्यान्वयबोधं प्रति यदन्तनामोपस्थाप्यत्वं तत्त्वं तादृशी सुप् वा प्रथमा यजेतेत्यादौ तिङर्थस्येष्टसाधनत्वादेर्न प्रकृत्यर्थावच्छिन्नस्य यागादावन्वयः किन्तु केवलस्य अतस्तस्य प्रथमान्तनामानुपस्थाप्यत्वेऽपि न क्षतिः चैत्रमैत्रौ स्त इत्यादौ च द्वन्द्वेनैव प्रथमान्तनाम्ना चैत्रस्योपस्थापनान्न व्यभिचारः ।

द्वितीयादिविभक्तिषट्कं संक्षेपार्थमेकग्रन्थेन निर्व्वक्ति ।

धातुभेदानुपादाय तदर्थे कर्म्मतादिकान् ।
बोधयन्त्यो द्वितीयाद्या निर्व्वक्तव्या विभक्तयः ।

धातुभेदाः पचाद्याः तथाच तिवन्तपचधातूपस्थाप्यपाकधर्म्मिककर्म्मत्वानुभवानुकूलसुप्सजातीयत्वं द्वितीयायालक्षणं चोरस्य छिनत्तीत्यत्र तिबन्तधात्वर्थे कर्म्मतादिप्रतिपादिकापि षष्ठी न पाके तण्डुलस्य पाचकइत्यादौ पाके तादृश्यपि न तिबन्तपच्यर्थे ग्रामं गच्छतीत्यादावमादेः पाकादौ कर्म्मत्वाद्यननुभावकत्वेऽपि तदनुभावक सजातीयत्वान्नाव्याप्तिः काष्ठेन पचतीत्यत्र तृतीया करणत्वस्यैव बोधिका नतु कर्म्मत्वस्य पटौ स्त इत्यादौ द्विवचनस्यौकारस्य प्रथमात्वमिव द्वितीयात्वं न क्षतिकरम् उपधेयसङ्करेऽप्युपाधेरसाङ्कर्य्यात्

प्रकृत्यर्थमुख्यविशेष्यकान्वयबोधानर्ज्जकत्वे सतीति वा वक्तव्यम् । अधिकमभिहितं प्राक् पश्यर्थधर्म्मिककरणत्वान्वयबोधानुकूलसुप् सजातीयत्वं तृतीयात्वं शताय परिक्रीणातीत्यादौ धात्वर्थे करणत्व बोधं प्रत्यनुकूलापि चतुर्थी न पश्यर्थे तथा परिक्रीकरणतायामेव तद्विधानात् काष्ठात्पचनमित्यादौ तु पञ्चमी न करणत्वस्य बोधिका असामर्थ्यात् किन्तु कारणत्वस्यैव हेतुतायां तदनुशासनात् । ददा त्यर्थधर्म्मिकसम्प्रदानत्वानुभावकसुप्सजातीयत्वं चतुर्थीत्वं दास्या मालां प्रयच्छतीत्यत्र दाने सम्प्रदानत्वस्यानुभाविकापि तृतीया न ददात्यर्थे दानधातोर्योगएव सम्प्रदानतायां दानोऽनाचारइत्यनेन तृतीयानुशासनात् । रीतिरुक्तैव । सम्प्रदानत्वशक्ता सुप्चतुर्थीति तु न युक्तं सम्प्रदानत्वाद्यपेक्षया लघुन्येकत्वादावेव चतुर्थ्याः शक्ति मत्त्वादनुशिष्टेर्मत्सरादिपदइव निरूढलक्षणाभिप्रायकत्वेनाप्युपपत्तेः पतधात्वर्थतावच्छेदकरूपावच्छिन्नधर्म्मिकविभागबोधानुकूलसुप् सजा-तीयत्वं पञ्चमीत्वं तले पतंस्तरुं त्यजतीत्यादौ वस्तुगत्या पत्यर्थे विभा-गस्य बोधिकापि द्वितीया न पतनत्वजात्यवच्छिन्ने तस्याएव पत्यर्थ-तावच्छेदकत्वात् नरकं पतित इत्यादौ भोगावच्छिन्नस्य दुरितस्य पत्यर्थ त्वेऽपि द्वितीयया न तत्र विभागोऽनुभाव्यते परन्त्वाधेयत्वं तिबन्त दाधात्वर्थधर्म्मिकस्वार्थान्वयबोधास्वरूपयोग्यत्वे सति प्रथमान्य सुप्त्वं षष्ठीत्वं धनं करेण विप्राय पात्रात् काश्यां ददात्यसावित्यत्र द्विती-यादिर्ददात्यर्थे स्वार्थान्वयबोधकतया तत्स्वरूपयोग्यएव प्रथमा तु तद योग्यापि प्रथमैव धनस्य दातेत्यत्र दाने स्वार्थबोधिकापि षष्ठी न तिबन्तस्य दाधातोरर्थे येनासम्भवः हिनस्त्यर्थहिंसाधर्म्मिकस्वार्थ कर्म्म त्वानुभावकसुपसजातीयत्वं वा चौरं ज्वरयतीत्यादौ हिंसायां कर्म्मत्व बोधिकापि द्वितीया न हिनस्त्यु पश्याप्यायां दण्डेन हिनस्तीत्यादौ तादृश्यामपि हिंसायां करणत्वादेर्बोधकस्तृतीयादि र्नतु कर्म्मत्वस्य ।

सम्बन्धसामान्ये स्वत्वे वा शक्ता सुप् षष्ठी ग्रामं गच्छति पटं ददाती-त्यादौ च धात्वर्थतावच्छेदकीभूते संयोगस्वत्वादौ द्वितीययाधेयत्वमेव बोध्यत इत्यपि वदन्ति। पचधात्वर्थतावच्छेदकरूपावच्छिन्नधर्म्मिकस्वार्थाधेयत्वबोधानुकूलसुप्सजातीयत्वं सप्तमीत्वं शाकसूपयोः पाचक इत्यादौ द्विवचनस्य लच्यत्वादि पूर्व्ववत् अधिकरणतायामाधेयत्वे वा शक्ता सुप् सप्तमी ग्राममध्यास्ते इत्यादावधिकरणत्वं बोधन्त्यपि द्वितीयादिर्न तत्र शक्ता ग्रामाय गच्छतीत्यादौ कर्म्मत्वादिष्वेव चतुर्थ्यादिः। चैत्रधर्म्मिकस्वार्थाधिकरणत्वाद्यबोधकसुप्समानानुपूर्व्वीकत्वं वा सप्तमीत्वमित्यपि वदन्ति। स्वादित्रिकान्यतमत्वं प्रथमात्वम् एवममादित्रिकान्यतमत्वादिना द्वितीयात्वादिकं निर्व्वाच्यमित्यप्याहुरिति कृतं विस्तरेण।

क्रियाकारकयोरन्वयव्युत्पत्तयेऽन्यथापि सुपं विभजते।

कारकार्थेतरार्था च सुप् द्विधा च विभज्यते।
धात्वर्थांशे प्रकारो यः सुबर्थः सोऽत्र कारकम्।

वृत्त्या कारकस्य बोधिका तदन्यस्य चेत्येवं द्विविधोऽपि सुपो विभागः तत्र यद्धातूपस्थाप्ययादृशार्थेऽन्वयप्रकारीभूय भासते यः सुबर्थः स तद्धातूपस्थाप्यतादृशक्रियायां कारकम्। वृक्षात्पतति व्याघ्राद्बिभेति इत्यादौ ब्राह्मणाय ददाति पुत्राय क्रुध्यतीत्यादौ दात्रेण छिनत्ति घटत्वेन जानातीत्यादौ स्थाल्यां पचति भुक्तौ भासत इत्यादौ ग्रामं गच्छति घटं पश्यतीत्यादौ चैत्रेण पच्यते घटेन भूयत इत्यादौ च पतप्रभृतिधात्वर्थे पतनादौ पञ्चम्याद्युपस्थापितोविभागादिः प्रकारीभूय भासते इति तत्तद्धातूपस्थापिततत्तत्क्रियायां विभागादिकं प्रकृते कारकमतोधात्वर्थे स्वार्थबोधकतया तत्र पञ्चम्यादिः कारकविभक्तिरुच्यते यादृशेन नामार्थेनावच्छिन्नस्य सुबर्थस्य यादृशधात्वर्थेऽन्वयः स एव तादृशधात्वर्थे कारकतया व्यपदिश्यते

तेन वृक्षात्पततीत्यादौ वृक्षादेरपि पतनादिक्रियायामपादानादि कारकव्यवहारः। स्तोकं पचतीत्यादौ क्रियायां प्रकारीभूतोपि स्तोकादिर्नकारकं सुपानुपस्थापनात् द्वितीया तु तत्र क्लीवलिङ्गत्ववदानुशासनिक्येव स्तोकपाचकइत्यादिकस्तु तत्पुरुषो गिरिकाणइत्यादिवद्विशेषविधेरेव षष्ठ्यर्थस्तु सम्बन्धोन धात्वर्थे प्रकारीभूय भासते तण्डुलस्य पचतीत्याद्यप्रयोगादतः सम्बन्धोन कारकं नवा तदर्थिकापि षष्ठ्यादिः कारकविभक्तिः। अतएव क्रियाप्रकारीभूतोऽर्थः कारकं तच्च षड्विधम्। कर्तृकर्म्मादिभेदेन शेषः सम्बन्धइष्यतइति शाब्दिकाः स्मरन्ति। शेषः कारकादवशिष्टः सम्बन्धः कारकादन्यइत्यपि पठन्ति। रजकस्य वस्त्रं ददातीत्यादौ च परिष्कार्य्यत्वादिलक्षणः सम्बन्धोवस्त्रादावेव षष्ठ्यानुभाव्यते तण्डुलस्य पाचकः मैत्रस्य भोक्तव्यमित्यादौ कर्म्मत्वकर्तृत्वादिकं कारकमेव धात्वर्थे पचनादौ कृद्योगे कर्तृकर्म्मणोः षष्ठ्यनुशिष्टेः गुरुविप्रतपस्विदुर्गतानां प्रति कुर्व्वीत भिषक् स्वभेषजैः, पद्मस्यानुकरोत्येष कुमारीमुखमण्डलः सा लक्ष्मी रुपकुरुते यया परेषामित्यादावपि मातुः स्मरति चोरस्य हिनस्ति जलस्योपस्कुरुते इत्यादाविव क्रियाविशेषयोगे कारकार्थैव षष्ठी प्रयोगदृष्ट्या प्रत्यनुपेभ्यः करोतेः कर्म्मण्यपि वैकल्पिकस्य षष्ठीविधेर्वक्तव्यत्वात् नहि गुरून् प्रतिकरोतीत्यादितइवात्रवाक्यभ्योगुर्व्वादि कर्म्मकत्वं प्रतिकारादिक्रियायां नावगम्यते। अतएव सामान्यवत्त्वे सति वाह्यकरणकप्रत्यक्षत्वादित्यादावनुशासनासत्वेऽपि सति सप्तम्याः सामानाधिकरण्यमर्थस्चिन्तामणौ चिन्तितः। दण्डेन घटः भूतले पटइत्यादौ तु तृतीयाद्यर्थः करणत्वादिकं न कारकं धात्वर्थानन्वितत्वात् अतएव तादृशवाक्यार्थे दण्डघटः भूतलपटइत्यादिर्न समासः कारकविभक्त्यन्तर्भावेणैव विशेषविधिं विना तत्पुरुषस्य व्युत्पन्नत्वात् मम प्रतिभाति रोचते स्फरतीत्यादौ प्रतिभानादिक्रियायामस्म-

दादेः सम्बन्धः षष्ठ्या कथं बोध्यताम् अकारकविभक्तित्वादिति तु विभावनीयम्।

कारकं विभजते।

अपादानसम्प्रदानकरणाधारकर्म्मणाम्।
कर्त्तुश्च भेदतः षोढ़ा कारकं परिकीर्त्तितम्।

अपादानादीनां भेदोवैधर्म्म्यमपादानत्वादि तत्प्रयुक्तः कारकस्य षड्विधत्वव्यवहारः।

तत्रापादनत्वं लक्षयति।

क्रियाधर्म्मिणि यः स्वार्थः पञ्चम्या विग्रहस्थया।
अनुभाव्यः कारकन्तदपादानत्वसंज्ञकम्।

क्रिया धात्वर्थः तथाच यद्धातूपस्थाप्ययादृशार्थे विग्रहवाक्यस्थ पञ्चम्या यः स्वार्थोऽनुभावयितुं शक्यः स तद्धातूपस्थाप्यतादृशक्रियायामपादानत्वमुच्यते वृक्षात्पतितइत्यतोवृक्षावधिकविभागानुकूल पतनकर्त्तेत्यन्वयबुद्धौ धातूपस्थाप्यपतने पञ्चम्युपस्थाप्योविभागः स्वानुकूलत्वसम्बन्धेन प्रकारइति स एव तत्रापादानत्वम्। नच वृक्षादिव स्वस्मात्पतितश्चैत्रइत्यप्रयोगात् धात्वर्थान्वितं परसमवेतत्वमपि तत्र पञ्चम्यर्थइति तदप्यपादानत्वं स्यात् इष्टत्वात् वस्तुतः परसमवेतत्वं न पञ्चम्यर्थं तथा सति द्रव्यान्यसमवेतस्य पतनस्याप्रसिद्ध्या द्रव्यात्पतति खगइत्यादेरयोग्यतापत्तेः परन्तु स्वावधिकत्वसम्बन्धेन प्रकृत्यर्थान्वितस्य पञ्चम्यर्थविभागस्य सामानाधिकरण्यानुकूलत्वोभयसम्बन्धेन धात्वर्थे पतनेऽन्वयस्य व्युत्पन्नत्वान्न तादृशप्रयोगः चैत्रावधिकत्वविशिष्ट विभागाधिकरणनिष्ठं यत् चैत्रविभागानुकूलं पतनं तस्य चैत्रे बाधात् स्वावधिकत्वविशिष्टविभागस्य स्वस्मिन्नसत्त्वादिति युक्तमुत्पश्यामः। प्रासादमारुह्य प्रेक्षकइत्याद्यर्थे तु प्रासादात् प्रेक्षकइत्यादिवाक्यं न विग्रहस्तादृशार्थे प्रासादप्रेक्षकादिशब्दानामसमासत्वादतस्तन्निष्ठ

पञ्चम्यर्थे आरोहणानन्तर्य्यादौ नातिप्रसङ्गः अपादानशब्दस्तु तत्तत् कर्म्मानधिकरणत्वे सति तत्तत्कर्म्मजन्यविभागाश्रये शक्तइति न तत्र तद्यवहारः । तरुकर्म्मकस्त्यागएव तरुतः पतनमतस्तस्य त्यागे कर्म्मवदपादानं तत्कर्मवत्येव धात्वर्थतानवच्छेदकीभूतएव विभागे पञ्चम्याः साधुतया तरोस्त्यजतीत्यादिको न प्रयोगः त्यजेर्व्विभागावच्छिन्न क्रियावाचित्वात् वृक्षादपैतीत्यादावपि लक्षणया पतनमेव धात्वर्थः विभागावच्छिन्नक्रियायास्तथात्वे तु वृक्षं त्यजति जहातीत्यादिवत् वृक्षमपैतीत्यपि प्रमाणमेव पतिस्तु न विभागावच्छिन्नं स्पन्दमभिधत्ते किन्त्वधःसंयोगावच्छिन्नं गुरुत्वप्रयोज्यपतनत्वजात्यवच्छिन्नं वा वृक्षाच्चलतीत्यादिवच्च वृक्षात् स्पन्दते इत्यपि प्रयोगोभवत्येव चलिस्पन्द्यो द्वंयोरप्यकर्म्मकधातुत्वेन तत्प्रयोगस्याविशिष्टत्वात् । यत्तु तरुं त्यजतीत्यत्र विभागोधात्वर्थः क्रियाजन्यविभागत्वेनापादानत्वमिव धात्वर्थतावच्छेदकीभूतफलत्वेन कर्म्मत्वमपीत्यपादानत्वकर्म्मत्वयोर्विभक्तिप्रसक्तौ कर्म्मत्वस्य परत्वात्तस्य बोधिका द्वितीयैव प्रवर्त्तते न त्वपादानत्वस्य बोधिका पञ्चमी तथैव साकाङ्क्षत्वात् अपादानसम्प्रदानकरणाधारकर्म्मणाम् । कर्त्तुश्चोभयसम्प्राप्तौ परमेव प्रवर्त्तते इत्यनुशासनादिति तच्चिन्त्यं वृक्षाद्विभजते खगइत्यत्रावधित्वमवधिता निरूपकत्वं वा धात्वर्थेऽन्वितं पञ्चम्या प्रतिपाद्यते तेन वृक्षनिष्ठावधिताकविभागवान् खग इत्याकारकस्तत्र बोधः स्वप्रतियोगिक संयोगस्येव स्वावधिकविभागस्यापि स्वस्मिन्नसत्त्वादेव स्वस्माद्विभजते इत्यादिको न प्रयोग इत्युक्तप्रायम् अवधित्वन्तु स्वरूपसम्बन्धप्रभेदः पदार्थान्तरं वा इत्यन्यदेतत् । व्याघ्राद्बिभेति त्रस्यतीत्यादौ हेतुत्वं जन्यत्वं वा पञ्चम्यर्थः तच्च भावित्वेन स्वानिष्टचिन्तनपर्य्यवसितस्य भयस्यैकदेशेऽनिष्टे चिन्तनएव वान्वितं तथाच व्याघ्रहेतुकस्य स्वानिष्टस्य भावित्वेन चिन्तनवान् व्याघ्रहेतुकत्वेन भाव्यनिष्टधर्म्मिकचिन्तन

वानिति वा तत्र बोधः। पापान्निवर्त्तते अधर्म्मादिरमतीत्यादौ पञ्चम्या द्वेषोऽर्थः तत्र प्रकृत्यर्थस्य विषयत्वेन तस्य च निवृत्तिरूपे धात्वर्थे जन्यत्वेनान्वयः तेन पापगोचरद्वेषजन्यनिवृत्तिमानित्येवं तत्र बोधः तत्र विषयत्वं पञ्चम्यर्थः तथाच पापगोचरनिवृत्तिमानि-त्यर्थइत्यन्ये। रणात् पराजयते इत्यत्र युद्धनिवृत्तिः पराजेरर्थः पञ्चम्यास्तु द्वेषस्तेन रणगोचरद्वेषजन्ययुद्धनिवृत्तिमानित्येवं तत्र बोधः कृत्यसाध्यत्वधीप्रयुक्तप्रवृत्त्यभाववत्त्वं तत्र पराजेरर्थः पञ्च-म्यास्तु विशेष्यत्वं तच्च धात्वर्थैकदेशे बुद्धावन्वितं तेन रणधर्म्मिक स्वकृत्यसाध्यत्वधीप्रयुक्तप्रवृत्त्यभाववानित्याकारकस्तत्र बोध इत्यपि वदन्ति। शत्रुं पराजयते इत्यादौ त्वभिभवहेतुव्यापारः पराजेरर्थइति धात्वर्थतावच्छेदकफलशालितया शत्रुप्रभृतेः कर्म्मत्वमेव। पापात् जुगुप्सते इत्यत्र गर्हापूर्व्वकनिवृत्तिर्गुपधातोरर्थः सुपोविषयित्वं तच्च गर्हानिवृत्त्योः क्रमेणान्वयि तथाच पापविषयकगर्हाप्रयुक्तपाप गोचरनिवृत्तिमानित्याकारस्तत्र बोधः। वल्मीकाग्रात् प्रभवति धनुः खण्डमाखण्डलस्येत्यत्र धातोरर्थः प्राक्प्रकाशनं तत्र पञ्चम्या अधि-करणत्वमाधेयत्वं वा प्रत्याय्यते यत्र प्रकाशनं प्रभुवइति सूत्रेणाधि-करणस्यैवापादानत्वोपदेशात्। एवञ्च वल्मीकाग्रवृत्तिप्रथमप्रका-शनवदाखण्डलस्य धनुःखण्डमित्याकारकस्तत्र बोधः। वल्मीकः सातपोमेघः आखण्डलः शक्रः। वल्मीकाग्रे आविर्भवति इत्यादौ च प्रकाशपर्य्यवसितोऽप्याविर्भावोन प्रपूर्व्वस्य भवतेरर्थ इति तत्राधि करणतायां सप्तम्येव प्रमाणम्। धर्म्मादुत्पद्यते सुखं दण्डाज्जायते घट इत्यादौ धातुना स्वाधिकरणसमयध्वंसानधिकरणसमयसम्बन्ध रूपस्तत्तत्समयवृत्तिध्वंसप्रतियोगिसमयावृत्तित्वे सति तत्तत्समय सम्बन्ध रूपएव वा उत्पादः प्रत्याय्यते पञ्चम्या तन्निष्ठं जन्यत्वं तथाच धर्म्म जन्योयः स्वाधिकरणसमयध्वंसानधिकरणसमयसम्बन्धस्तद्वत् सुखम इत्याकारस्तत्र बोधः।

वार्त्तिककृतस्तु उत्पद्यते इत्यादौ प्रागभावप्रतियोगितारूप-मेवोत्पत्तिमत्त्वं धात्वर्थस्तत्र च तिङर्थस्य वर्त्तमानादिकालस्यावच्छे-द्यतासम्बन्धेनान्वयात् भाविन्युत्पद्यते इत्यादिकोन प्रयोगः। किन्तूत्-पत्स्यतइत्यादिस्तत्र भविष्यत्कालावच्छेद्यस्यैव प्रागभावप्रतियोगि-त्वस्य सत्त्वेन वर्त्तमानकालावच्छेद्यतदसत्त्वात् अतएव नाशं प्राप्नोति प्राप्स्यतीत्यादावपि प्रतियोगित्वपर्य्यवसितायां प्राप्तौ लडादिना वर्त्तमानादिकालावच्छेद्यत्वमेवानुभाव्यते नतु वर्त्तमानत्वादिकं नाश-प्रतियोगित्वस्य व्याप्यवृत्तित्वे भावि नाशं प्राप्नोति नष्टोनाशं प्राप्स्य-तीत्यादिप्रयोगस्य दुर्व्वारतापत्तेः। वर्त्तमानं भाविकालवृत्ति वा यत् नाशप्रतियोगित्वं तस्य च भाविनि विनष्टे च सत्त्वात् नश्यति नंक्ष्यतीत्यादावपि धात्वर्थस्य नाशस्य प्रतियोगित्वं स्वार्थेन वर्त्तमानादि कालेनावच्छिन्नं तिङा बोध्यते तेन भावि नश्यति नष्टोनंक्ष्यतीत्यादिको न प्रयोगः सम्प्रत्यादिकालावच्छेद्यस्य नाशप्रतियोगित्वस्य भाव्या-दावसत्त्वात्। यत्तु नश्यति नंक्ष्यति ननाशेत्यादौ प्रतियोगित्वमिव वर्त्तमाना भाविन्यतीता चोत्पत्तिरपि यथाक्रमं तिङर्थः तथाच वर्त्त मानोत्पत्तिकस्य ध्वंसस्य प्रतियोगित्वं न भाव्यादौ भाव्युत्पत्तिकस्य न नष्टादौ अतो भावी नश्यतीत्यादिकोन प्रयोगइति दीधितिकृदुक्तं तन्न युक्तं कथितक्रमेणैव सामञ्जस्ये लडादेरुत्पत्तावपि वृत्त्यन्तर कल्पने गौरवात् अतएव ध्वंसप्रागभावयोः प्रतियोगितायां पूर्व्वापर कालावच्छेद्यत्वप्रवादोऽपि पक्षधरमिश्राद्यनुमोदितः सङ्गच्छते । नचैवं प्रागभावादिप्रतियोगित्वस्य धर्म्माद्यजन्यत्वाद्धर्म्मादुत्पद्यते सुख मित्यादेरयोग्यतापत्तिः सुखादेराद्यक्षणसम्बन्धरूपायामप्युत्पत्तौ ध-र्म्मादिजन्यत्वे प्रमाणाभावेनोक्तदोषस्य मतान्तरेऽप्यविशिष्टत्वादा-द्यक्षणसम्बन्धस्य धर्म्माद्यजन्यत्वेऽपि तदधीनत्वोपगमेन पञ्चमीसमर्थने प्रागभावप्रतियोगित्वरूपायामप्युत्पत्तौ तस्य सुवचत्वादितिप्राञ्चः कृपा

दन्धं वारयति विषाद्बालं निवारयति इत्यादौ च क्रियाधर्म्मिक निवृत्त्यनुकूलव्यापारोवारणं तन्निविष्टनिवृत्तौ पञ्चम्या कूपादिप्रकारकत्वं द्वितीयया चान्धादिनिष्ठत्वं प्रत्याय्यते क्रिया च पतनभोजनादिर्विशेषतोग्राह्या तथाचान्धनिष्ठायाः पतनधर्म्मिककूपप्रकारक निवृत्तेर्बालनिष्ठायाश्च भोजनधर्म्मिकविषप्रकारकनिवृत्तेरनुकूल व्यापारवानित्याकारकस्तत्र बोधः तथाविधनिवृत्त्यनुकूलव्यापारश्च स्वार्थधीद्वारा कूपे मा पत विषं मा भुंच्व इत्याद्यभिलापरूपः स्फुट एव । यत्तु पतनादिप्रतिकूलव्यापारो वारणं तदेकदेशे च पतनादावन्धादेराधेयत्वेन कूपादेः कर्म्मत्वेनान्वयादन्धनिष्ठस्य कूपकर्म्मकपतनस्य प्रतिकूलव्यापारवानित्यादिरूपः कूपादन्धं वारयतीत्यादितोबोधइति तत्तुच्छं तादृशपतनस्याप्रसिद्धस्थले तथाविधवाक्यस्यायोग्यतापत्तेः परस्वेभ्यः पाणिं निवारयतीत्यत्रानयनधर्म्मिकनिवृत्त्यनुकूलव्यापारोनिवारणं तदन्तर्गतनिवृत्तौ च पाण्यादेरवच्छेदकत्वेन परस्वादेश्च प्रकारत्वेनान्वयः तादृशव्यापारः कराकुञ्चनादिरेव । स्वाङ्गाद्बाणं वारयतीत्यत्र च यद्यपि बाणनिष्ठस्य स्वाङ्गसंयोगस्य विरोधिव्यापारोनार्थः तादृशसंयोगस्याप्रसिद्धेः तथापि बाणसंयोगाभाव निष्ठायाः स्वाङ्गवृत्तितायाः प्रयोजकव्यापारः तथाच संयोगाभाव निष्ठस्य प्रयोजकव्यापारस्तत्र वारणं तन्निविष्टे च संयोगे द्वितीयान्त लभ्यस्य बाणप्रतियोगिकत्वस्य संयोगाभावनिष्ठे च पञ्चम्यन्तलभ्यस्य स्वाङ्गवृत्तित्वस्यान्वयः कार्य्याभावइव तन्निष्ठे अधिकरणविशेषवृत्तित्वेऽपि प्रतिबन्धकस्य प्रयोजकत्वात् अतएव मणिः काष्ठे दाहाभावस्य प्रयोजकः नतु पाथसीत्यादिकः सार्व्वलौकिकव्यवहारइति बाणसंयोगाद्यभावनिष्ठस्य स्वाङ्गवृत्तित्वस्य प्रयोजकत्वं बाणापसारणादिव्यापारस्य नासिद्धम् । दण्डात् घटइत्यादौ पञ्चम्यर्थोऽपि जन्यत्वादिकं न कारकं धात्वर्थानन्वयित्वात् अतएव दण्डघटइत्यादिकस्तत्र न प्रयोगइत्युक्तप्रायम् ।

सम्प्रदानत्वं लक्षयति ।

गत्यादिभिन्ने धात्वर्थे चतुर्थ्या विग्रहस्थया ।
यः स्वार्थोबोधनीयस्तत् सम्प्रदानत्वमीरितम् ।

गत्यादिभिन्ने यद्धातूपस्थाप्ये यादृशार्थे विग्रहस्थचतुर्थ्या यः स्वार्थोबोधयितुं शक्यते स तद्धातूपस्थाप्यतादृशक्रियायां सम्प्रदानत्वमुच्यते । ब्राह्मणाय दानं धनस्येत्यादौ ददातेः स्वत्वजनकत्यागोऽर्थ-स्तन्निविष्टे च स्वत्वे ब्राह्मणादेः प्रतियोगित्वं निरूपितत्वं वा चतुर्थ्या बोध्यते इति तदेव तत्र सम्प्रदानत्वं ब्राह्मणप्रतियोगिकं ब्राह्मणनिरू-पितं वा यद्धनवृत्ति स्वत्वं तज्जनकत्यागइत्येवं तत्र प्रत्ययात् धात्वर्थ-तावच्छेदकीभूतस्वत्वाख्यफलवत्तया धनादेर्दानकर्म्मत्वात् । नचैवं पशुकामनया यागकरणदशायां चैत्रः स्वात्मने पशुं ददातीत्यपि प्रयोगापत्तिस्तादृशयागस्य चैत्रीयं यत्पशुनिष्ठं स्वत्वं तज्जनकत्यागत्वादिति वाच्यं स्वत्वध्वंसजनकक्रियापर्य्यवसन्नस्य त्यागस्यैकदेशे स्वत्वध्वंसेऽपि द्वितीयाद्यर्थस्यान्वयेन पशुफलकयागे पशुनिष्ठस्य स्वत्वध्वंसस्य जनकत्व विरहादेव तद्वाक्यस्याप्रमाणत्वात् । ग्रामाय गत इत्यादौ विग्रहस्थ चतुर्थ्या धात्वर्थे बोध्यमपि कर्म्मत्वं न गत्यादिभिन्ने वृक्षाय सेचक इत्यादौ गत्यादिभिन्ने चतुर्थ्या बोधनीयोऽपि सम्बर्द्धयितुमित्यादि तुमर्थोन विग्रहस्थयेति न तत्र प्रसङ्गः । सम्प्रदानशब्दस्तु स्वाश्रय गोचरत्यागजन्यस्वत्वस्य प्रतियोगिन्येव शक्तइति स्वत्वप्रतियोगित्वं सम्प्रदानमित्यादिकोन प्रयोगः ।

नच दानस्य स्वत्वहेतुत्वे प्रमाणाभावः सप्त वित्तागमा धर्म्या दायोलाभः क्रयोजयः । प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रहएव चेत्यादि मन्वादिवचनैस्तस्य स्वत्वहेतुत्वाप्रतिपादनादितिवाच्यं ब्राह्मणाय त्यक्तायां गवि गौरियं ब्राह्मणस्य नतु ममेत्यादिसर्व्वजनीनप्रतीतेरेव तत्र प्रमाणत्वात् प्रदानं स्वाम्यकारणमिति वचनाच्च । अतएव विदेशस्थं

पात्रमुद्दिश्य त्यक्तधने स्वीकारमन्तरेणैव पात्रस्य मरणस्थले पितृदायत्वेन तद्धनं पुत्रादिभिर्विभज्य गृह्यते अन्यथा तैरिव उदासीनैरपि तद्धनस्यारण्यकुशादेरिवोपादाने यथेष्टनियोगे च प्रत्यवायो न स्यात्। नन्वेवं दानादेव स्वत्वसिद्धेर्दत्तवस्तुनि स्वीकारोऽव्यर्थइति चेन्न लब्ध्वा चाष्टगुणं फलमित्यादिस्मृतेः प्रतिगृहीतद्रव्यदानस्य फलविशेषं प्रति हेतुत्वेन तादृशफलसम्पत्त्यर्थमेव प्रतिग्रहस्योपयोगात् याजनाध्यापनप्रतिग्रहैर्द्विजोधनमर्ज्जयेदित्यादिश्रुत्या प्रागुक्तस्मृत्या च प्रतिग्रहस्यापि स्वत्वहेतुत्वबोधनाच्च स्वत्वजनकव्यापारस्यैवार्ज्जनपदार्थत्वात्। दासाय भक्तं ददाति भृतकाय वेतनं ददातीत्यादावपि स्वत्वजनकत्यागं प्रतिपादयन् ददातिर्मुख्यएव पुण्यजनकन्तु न तादृशं दानमवैधत्वात्। यत्तु स्वीकारजन्यस्य स्वत्वस्य जनकस्त्यागोदानं मनसा पात्रमुद्दिश्य धनत्यागस्तु न दानं किन्तूत्सर्गमात्रं प्रतिग्रहजन्यस्वत्वं प्रति हेतुभूतवैधत्यागस्यैव तथात्वात् उपेक्षा तु स्वत्वध्वंसमात्रजनकस्त्यागोनतु तत्र स्वत्वजनकत्वस्यान्तर्भावइति मैथिलैरुक्तं तन्न युक्तं लाघवेन स्वत्वजनकत्यागस्यैव ददात्यर्थत्वात्। तिलानस्मै प्रतियच्छति तुरगमस्मै विक्रीणीत इत्यादौ द्रव्यान्तरग्रहणपूर्व्वकं दानमेव प्रतिदानं मूल्यग्रहणपूर्व्वकं दानमेव च विक्रयइति तत्रापि मुख्यमेव सम्प्रदानत्वं चतुर्थ्या बोध्यते तिलादिकञ्च न मूल्यं पणपुराणादेरेव शास्त्रे तथात्वोपदेशात्। अदृष्टार्थं दत्तस्यैव च स्वीकारः प्रतिग्रह इति परेण प्रतिदत्तस्य विक्रीतस्य वा तिलतुरगादेः स्वीकारोन दोषावहः।

मैत्राय रोचते मोदकइत्यत्र चतुर्थ्या धात्वर्थान्वितमाधेयत्वं धातुना च भक्ष्यत्वप्रकारकेच्छोपस्थाप्यते तिङा तु प्रकाशतइत्यादाविव विषयत्वलक्षणं कर्त्तृत्वं तथाच मैत्रनिष्ठाया भक्ष्यत्वप्रकारकेच्छाया विषयतावान्मोदकइत्याकारकस्तत्र बोधः। गुरवे गां धार-

यते इत्यत्र धृञा गृहावस्थितिर्द्वितीयया तदन्वितं कर्तृत्वं चतुर्थ्या च तन्निविष्टगृहान्वितं सम्बन्धित्वमुपस्थाप्यते तेन गोकर्तृकाया गुरुसम्बन्धिगृहावस्थितेरनुकूलव्यापारवानित्याकारस्तत्र बोधः धातूत्तरणिचा व्यापारबोधनादिति कालापाः। पाणिनीयास्तु धारेरुत्तमर्ण इतिसूत्रानुसारेण चैत्राय शतं धारयते इत्यादाविव गुरवे गां धारयते इत्यादावपि ऋणग्रहणं धारणं दत्तत्वञ्च चतुर्थ्यर्थः तथाच गुरुदत्तां गां ऋणत्वेन गृह्णातीत्याकारस्तत्र वाक्यार्थः पश्चाच्छोध्यत्वेनाङ्गीकृत्य गृहीतञ्च द्रव्यमृणमित्याहुः। पुत्राय राध्यति पुत्रायेक्षत इत्यादौ दैवनिरूपणं धात्वर्थस्तन्निविष्टे च दैवे सुबर्थस्य सम्बन्धस्यान्वयस्तेन पुत्रस्य दैवं निरूपयतीत्येवं तत्र बोधः। गुरवे गां प्रतिशृणोति आशृणोतीत्यादौ देयत्वेनाभ्युपगमः शृणोतेरर्थस्तत्र गोर्विशेष्यत्वेन तदेकदेशे च दाने गुरोरुद्देश्यत्वेनान्वयस्तेन गुरूद्देश्यकदानकर्म्मत्वेन गामभ्युपगच्छतीत्येवं तत्र बोधः। होत्रे प्रतिगृणातीत्यादौ हर्षानुकूलव्यापारलक्षणं प्रोत्साहनं गृणातेरर्थस्तदेकदेशे च हर्षे होत्रादेरन्वयस्तेन होतृनिष्ठहर्षानुकूलव्यापारवानित्याकारकस्तत्र बोधः। चैत्राय कुप्यति क्रुध्यतीत्यादौ धात्वर्थ उत्कटद्वेषस्तत्र विषयित्वलक्षणं सम्प्रदानत्वं चतुर्थ्या बोध्यते तेन चैत्रविषयकोत्कटद्वेषवानित्याकारकस्तत्र बोधः। पुत्रे कोपेन युज्यते इत्यादौ कृदन्तस्य कोपपदस्यैवार्थे पुत्रइत्यस्यान्वयो नतु धात्वर्थे। पटाय यतते इत्यादावपि धात्वर्थकृतौ सुपा पटस्य विषयित्वं बोध्यते तत्रोद्देश्यत्वमेव चतुर्थ्यर्थः कथमन्यथा पटेच्छया तन्तुनिर्म्माणदशायां पटाय यतते इत्यादिकः प्रयोग इत्यपि वदन्ति। मित्राय द्रुह्यतीत्यत्र दिष्टाचरणं द्रोहस्तेन मित्रस्य दिष्टमाचरतीत्यर्थः। शिष्यायेर्ष्यतीत्यत्रानिष्टानुपेक्षणमीर्ष्या तथाच शिष्यानिष्टं नोपेक्षत इत्यर्थः। पुत्रायासूयतीत्यत्र असूया गुणद्वेषस्तेन पुत्रस्य गुणं द्वेष्टीत्याकारस्तत्र

बोधः । मित्रं द्रुह्यति शिष्यमीर्ष्यति पुत्रमसूयतीत्यपि प्रयोगात् द्रुहादिकर्म्मणः सम्प्रदानत्वं वैकल्पिकमित्युन्नीयते । कोपपूर्व्वकस्य द्रोहादेर्द्रुहादिधातुवाच्यत्वे तत्कर्म्मणः सम्प्रदानत्वं द्रोहादिमात्रस्य तथात्वे तु कर्म्मत्वमेवेति पुनः कौमाराः । सोपसर्गयोस्तु क्रुध-द्रुहोः कर्म्मणः कर्म्मतैव नतु सम्प्रदानता अतएव शिष्यस्याभिक्रोद्धा मित्रस्याभिद्रोग्धेत्यादौ तद्योगे कर्म्मणि षष्ठ्येव प्रमाणम् ।

करणत्वं लक्षयति ।

योऽर्थो विकरणान्तस्य धातोरर्थे तृतीयया ।
बोध्यते करणं नाम कारकं तदिहोच्यते ।

सविकरणस्य यद्धातोरुपस्थाप्ययादृशार्थे तृतीयया यादृशः स्वार्थोऽनुभाव्यो स तद्धातूपस्थाप्यतादृशक्रियायाः करणसंज्ञकं कारकमुच्यते । दात्रेण छिनत्ति घटत्वेन जानातीत्यादौ धात्वर्थे छिदायां दात्रस्य व्यापारद्वारा जन्यत्वादि ज्ञानादौ च घटत्वादेः प्रकारित्वादिकं तृतीयया बोध्यते तदेव तत्र करणत्वं चैत्रेण पक्वमित्यादौ धातोरर्थे तृतीयया बोध्यमपि कर्तृत्वं न विकरणान्तस्य हुतेन कृशानौत्यादौ विकरणान्ताभिन्नोऽपि रुधादिधातुर्विकरणान्तएव घृतेनास्ति जुहोतीत्यादावपि लुगेव प्रतिसन्धीयमानविकरणमस्तीति मतेनेदं नातस्तत्र घृतादेः करणत्वव्याहतिः करणशब्दस्तु व्यापारप्रत्यासत्त्या जनकस्य वाचकः चाक्षुषादौ चक्षुरादिः संयोगेन ह्यनुमित्यादौ व्याप्तिज्ञानादिः परामर्शादिना स्मृत्यादावनुभवादिः संस्कारादिना स्वव्यापारेणैव सम्बन्धेन हेतुः शरीरात्मप्रभृतयस्तु ज्ञानादौ तादात्म्येनैव योगेन तेषां तत्र करणत्वप्रसङ्गः । श्रावणेऽपि प्रत्यक्षे कर्णावच्छिन्नशब्दात्मना व्यापारेणैव सम्बन्धेन श्रोत्रं करणं स्वव्यवस्थापकगुणं पुरस्कृत्यैव वहिरिन्द्रियाणां प्रवृत्तेः शब्दसामान्याभावस्य श्रावणत्वविरहेपि क्षत्यभावात् श्रोत्रमनसोः संयोगएव वा तत्र

व्यापारः ज्ञानस्य धारावहनस्थले च तृतीयादिकं प्रति द्वितीयादिकं न प्रथमादेः प्रत्यासत्तिस्तत्सम्बन्धेन हेतुत्वे मानाभावात् फलायोग व्यवच्छिन्नं फलोपधायकं वा कारणमेव करणं ज्ञानादावात्मादेः करणत्वस्येष्टत्वात् उपधेयसङ्करेऽपि कर्तृत्वकरणत्वाद्युपाधेरसाङ्कर्य्यादेव कारकस्य षड्विधत्वादतएवात्मानमात्मना वेत्ति हन्त्यात्मानमात्मनेत्यादिकः प्रयोगः अतएव च विवक्षातः कारकविभक्तयो भवन्तीत्यपि प्रवादइत्यन्ये। पशुना रुद्रं यजेत इत्यत्र पशुं रुद्राय ददातीत्यर्थः करणं कर्म्म यजेः कर्म्म च सम्प्रदानमित्यनुशासनात् कर्म्मत्वादावपि तृतीयादेः साधुत्वात्। एतदुदाहरणमात्रविषयानुशिष्टिरियमितिवृद्धाः। पायसेन विप्रं यजेत इत्यादिप्रयोगात् सामान्यत एवेत्यपरे। दण्डेन घट इत्यत्रापि तृतीयार्थः करणत्वं परन्तु तन्न कारकं क्रियानन्वयित्वात्।

अधिकरणत्वं लक्षयति।

यत्क्रियायां यादृशार्थः सप्तम्या विग्रहस्थया।
बोध्यस्तस्यां तदेवाधिकरणं नाम कारकम्।

क्रिया धात्वर्थस्तथाच यद्धातूपस्थाप्ययादृशार्थे विग्रहस्थया सप्तम्या यः स्वार्थोऽनुभाव्यते तदेव तद्धातूपस्थाप्यतादृशक्रियायामधिकरणत्वं नाम कारकम्। ग्रामे गन्तेत्यत्र धात्वर्थे गतौ ग्रामनिष्ठमधिकरणत्वं तन्निरूपितमाधेयत्वं वा सप्तम्यानुभाव्यतइति तदेव तद्धातूपस्थाप्यतादृशक्रियायामधिकरणत्वकारकम् अतएव ग्रामगन्तेत्यादिकस्तत्र समासः। यद्यपि चैत्रादिनिष्ठाया गतेः समवायादिना ग्रामादिवृत्तित्वं बाधितं कालिकादिना तद्वृत्तित्वञ्चातिप्रसक्तं स्पन्दे गच्छतीत्यपि प्रयोगापत्तेस्तथापि ग्रामे गच्छत्ययं नतु गृहादावित्याद्यनुभवसाक्षिकेण स्वरूपसम्बन्धविशेषेण तथात्वं बोध्यम्। यत्तु संयोगावच्छिन्नक्रियाया गतित्वात तन्निविष्टसंयोगे समवायेनैव

ग्रामवृत्तित्वसत्त्वान्नासङ्गतिरिति तन्न ग्रामादेर्धात्वर्थतावच्छेदकी-भूतफलान्वयित्वेन कर्म्मतापत्त्या ग्रामं गच्छतीत्येव नियमतः प्रयोगा-पत्तेः । विक्लित्त्यवच्छिन्नक्रियायाः पाकत्वेन तस्यामिव तन्निविष्ट विक्लित्तावपि समवायादिना स्थाल्यादिवृत्तित्वासम्भवेन स्थाल्यां पचति तण्डुलमित्यादौ तथाप्यप्रतीकाराच्च तण्डुलाद्यवयवविभागप्रभेद स्यैव विक्लित्तित्वादिति । घटत्वं घटे भासतइत्यत्र विषयतापर्य्यवसन्ने भासने घटनिष्ठं विशेष्यत्वमवच्छेद्यतासम्बन्धेन सप्तम्यानुभाव्यत इति तत्रापि तदेवाधिकरणतानामकं कारकम् । ज्ञाने घटत्वं भासत इत्यादौ निरूपितत्वमपि । घटे पटत्वं जानातीत्यादौ तु विशेष्यता-रूपः सप्तम्यर्थान धात्वर्थेऽन्वेति घटपटयोस्तादृप्येण प्रमास्थलेऽपि तादृशप्रयोगापत्तेः परन्तु द्वितीयार्थे पटत्वप्रकारत्वएवावच्छेद्यत्व सम्बन्धेन । यथाच सुबर्थयोर्मिथोऽन्वयेऽपि न क्षतिस्तथा वक्ष्यते । अधिकरणपदस्य शक्यतावच्छेदकन्तु न सम्बन्धमात्रं घटाद्यात्मन-स्तदधिकरणतापत्तेः वृत्तिनियामकः सम्बन्धस्तथेत्यपि न कुण्डादौ बदरादेरिव बदरादावपि कुण्डादेरधिकरणतापत्तेर्वृत्तिनियामकत्व स्याधिकरणतावच्छेदकत्वे पर्य्यवसानाच्च नाप्याधेयतानिरूपकत्व-मधिकरणत्वं तुल्यन्यायेनाधिकरणतानिरूपकत्वस्यैवाधेयतात्वेन पर-स्पराश्रयप्रसङ्गात् परन्त्वाधेयतावत् पदार्थान्तरमेवाधिकरणत्वं तच्च नैकं सर्व्वस्य सर्व्वाधिकरणतापत्तेः किन्त्वाधेयताभेदेन नानैव प्रती-त्यनुगमस्तु रूपत्वादिना रूपादेरिवाधिकरणतात्वेनैवाखण्डेन तस्य नचैकधर्म्मावच्छिन्नाधिकरणत्वं लाघवादेकमेवोचितं रूपत्वेन नील-स्याधिकरणं स्फटिकमित्यपि प्रयोगापत्तेः । अतएव तद्रूपरसयोः समनियतमप्यधिकरणत्वं विभिन्नमेव अन्यथा तद्रूपत्वेन तद्रसस्याधि करणं घटइत्यादेरपि योग्यतापत्तेरित्यास्तां विस्तरः ।

कर्म्मत्वकारकं लक्षयति ।

यगन्तधातोरर्थो यस्तिङा स्वार्थेऽनुभाव्यते ।
यत्रासौ कर्म्मतानाम कारकं कर्त्तृतेतरः ।

यगन्तस्य यद्धातोस्तत्तरस्य तिङा यत्र स्वार्थे तदीयोयाद्वशोऽर्थोऽनुभावयितुं शक्यते तद्धातूपस्थाप्यतादृशक्रियायां स तिङर्थः कर्त्तृताभिन्नः कर्म्मत्वनाम कारकमित्यर्थः । ग्रामो गम्यत इत्यत्र गमधातूपस्थाप्यायाः संयोगावच्छिन्नक्रियायाः स्वजन्यत्वसम्बन्धेन तिङ्पदोपस्थाप्ये संयोग एवान्वयो न तु त्यज्यत इत्यादाविव विभागादौ धात्वर्थतावच्छेदकस्यैव फलस्य बोधने कर्म्मविहितप्रत्ययानां धातुसाकाङ्क्षत्वादतः संयोग एव तत्र गतिक्रियायाः कर्म्मत्वं न तु विभागादिः तेन तरोस्त्यागिनि खगे तरुं गच्छतीत्यादिको न प्रयोगः गम्यते रथः स्वयमेवेत्यादौ कर्म्मवन्निवानु कूलव्यापारवत्त्वलक्षणं कर्त्तृत्वं धात्वर्थस्य धर्म्मापि न तत् कर्त्तृत भिन्नमिति तदाशयः । ननु चैत्रकर्त्तृकगमनजन्यसंयोगस्य ग्रामइव चैत्रेऽपि सत्त्वाच्चैत्रेण गम्यः चैत्र इत्यपि प्रयोगः स्यात् न स्यात् तिङर्थसंयोगे स्वजन्यत्वस्वाश्रयप्रतियोगिकत्वोभयसम्बन्धेन धात्वर्थगतेः साकाङ्क्षत्वेन चैत्रकर्त्तृकगत्याश्रयप्रतियोगिकत्वविशिष्टस्य संयोगस्य चैत्रे बाधितत्वात् । अतएव चैत्रो ग्रामं गच्छतीतिवत् चैत्रश्चैत्रं गच्छतीत्यपि न प्रयोगः तत्रापि द्वितीयार्थे संयोगे प्रकृत्यर्थस्य स्वप्रतियोगिकत्वसम्बन्धेनैव साकाङ्क्षतया द्वितीयान्तनम्यस्य चैत्रीयत्वविशिष्टसंयोगस्य जनकत्वस्वाश्रयवृत्तित्वोभयसम्बन्धेनैव क्रियायामन्वयेन चैत्रप्रतियोगिकसंयोगाश्रयवृत्तितस्यैव चैत्रे बाधितत्वात् ।

यत्तु फलमिव क्रियायामन्वितं परसमवेतत्वमपि कर्म्मतावाचिप्रत्ययस्यार्थः परत्वञ्च तिङा स्वार्थफलान्वयिप्रतियोगिकं द्वितीयादिना तु प्रकृत्यर्थप्रतियोगिकं प्रत्याय्यते तथाच चैत्रकर्त्तृकस्य चैत्रान्यसमवेतगमनस्याप्रसिद्धत्वेन चैत्रे तज्जन्यसंयोगस्यासम्भवाच्चैत्रो गा

गम्यते चैत्रइत्यादिकोन प्रयोगः। एवं चैत्रान्यसमवेतस्य गमनस्य चैत्रे बाधाच्चैत्रस्तेन गच्छतीत्यादिरपि। चैत्रेण गम्यते ग्रामइत्यादौ तु चैत्रकर्तृकस्य ग्रामभिन्नसमवेतस्य गमनस्य जन्योयः संयोगस्त द्वान् ग्रामइत्यन्वयबोधने न किञ्चिद्बाधकमितिप्राच्यैरुक्तं तन्न युक्तं संख्याकालातिरिक्तस्य तिङर्थस्य धात्वर्थविशेष्यत्वनियमेन तिङर्थपर समवेतत्वादेर्धात्वर्थगत्यादावन्वयायोगात् प्रथमान्तोपस्थाप्यग्रामादे रभेदान्यसम्बन्धेनाऽत्र प्रत्ययार्थे तिङर्थे वान्वयस्य व्युत्पत्तिविरुद्धत्वेनाव्युत्-पन्नत्वात् चैत्रेण गम्यते द्रव्यं द्रव्यं गच्छति चैत्रइत्यादौ द्रव्यान्य समवेतस्य गत्यादेरप्रसिद्धत्वेनायोग्यतापत्तेश्च। नव्यास्तु फलमिव भेदोऽपि कर्मत्वव्यञ्जिप्रत्ययस्यार्थस्तथाच चैत्रेण गम्यते ग्रामइत्यत्र तिङर्थभेदस्य सामानाधिकरण्यसम्बन्धेन धात्वर्थविशेष्यत्वात् प्रति योगित्वसम्बन्धेन प्रथमान्तार्थे ग्रामादौ विशेषणत्वान्न व्युत्पत्तिविरोधो नवातिप्रसङ्गः चैत्रकर्तृकगमनाश्रयवृत्तिभेदप्रतियोगित्वस्य चैत्रे विरहात् चैत्रं गच्छतीत्यादावपि प्रतियोगित्वसम्बन्धेन चैत्रान्वितस्य द्वितीयार्थभेदस्य सामानाधिकरण्यसम्बन्धेन धात्वर्थगतावन्वयात्तादृशगतेश्चैत्रे बाधाच्चैत्रं गच्छति चैत्रइत्यादिकोन प्रयोगः प्रतियोगि-त्वञ्च उभयावृत्तिधर्मावच्छिन्नं धर्मद्वयानवच्छिन्नं वा ग्राह्यमतोद्रव्यं गच्छतीत्यादौ गतेर्द्रव्यभेदसामानाधिकरण्यविरहेऽपि न क्षतिरिति प्राहुस्तच्चिन्त्यम्।

वृक्षं खगस्त्यजतीत्यादौ विभागावच्छिन्नक्रिया त्यजेरर्थः द्वितीयायास्तु विभागस्तेन वृक्षावधिकविभागवती या विभागावच्छिन्नक्रिया तद्वान् खगइत्याकारस्तत्र बोधः वृक्षावधिकविभागवत्त्वञ्च जनकत्व स्वाश्रयवृत्तित्वोभयसम्बन्धेनैव क्रियायां ग्राह्यमतः खगावधिकविभा-गस्य खगादावसत्त्वात् खगं त्यजति खगइत्यादिकोन प्रयोगः। खगेन त्यज्यते खगइत्यपि प्रयोगः प्रागुक्तरीत्या निरसनीयः।

प्राञ्चस्तु ग्रामं गच्छति त्यजतीत्यादौ सर्व्वत्र क्रियामात्रं धात्वर्थं स्त्यजिगम्योः पर्य्यायत्वेऽपि न क्षतिः। गत्यर्थक्रियायां संयोगस्यैव त्यज्यर्थक्रियायाञ्च विभागस्यैव बोधकतायाः कर्म्मप्रत्ययेषु क्लृप्तत्वात् तरुं त्यजतीत्यादौ संयोगस्य तरुं गच्छतीत्यादौ च विभागस्य द्वितीयादितो नावगमः परैरपि समभिव्याहृतधात्वर्थतावच्छेदकफलस्यैव द्वितीयादिबोध्यताव्युत्पत्तेरभ्युपेतव्यत्वात् अन्यथातिप्रसङ्गात्। नचैवं स्पन्देन स्पन्द इत्यादेरिव त्यागेन गतिरित्यादेरपि वाक्यस्य निराकाङ्क्षतापत्तिस्तत्र त्यजिगम्योर्विभागाद्यवच्छिन्नक्रियालक्षकत्वेनैवान्वययोग्यतासम्भवात् द्वितीयासाकाङ्क्षतुमन्तधातुत्वप्रयुक्तएव च धातूनां सकर्म्मकत्वव्यवदेशोनतु फलावच्छिन्नक्रियावाचित्वप्रयुक्तः स्पृप्रभृताव्याप्तत्वात्। स्मृत्यर्थधातूनां कर्म्मणि षष्ठ्या इव द्वितीयाया अपि साधुत्वात्। एवञ्च ग्रामं गच्छति तरुं त्यजतीत्यादौ ग्रामसंयोगजनकक्रियावांस्तरुविभागजनकक्रियावानित्याकारक एव बोधो नतु ग्रामसंयोगजनकसंयोगावच्छिन्नक्रियावांस्तरुविभागजनकविभागावच्छिन्नक्रियावानित्याकारकः संयोगविभागयोरुभयथाभानस्य नील घटजनकघटजनकदण्डवानित्यादौ घटादेरिव निराकाङ्क्षत्वेनासम्भवादनुभवबाधितत्वाच्चेत्याहुः।

परे तु संयोगः क्रिया च द्वयमेव प्रत्येकं गमिशक्यं तयोर्जन्यजनकभावस्तु वाक्यार्थमर्य्यादया भासते एवार्थयोरन्ययोगव्यवच्छेदयोरिव गम्यर्थयोः संयोगक्रिययोर्मिथएव साकाङ्क्षत्वाच्च नैकमात्रे गमिप्रयोगः। पुष्पवन्तपदे चन्द्रत्वसूर्य्यत्वाभ्यामिव विभिन्नरूपाभ्यां प्रकृतेऽपि संयोगत्वक्रियात्वाभ्यां गमधातोरेकशक्तिस्वीकारेऽपि न क्षतिः इयांस्तु विशेषो यत्तत्र सूर्य्यशशिनोर्मिथोनान्वयः प्रकृते तु संयोगक्रिययोस्तथेति तथाच ग्रामं गच्छतीत्यत्र द्वितीयाया आधेयत्वं प्रतियोगित्वं वार्थस्तेन तदन्वितस्य संयोगस्य क्रियायामन्वयात ग्राम

वृत्तिस्तत्प्रतियोगिकोवा यः संयोगस्तद्विशिष्टक्रियावानित्याकारकस्तत्र बोधः तरु त्यजतीत्यत्राप्याधेयत्वमवधित्वं वा द्वितीयार्थस्तेन तदन्वितस्य धात्वर्थविभागस्य धात्वर्थान्तरे क्रियायामन्वयात्तद्वृत्तिस्तदवधिकोवा योविभागस्तद्विशिष्टक्रियावानित्याकारकोबोधः संयोगादिवैशिष्ट्यञ्च जनकत्वस्वाश्रयवृत्तित्वोभयसम्बन्धेनैव प्रागिव ग्राह्यमतोनातिप्रसङ्गः। सकर्म्मकत्वमपि धातोः स्वार्थफलावच्छिन्नस्वार्थक्रियान्वयबोधकत्वं जानातीत्यादौ सकर्म्मकत्वव्यवहारोभाक्त इत्याहुः।

तण्डुलं पचतीत्यत्र रूपादिपरावृत्तिफलकतेजःसंयोगावच्छिन्नक्रिया पचेरर्थः तन्निविष्टे च निरुक्ते तेजःसंयोगे तण्डुलस्याधेयत्वेनान्वयः परमाणुं पचतीत्यपि प्रयुज्यतएव अतएव स्वतन्त्राः परमाणवः पच्यन्ते इति किरणावल्यामाचार्य्याः। ओदनं पचतीत्यादौ तु तण्डुलादावोदनादिपदस्य लक्षणा तत्र क्रियायामन्वितमनुकूलत्वं द्वितीयार्थ इत्यपि कश्चित्। तृणं छिनत्तीत्यादावारम्भकसंयोगविरोधिविभागावच्छिन्नक्रिया छिदेरर्थस्तन्निविष्टे च संयोगे विभागे वा स्वावयववृत्तित्वसम्बन्धेन तृणादेरन्वयः। पुष्पेण विष्णुं यजतइत्यत्र प्रीत्यवच्छिन्नसमत्वकद्रव्यत्यागोयजेरर्थः प्रीतौ विष्णोराधेयत्वेन द्रव्ये च पुष्पादेरभेदेनान्वयस्तेन विष्णुनिष्ठप्रीतिहेतुर्य्योमत्वकरणकः पुष्पाभिन्नद्रव्यत्यागस्तद्वानित्याकारस्तत्र बोधः स्वत्वध्वंसजनकेच्छापर्य्यवसन्नस्य त्यागस्यैकदेशे स्वत्वएव वा पुष्पादेराधेयत्वेन तत्रान्वयस्तेन द्रव्येण विष्णुं यजतइत्यादौ द्रव्यस्य द्रव्याभिन्नत्वेन शाब्दासत्त्वेऽपि न क्षतिः। पितरमाराधयति उपास्ते पूजयतीत्यादौ गौरवप्रयुक्तप्रीत्यवच्छिन्नक्रिया धात्वर्थस्तन्निविष्टयोर्गौरवप्रीत्योः क्रमेण विषयत्वाधेयत्वाभ्यां पित्रादेरन्वयस्तेन पितृगोचरगौरवप्रयुक्ता या पितृनिष्ठप्रीतिहेतुक्रिया तद्वानित्येवं तत्र बोधः। गौरवं पुनराराध्यत्वावगाही ज्ञान

प्रभेदोऽयं भक्तिरित्युच्यते। पित्रादिसेवायाश्च मन्त्रकरणकत्वाभावाच्च तत्र पितरं यजतइत्यादिकः प्रयोगः। परमात्मानमुपास्ते इत्यादौ तु गौरवप्रयुक्तक्रियामात्रे धातुलक्षणा नातः परमेष्ठिनः प्रीति विरहादयोग्यतापत्तिः। घृतं जुहोतीत्यादौ वह्न्यधिकरणकपतनाव च्छिन्नमन्त्रकरणकक्रिया ऊधातोरर्थः प्रोक्ते च पतने घृतस्याधेयत्वेना- न्वयस्तेनाग्न्यधिकरणकाय घृतवृत्तिपतनस्यानुकूलमन्त्रकरणकक्रिया वानित्येवं तत्र बोधस्तृणेच क्रिया सघृतस्य करादेः प्रसारणगुञ्जी करणादिरेव। अतएव घृतादेः परित्यागित्वविरहात्त्विगादेर्नगष्टवं किन्तु होतृत्वमेव वह्नौ जुहोतीत्यत्र सप्तम्यन्तस्यार्थोन धात्वर्थनिविष्टे पतनेऽन्वेति वह्निवृत्तित्वविशिष्टपतने तद्वृत्तित्वस्यान्वये निराकाङ्क्षता- पत्तेः परन्तु तत्त्वाक्तिन्नक्रियायामेव प्रतिमादौ घृतादिस्नानं मन्त्रकर- णकमपि नाग्न्यधिकरणकं वह्नौ घृतस्य प्रक्षेपमात्रमग्न्यधिकरणकतत् पतनानुकूलमपि न मन्त्रकरणकमतस्तदुभयं न होमः प्राजापत्येऽपि होमे मानसएव मन्त्रः करणं यद्वा वह्निसंयोगावच्छिन्नपतनानुकूल मन्त्रकरणकक्रियैव जुहोत्यर्थस्तेन घृतं जुहोतीत्यत्र वह्निसंयोगजनकं यद्घृतस्य पतनं तदनुकूलमन्त्रकरणकक्रियाविशेषवानित्याकारको- बोधः। नचैवं ऊधात्वर्थतावच्छेदकीभूतसंयोगात्मकफलशालित्वेन वह्न्यादेस्तदर्थकर्म्मतया वह्निं जुहोतीत्यपि प्रयोगापत्तिः साक्षाद्धा- त्वर्थतावच्छेदकीभूतस्यैव फलस्याश्रयिनः कर्म्मत्वादन्यथा गगने लोष्ठ मुत्क्षिपतीत्यादौ गगनादेरुत्क्षेपणादिकर्म्मतायादुर्व्वारतापत्तेः ऊर्द्ध्व संयोगफलकक्रियावच्छिन्नव्यापारस्यैवोत्क्षेपणत्वात् नचोत्क्षेपणत्वा- दिकं जातिरेव तत्र धात्वर्थतावच्छेदकं प्रवेशनत्वादिना सङ्करेण तस्य जातित्वायोगात् लोष्टादेस्तत्कर्म्मत्वाप्रसङ्गाच्च। अतएव परम्परया दुह्याद्यर्थतावच्छेदकीभूतवह्निः क्षरणशालित्वेन पयःप्रभृतेस्तत्कर्म्मत्व सम्पत्त्यर्थमकथितश्चेति सूत्रान्तरस्य प्रणयनमपि पाणिनेः सङ्गच्छते।

धनं प्रतिगृह्णातीत्यत्र पुण्यार्थकदानजन्यस्वत्वस्य जनकः स्वीकारः प्रतिग्रह इति फलीभूतस्वत्ववत्तया धनस्य कर्म्मत्वं विक्रयादेर्दानविशेषत्वेऽपि न तस्य पुण्यजनकत्वमतस्तल्लब्धस्य स्वीकारेण प्रतिग्रहः। ग्रामं क्रीणातीत्यत्र मूल्यदानजन्यस्वत्वस्य जनकः स्वीकारः स्वत्वजनकं मूल्यदानमेव वा क्रयस्तत्फले च स्वत्वे ग्रामस्याधेयत्वेनान्वयस्तेन ग्रामनिष्ठस्य मूल्यदानजन्यस्वत्वस्यानुकूलस्वीकारवान् ग्रामनिष्ठं यत्स्वत्वं तदनुकूलमूल्यदाता वेति तत्र बोधः। ग्रामं विक्रीणातीत्यत्र मूल्यग्रहणजन्यस्य परस्वत्वस्यानुकूलत्यागः परस्वत्वजनकमूल्यग्रहणमेव वा विक्रयस्तेन ग्रामनिष्ठस्य मूल्यग्रहणजन्यपरस्वत्वस्यानुकूलत्यागो ग्रामस्य त्यागस्तद्वान् ग्रामनिष्ठं यत्परस्वत्वं तदनुकूलमूल्यग्रहणवानिति वा तत्र बोधः। मूल्यग्रहणपुराणादिकमेव राजनिर्दिष्टं न तु द्रव्यमात्रं तेन तिलादीन् दत्त्वा माषादीनां विनिमये विप्राणां तिलविक्रयादिदोषस्यानवकाश इत्युक्तमेव। नरकं पततीत्यत्र भोगावच्छिन्नं पातित्यमेव पतेरर्थस्तेन नरकभोगानुकूलपातित्यवानित्याकारकस्तत्र बोधः नरकपतित इति द्वितीयातत्पुरुषोदाहरणमपि वृत्तिकारस्य एतदभिप्रायकमेव पतनक्रियायास्तथात्वे तु नरके पततीत्यादिरेव युक्तः प्रयोगः। स्वर्गं गच्छतीत्यादौ स्वर्गादिपदस्येव प्रकृते नरकपदस्यापि तद्देशपरत्वात्। धनं लभते प्राप्नोतीत्यादौ स्वत्वावच्छिन्नो व्यापारो धात्वर्थः तन्निविष्टे च स्वत्वे धनादेराधेयत्वेनान्वयः।

ननु यगन्तधात्वर्थविशेष्यतापन्नस्तिङर्थो यदि कर्म्मत्वं तदा दुहादेर्मुख्यकर्म्मण्यव्याप्तिः। गोपेन गौः पयो दुह्यत इत्यादौ गोपकर्तृकव्यापारजन्यं यत् पयःकर्म्मकमोचनं तद्वती गौरित्येवमन्वये मोचनवहिःक्षरणयोर्द्वयोरेव दुहधात्वर्थतावच्छेदकफलत्वेऽपि गोर्णां यन्मोचनरूपं

तस्यैव कर्म्म तिङाद्यैर्बाधनात् गौणं कर्म्म दुह्यादिभ्यस्तिङाद्यैरभिधीयते इति व्युत्पत्तेरतः प्रकारान्तरेण कर्मत्वं निर्व्वक्ति ।

यस्य धातोर्यदर्थे यः प्रकारीभूय भासते ।
द्वितीयया स्मारितोऽर्थस्तदा तत्कर्म्मतोच्यते ।

यद्धातोर्थाद्दृशार्थे द्वितीयया यादृशः स्वार्थोऽनुभाव्यते तद्धात्वर्थ तादृशक्रियायां तत्कर्म्मत्वं तच्च गां दोग्धि पयइत्यादिप्रयोगात् पयः प्रभृतेरप्यक्षतं पाकं कुरुते इत्यादौ यत्ने प्रकारीभूतमपि विषयत्वं न यतेरर्थे भवने ग्राममित्यादौ भूधात्वर्थे प्राप्तौ तथाभूतमपि संयोगित्वादिकं न तदर्थोत्पत्तौ प्रकारः । चौरं रुजन् पयः परिष्कुर्व्वन्नित्यादावेव रुजादिधात्वर्थहिंसादेर्द्वितीयार्थकर्म्मतायां विशेष्यत्वं सुलभं शत्प्रशानजादेर्निष्ठादिगणान्तर्गतत्वेन तदन्तधातोः कर्म्मणि षष्ठ्याः प्रतिषिद्धत्वात् दिवः करणस्य कर्म्मत्वोपदेशात् अक्षान् दीव्यतीत्यत्र द्वितीयार्थः करणत्वमपि गौणं कर्म्मत्वमेव अतएवाक्षा दीव्यन्ते द्यूतावेत्यादौ क्रीड़ाकरणतायामेव विहितास्तिङादिकर्म्मप्रत्ययाः । दुहादयस्तु फलावच्छिन्नक्रियाहेतुव्यापारवाचित्वादेव द्विकर्म्मकास्तेन गां पयोदोग्धि गोपइत्यत्र दुहेर्मोचनानुकूलव्यापारोऽर्थइति तत्रत्यमोचने गोराधेयत्वेन पयसः कर्म्मत्वेनान्वयात् पयः कर्म्मताकं यद्गोवृत्ति मोचनं तदनुकूलव्यापारवान् इत्याकारकबोधस्तत्र वहिः क्षरणावच्छिन्नव्यापारोमोचनं तदनुकूलव्यापारोदोहनमतोधात्वर्थतावच्छेदकीभूतं वहिःक्षरणरूपं फलमादाय पयसोमोचनात्मकञ्च तदादाय गोः कर्म्मत्वमवसेयम् । एवं शिष्यं धर्म्मं वदति वक्ति ब्रूते उपदिशत्याचष्टे इत्यादौ प्रतिपत्त्यवच्छिन्नव्यापारोवदप्रभृतिधात्वर्थइति तन्निविष्टायां प्रतिपत्तौ शिष्यस्याधेयत्वेन धर्म्मस्य च विषयत्वेनान्वयाद्धर्म्मविषयिणी या शिष्यनिष्ठा प्रतिपत्तिस्तदनुकूलव्यापारवान् इत्याकारकोबोधस्तादृशव्यापारोधर्म्मः सेव्यतामित्यादिकोगर्व्वाद्यभिलापः ।

शत्रुं शतानि जयतीत्यत्र ग्रहणावच्छिन्नपराभवो जयत्यर्थः तथाच शतस्य ग्रहणानुकूलायः शत्रुकर्म्मकः पराभवस्तत्कर्त्तेत्येव तत्र बोधः। पराभवस्तिरस्कारः। प्रजाः शतं दण्डयतीत्यत्र ग्रहणावच्छिन्नशासनं दण्डार्थस्तथाच शतग्रहणानुकूलं यत् प्रजानां शासनं तत्कर्त्तेत्येवं तत्र बोधः। शासनं नियन्त्रणम्। सुधां समुद्रं मथ्नातीत्यत्र उत्थानावच्छिन्नोन्मन्थनं धात्वर्थस्तेन सुधोत्थानानुकूलं यत्समुद्रस्योन्मन्थनं तत्कर्त्तेत्यर्थः। उन्मन्थनमालोड़नम्। पान्थं पन्थानं पृच्छतीत्यत्र अभिधानावच्छिन्नव्यापारः पृच्छा तथाच पान्थनिष्ठं यत्पथोऽभिधानं तदनुकूलव्यापारवानित्येवं तत्र बोधः। अभिधानमिहाभिलापस्तदनुकूलव्यापारस्तु केन पथा गन्तव्यमित्यादिप्रश्नः। नृपमर्थं प्रार्थयते याचते भिक्षते इत्यादौ दानाय प्रेरणं धात्वर्थस्तथाच नृपनिष्ठं यदर्थस्य दानं तत्प्रेरणावानित्यर्थः। प्रेरणा प्रवर्त्तना सा च दीयतामित्याद्यभिलापरूपा। ग्राममजां वहति नयतीत्यादौ गत्यवच्छिन्नव्यापारोवहिप्रभृतेरर्थस्तेन ग्रामकर्म्मकं यदजादिनिष्ठं गमनं तदनुकूलव्यापारवानित्येवं तत्र बोधस्तादृशव्यापारः प्रकृते गलरज्ज्वाकर्षणादिः। पुत्रं धर्म्ममनुशास्तीत्यादावनुशासनं देशनया प्रवर्त्तना तथाच पुत्रनिष्ठस्य देशनया प्रवर्त्तनस्यानुकूलव्यापारवानित्यर्थः। तथाविधोव्यापारः सन्ध्यां विधेहि समिधमाधेहीत्याद्युपदेशरूपः। शाखां ग्राममाकर्षतीत्यत्र गतिहेतुविकर्षणं धात्वर्थस्तेन ग्रामकर्म्मकं यच्छाखागमनं तदनुकूलविकर्षणवानित्यर्थः। विकर्षणं नम्रीकरणम्। गामवरुणद्धि व्रजमित्यत्र गतिप्रतिरोधहेत्वावरणमवरुधेरर्थस्तेन गोगतिप्रतिरोधस्यानुकूलं यद्व्रजस्यावरणं तत्कृतिमानित्यन्वयः। वृक्षं फलान्यवचिनोति इत्यत्र छिदाहेतुर्विघट्टनं चिनोतेरर्थस्तथाच फलकर्म्मकच्छिदानुकूलं यद्वृक्षस्य विघट्टनं चालनं तद्वानित्येवं तत्र बोधः। उतच्छिपत्यादिकस्तु धातुः सफलक्रियाहेतुव्यापारवाच्यपि न

दुह्यादिः । यदुक्तमभियुक्तैः दुहिवदत्यर्थजिदशिङ्मथिपृच्छार्थनार्थैः नयनार्थशास् । कथीरुधिश्रिञ्च तथार्थवृत्तौ द्विकर्म्मकोऽयं कथितो दुह्यादिः । तथार्थवृत्तौ निरुक्ततत्तदर्थवृत्तौ ।

गतिभोजनधीप्राप्तिशब्दार्थधौव्यधातुषु । कर्त्तृत्वं हेतुविहित-ण्यन्तेष्वेतेषु कर्म्मतेतिशाब्दिकस्मृतेर्गोपान् गमयति द्विजान् भोजयति गुरूननुज्ञापयति शिष्यान् पाठयति सुतान् स्नापयतीत्यादौ मूलधात्वर्थस्य कर्त्तृत्वलक्षणं गौणमेव कर्म्मत्वं द्वितीयार्थः तथाच गोपकर्त्तृकगत्यनुकूलव्यापारवानित्याकारस्तत्र बोधः । पुत्रान् प्रीतिं प्रापयतीत्यादौ च प्राप्तिर्न गतिः चैत्रो ग्रामं भावयते ग्रामस्य भावक इत्यादौ प्राप्त्यर्थस्य भवतेः स्वार्थविहितण्यन्तस्य कर्त्तुः कर्म्मतानिरासाय णिचो हेतुविहितत्वमनुसृतं हिंसायामेव भुज्यर्थभक्षोरेवं वहेरपि । ण्यन्तस्य कर्त्तुः कर्म्मत्वं क्रियया वाहनं यदीतिस्मरणाद्भक्षयति मूषिकान् मार्जारं भक्षयति लतां छागमित्यादेरेव भक्षेः कर्त्तरि कर्म्मता नतु भक्षयत्योदनं भृत्येनेत्यादौ भक्षयति प्रजाः परिजनैः कुनृप इत्यादौ तु न भोजनं भक्षेरर्थः । वाहयति रथनश्वान् सारथिर्वाहयति गोणीं वृषभान् वाहिक इत्यादाविव वाहयति भारं भृत्येन धनिकइत्यादौ स्वचेष्टया वाहकोन धनिकादिः । हृक्रोस्तु कर्त्तुः कर्म्मत्वं ण्यन्तत्वे स्याद्विभाषया । अभिवादिदृशोरेवमात्मनेपदइष्यते इत्यनुशिष्टेर्हारयति कारयति वा पटं कुविन्देनेत्यत्र इव कुविन्दमित्यत्रापि कुविन्दस्य गौणकर्म्मत्वावगमः तथा अभ्यवहारयत्योदनं तनयं तनयेन वा जननी विकारयति चित्तं चित्तेन वा वसन्तइत्यपि प्रमाणम् । परन्तु पूर्व्वयोरप्राप्तावेतयोस्तु प्राप्ताविव कर्म्मत्वस्य वैकल्पिकोविधिः । गुरुमभिवादयते सुतं सुतेन वा गृहस्थः ध्रुवं दर्शयते भार्य्यां भार्य्यया वा पतिरित्यादौ तु दृशेः प्राप्तावभिवादयतेस्त्व प्राप्तौ सः । अनात्मनेपदस्थले तु पन्थानं पथिकं दर्शयति पुत्रेण

मित्रमभिवादयतीत्यादौ यथा प्रागेव कर्म्मत्वादिकम् । क्वार्थार्थं निर्णाययति चैत्रेणौदनं खादयति शक्केन शब्दाययति दारैः क्रन्दयति पुत्रेण मित्रमाक्रायययतीत्यादौ तु नीप्रभृतेर्बुद्ध्यर्थकत्वेन तत् कर्त्तुः कर्म्मत्वं प्रसक्तमपि न नीखाद्यादिशब्दायक्रन्दिक्रयतिषु क्वचित् । हेतुण्यन्तेषु कर्त्तृत्वं कर्म्मता स्यात्तिङादिष्विति भर्त्तृहरिवचनान्निषिध्यते । अत्र च क्वचित्तिङादिष्वितिकथनाच्चैत्रेणार्थं निर्णाय्यमानस्तिष्ठति मैत्रेण पशुं खाद्यमानोब्रूते इत्यादौ कर्म्मविहितस्य शानजादेर्नानुपपत्तिरिति वदन्ति । सुखं प्राप्नोतीत्यादौ प्राप्तिरुत्पत्तिः परम्परया तदाश्रयत्वञ्च तिङर्थः । घटं जानातीत्यत्र विषयत्वं विषयिता वा द्वितीयार्थः ।

दिवाकरस्तु संस्कारावच्छिन्नमेव ज्ञानं जानात्यर्थइत्युक्तस्थले मुख्यमेव कर्म्मत्वं घटादेरित्याह तन्मन्दं ज्ञानमित्यादितः संस्काराप्रतीतेर्लाघवेन ज्ञानत्वस्यैव जानात्यर्थतावच्छेदकत्वात् घटस्योपेक्षात्मकज्ञाने निर्विकल्पके वा घटं जानातीतिप्रयोगस्याप्रसङ्गाच्च । अतएव प्राकट्यावच्छिन्नज्ञानमेव तत्र धात्वर्थइति तत्त्वावच्छेदकीभूतज्ञाततावत्त्वादेव घटादेर्ज्ञानकर्म्मतेति भट्टमतमप्यनादेयं ज्ञानविषयतातिरिक्तायां ज्ञाततायां मानाभावादन्यथा ज्ञाततायाइव कृततादेरप्यतिरिक्तायाः कल्पनापत्तेः । वह्निमनुमिनोम्यापादयामीत्यादौ विधेयतानामको विषयताप्रभेदएव द्वितीयार्थः पर्व्वतोवह्निमानित्याद्यनुमितावापत्तौ वा पर्व्वतमनुमिनोमीत्याद्यप्रयोगात् विषयतावच्छेदकत्वभिन्नप्रकारत्वमेव तत्र द्वितीयार्थइत्यपि वदन्ति । घटं पश्यति शब्दं शृणोत्यनुभवतीत्यादौ दर्शनाद्यर्थकधातुयोगे साक्षात्कारत्वनिरूपितमेव विषयत्वं कर्म्मत्वं घटादेरुपनीतचाक्षुषादौ तादृशाप्रयोगात् आकाशं न पश्यतीत्यादौ पुनरन्वयोवक्ष्यते । तण्डुलपाकं करोतीत्यत्र चिकीर्षाजन्यतावच्छेदकः क्रियायामद्देश्यताख्योविष-

यत्नविशेष एव द्वितीयार्थः कृतौ भासते तेन तण्डुलपाकत्वप्रकारक
कृतेस्तण्डुलविषयत्वेऽपि पाकदशायां तण्डुलं करोतीत्यादिकोन प्रयोगः
पाकदशायामोदनं करोतीत्यादौ च द्वितीयायामनुकूलत्वलक्षणा
तण्डुलादिकर्मकत्वकृतिस्तु नौदनादिजनिका प्रमाणाभावात् । वर्द्धमान
स्तु तत्स्थले धातुना उत्पत्त्यनुकूला कृतिरुच्यते इति तत्रौदनस्य मुख्य-
मेव कर्म्मत्वमतएव यत्र कृतिमात्रं धात्वर्थस्तत्र न द्वितीया यथा
घटाय यततइत्यादावित्याह तन्न कृत्यादिपदाद्यत्नमात्रप्रतीत्या यत्न-
त्वावच्छिन्नस्यैव करोत्यर्थत्वात् ।

मीमांसामहार्णवे तु पाककृतौ तण्डुलादेरुपादानविधयेव फल
विधयौदनादेरपि विषयत्वमुक्तं यदाह वत्सेश्वरः सिद्धं साध्यं फल-
ञ्चेति प्रवृत्तेर्विषयस्त्रिधा । तत्र सिद्धमुपादानं क्रियासाध्यं फलं
सुखमिति तथाच तन्मते तण्डुलपक्तृत्वदशायामोदनं करोतीत्यादि
प्रयोगे फलत्वेन विषयतैव द्वितीयार्थः । मासं जीवति क्रोशं स्वपिति
गोदोहं तिष्ठति कुरून् क्रीड़तीत्यादावधिकरणत्वं गौणमेव कर्म्मत्वं
सुपानुभाव्यते कालानामध्वमानानां क्रियाणां नीवृतामपि । आधा-
रता ध्रौव्यधातोः कर्म्मता स्यादिभाषयेतिस्मृतेः । अतएव मास-
स्त्वेत्रेण जीव्यते जीवितइत्यादौ कर्म्मतार्थकतिङादयः तथाच मासाधि
करणताकजीवनवांश्चैत्रः चैत्रकर्तृकजीवनाधिकरणतावान्मासइत्यादि
क्रमेण तत्र बोधः । सन्ध्यायां पचतीत्यादौ तु न ध्रौव्यस्य धातो-
रर्थेन योगः किन्तु सकर्म्मकस्य । दिवसं सुप्यते सुन्दरीभिः क्रोशं तत्
सेनया स्थितमित्यादौ तु द्वितीयया कालाध्वनोरभिव्याप्तिरेव बो-
ध्यते नन्वधिकरणत्वं शय्यामधिशेते अध्यास्ते अधितिष्ठतीत्यादावप्य-
धिकरणत्वमेव कर्म्मत्वं द्वितीयार्थस्तथैव शय्याधिशय्यतेऽधिशयिते-
त्यादौ कर्म्मतार्थकयोराख्यातकृतोः सम्भवात् ध्रौव्याणामधिशीङास
स्थानां कर्म्मत्वमेव तदितिस्मरणात् तदाधारत्वम् । अत्राधिष्ठानं

कुर्व्वित्यादौ त्वधिष्ठानस्याधारत्वं नैतस्य भासते किन्तु कृतेः तद्भान स्थले त्वेतस्याधिष्ठानं कुर्व्वित्यादिकमेव प्रमाणं काशीमनुवसति काश्य नूष्यते इत्यादावप्यधिकरणत्वमेव द्वितीयादिभिः प्रत्याय्यते अनूपा-ध्याङ्गोवसतेराधारस्य कर्म्मतातिदेशात् । गृहेऽनुवस्ते इत्यादौ तु वस्तिर्न वसतिः । शय्यामुपवसतीत्यादौ तूपवसतेर्निवासार्थकत्वएव तदाधारस्य कर्म्मत्वं तत्रैव तदनुशासनादनशनार्थकत्वेऽधिकर-णत्वमेव अतएव गृहेऽप्युपवसेद्रङ्गः प्रान्तरेऽपि नृपः सुखीत्यादिकः प्रयोगः ।

कर्तृत्वकारकं लक्षयति ।

तिङा विकरणान्तस्य धातोरर्थस्तु यादृशः ।
स्वार्थे यादृशि बोध्यस्तत् कर्तृत्वं तदिहोच्यते ॥

सविकरणेन यद्धातुनोपस्थाप्योयादृशार्थस्तदुत्तरतिङा स्वोपस्था प्ययादृशार्थेऽनुभावयितुं शक्यस्तद्धातूपस्थाप्यस्य तस्य तदेव कर्तृत्वं कारकमित्यर्थः । कर्म्मत्वादौ धातुनोपस्थाप्योऽर्थस्तिङानुभाव्योऽपि न विकरणान्तेनेति न तत्र प्रसङ्गः । पचति जानातीत्यादौ स्वोपस्थाप्य कृत्याश्रयत्वादौ धातूस्थाप्यस्य पाकबुद्ध्यादेरन्वयः पचाद्युत्तरतिङा बोध्यतइति पाकस्य यत्नवत्त्वं ज्ञानस्याश्रयत्वमेवं नश्यतीत्यत्र नाशस्य प्रतियोगित्वं प्रतिविम्बतइत्यत्र भ्रमात्मनः प्रतिविम्बस्य प्रकारत्वमेव कर्तृत्वं कर्तृशब्दस्तु अवयववृत्तिलभ्ये कृत्याश्रये यौगिकएव नतु शक्यार्थः प्रकारान्तरालभ्यस्यैव शक्यत्वान् निरूढ़लक्षणया शक्तेव वाश्रयस्य तृचा प्रत्यायनात् घटस्य कर्त्तेत्यादौ चानुकूलत्वं षष्ठ्यर्थः फलस्य प्रायशः कृत्यविषयत्वात् घटाद्युपभोगानुकूलकृतिश्च न घटा द्यनुकूला प्रमाणाभावात् अतोन घटादिभोक्तुस्तत्कर्तृत्वप्रसङ्गः क्रियाश्रये कर्तृशब्दोरूढ़स्तेन रथादेर्गत्यादिकर्तृत्वमपि मुख्यमेवेति तु न युक्तं । क्रिया हि नात्र स्पन्दस्तेनस्य पाककर्तृत्वानुपपत्तेः

प्रत्युत तण्डुलादेरेव तथात्वापत्तेः नापि धात्वर्थमात्रम् अतएव नापि स्पन्दानुकूलव्यापारः चलनानुकूलव्यापारवतः कारकमात्रस्य चलन कर्तृत्वापत्तेः ।

अत्तिजुहोतीत्यादावप्यदादेरुत्तरं लुमस्यैव विकरणस्य प्रतिसन्धाने भोजनकर्तृत्वादेरवगमइति तदप्रतिसन्धानेऽपीति मतेनाह ।

यगन्तभिन्नधात्वर्थवत्तया योऽनुभाव्यते ।
लटा स्वार्थः स धात्वर्थः कर्तृता वा निगद्यते ।

यगन्तभिन्नधातूपस्थाप्यवादृशार्थप्रकारकयदर्थधर्मिकान्वयबोधं प्रति लटः सामर्थ्यं स एवार्थो धातूपस्थाप्यतदर्थस्य कर्तृत्वं पच्यत इत्यादौ धातोरर्थवत्तया स्वार्थकर्मत्वं लटानुभाव्यमपि न यगन्त भिन्नस्य पच्याने तण्डुलइत्यादौ तु तादृशस्य धातोरर्थवत्तया तिङैव स्वार्थः कर्मत्वमनुभाव्यते न तद्विशेषेण लटेति तत्त्वदासः ।

अपादानत्वादिभेदेन षड्विधत्वमिवोक्तानुक्तत्वभेदेन कारकस्य द्वैविध्यमप्यस्तीति तदनुक्त्या न्यूनत्वमत आह ।

धात्वर्थस्य धर्मितया तिङाद्यैरनुभाव्यते ।
यत्तदुक्तं धर्मतया त्वनुक्तं कारकं भवेत् ॥

धात्वर्थस्य विशेष्यतया तिङाद्यनुभाव्यत्वमेव कारकस्योक्तत्वं तद्विशेषणतया तदनुभाव्यत्वमेव चानुक्तत्वं न तु धातुसाकांक्षप्रत्ययस्याभिधेयत्वमात्रमुक्तत्वं तण्डुलं पचति इत्यादावपि कर्मत्वादेरुक्तत्वापत्तेः पचति पच्यतइत्यादौ तिङा पाचकः पच्यमानइत्यादौ च कृता कर्तृत्वं कर्मत्वञ्च धात्वर्थविशेष्यत्वेनानुभाव्यते तथा पचनं काष्ठं दानीयो द्विजः भोमोगजः शयनं गृहमित्यादौ यथाक्रमं करणत्वादिव्युत्पत्ति वैचित्र्येण पदार्थैकदेशेऽपि कर्तृत्वादौ धात्वर्थस्य पाकादेरन्वयात् सेवितुं साम्प्रतं विज्ञेगुरुः परुषवागपि विषवृक्षोऽपि सम्बर्द्ध्य स्वयं छेत्तुमसाम्प्रतमित्यादौ निपातेन क्वचित् कर्मत्वकारकस्योक्तत्वम् ।

धातुभेदेन कर्म्मत्वकारकस्योक्ततायां नियममाह ।

दुह्यादिभ्यः प्रत्ययेन मुख्यकर्म्मत्वमुच्यते ।
णिजन्तेभ्यः कर्त्तृताख्यां तदसत्त्वेऽन्यकर्म्मता ॥

दुह्याद्युत्तरप्रत्ययेन मुख्यं साक्षाद्धात्वर्थतावच्छेदकं यत्कर्म्मत्वं तदेवोच्यते धात्वर्थविशेष्यत्वेनानुभाव्यते तेन गौः पयो दुह्यते दुग्धा वेत्यत्र पयःकर्म्मकमोचनानुकूलव्यापारजन्यमोचनवती गौरित्येवं बोधः । तत्र मोचनावच्छिन्नव्यापारस्य धातुवाच्यतया मोचनस्यैव साक्षाद्धात्वर्थतावच्छेदकफलत्वात् वह्निप्रभृतेर्गत्यवच्छिन्नव्यापारः कृषेश्च गत्यवच्छिन्नविकर्षणं वाच्यमतः साक्षात् तद्वाच्यतावच्छेदकं गतिमत्त्वमेव फलं न तु तद्घटकं संयोगादि । तथाच भारोभवनमुह्यते नीयतइत्यादौ शाखा ग्रामं कृष्यतइत्यादौ च यथाक्रमं भवनकर्म्मकगत्यनुकूलव्यापारजन्यगतिमान् भारः ग्रामकर्म्मकगत्यवच्छिन्नविकर्षणकर्म्मताश्रयः शाखेत्याकारकबोधयोरुत्पत्त्यैव सम्पत्तौ दुह्यादेर्गौणकं कर्म्म नीवह्यादेः प्रधानकर्मित्याद्युक्तिभेदेन विधिद्वयं शाब्दिकानामनादेयम् । णिजन्तोत्तरं कर्म्मतावाचिप्रत्ययस्थले तु मूलधातोः कर्त्तृतायाङ्कर्म्मतातिदेशसम्भवे तादृशमेव कर्म्मत्वं धात्वर्थस्य विशेष्यतया तिङाद्यैर्बोध्यते यथा चैत्रोग्रामं गम्यते गमितोवेत्यादौ ग्रामकर्म्मकस्य व्यापारजन्यगमनस्य कर्त्ता चैत्रइत्यादि । यत्र तु न तदतिदेशस्तत्र मूलधातोः कर्म्मत्वमेव तदर्थविशेष्यतया तैरुच्यते यथा ओदनः पाच्यते खाद्यते वा भृत्येन भर्त्रेत्यादौ तत्र भर्त्तृकर्त्तृकव्यापारजन्यस्य भृत्यकर्त्तृकपाकादेः कर्म्मतयौदनादिरेव बुध्यते मैत्रेण पूगं खाद्यमानस्त्रैत्रोव्रजतीत्यादौ कर्म्मणि शानजादिप्रत्ययः प्राक् परिचिन्तितः ।

अथ भिद्यते ऽभेदि वा कुसूलः स्वयमित्यादौ भिदाद्यनुकूलव्यापारवत्त्वरूपस्य तत्कर्त्तृत्वस्य कथं कुसूलादावन्वयः भिदादेः

परस्मैपदित्वेन तदर्थधर्म्मितया कर्त्तृत्वबोधने पदान्तरस्यासामर्थ्यात् यगिचोर्विगुणत्वाच्चेत्यत आह ।

एकक्रियाधर्म्मितया कर्त्तृता कर्म्मतोभयोः ।
बोधने कर्म्मताकाङ्क्षवापेक्ष्योत्सर्गतो भवेत् ॥

कर्म्मताकाङ्क्षा कर्म्मत्वान्वयस्यैवानुकूला आत्मनेपदयगादिसमभिव्याहाररूपाकाङ्क्षा व्युत्पत्तिवैचित्र्यादपेक्षणीया न तु कर्त्तृत्वान्वयस्य परस्मैपदविकरणादिसन्दंशरूपा यद्येवं तण्डुलचैत्रौ पच्येते इत्यपि प्रयोगः स्यात् न स्यात् सामग्र्यामिथोविरोधेन विभिन्न धर्म्मावच्छिन्ने प्रत्ययानां युगपत्कर्त्तृताकर्म्मत्वयोरनुभावकत्वस्याव्युत्पन्न त्वात् । अतएव पचेलिमौ मैत्रतण्डुलावित्यादिकोन प्रयोगः । आत्मने धोव्यधातूनां सनन्तण्यन्तयोः किरः । श्रन्थिग्रन्थ्योस्तथा ब्रूञः कर्त्तृ कर्म्मत्वबोधने । यगिचौ न दुहे नौ यगजन्तस्य च तस्य च । इच् वा स्यादुक्तधातूनां नित्यं तत्रात्मनेपदमिति वृद्धस्मृतेः । स्वयं विकुरुते युवेत्यादौ स्वयं चिकीर्षते कटइत्यादौ स्वयं कटः कारयते गौरुत- पुच्छयते चोरयते इत्यादौ स्वयमेव किरते करीत्यादौ स्वयं श्रथ्नीते- ग्रथ्नीते वा मालिकेत्यादौ स्वयं ब्रूते कथेत्यादौ स्वयं दुग्धे गौरित्यादौ धात्वर्थकर्त्तृकर्म्मत्वयोर्युगपदन्वये कर्म्मत्वान्वयानुकूलस्य यकोनापेक्षा तथा स्वयं व्यक्त युवा स्वयमचिकीर्षत कटइत्यादौ इचोऽपि एवं स्वयमलावि अलविष्ट वा केदारइत्यादौ स्वरान्तस्य धातोः स्वयमदुग्ध अदोहि वा गौरित्यादौ दुहेस्वार्थस्य तदुभयभानार्थमिचोऽनावश्यकत्वमतउक्तमुत्सर्गतइति । विकारहेतौ सति विक्रियन्ते येषां न चेतांसि तएव धीराइत्यादौ तु यकोगतिश्चिन्त्या ।

ननु शाकः पचता पश्यता वा भुज्यते इत्यादितः कुतः पाकादौ शाकादिकर्म्मत्वावगमः सुबर्थस्यैव कर्म्मत्वस्य धात्वर्थे धर्म्मिणि साकाङ्क्षत्वादतआह ।

स्वकर्म्मकैकधात्वर्थकर्त्तृकापरकर्म्मता।
यत्रान्वेत्यस्य कर्म्मत्वे प्रथमैवानुशिष्यते।

स्वकर्म्मताकत्वविशिष्टैकधात्वर्थकर्त्तृकर्त्तृकस्यापरस्य धातुनिपातयोरन्यतरार्थस्य कर्म्मत्वं यत्र धर्म्मिण्यन्वेति तदीयत्वेनानुभाव्ये कर्म्मत्वे प्रथमैवानुशिष्यते न तु द्वितीयादिरपेक्ष्यते येन शाकः स्वकर्म्मताकपाककर्त्तृकर्त्तृताकभोजनकर्म्मतावानित्याद्यन्वयधीस्तत्र न स्यात्। अतएव प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत् प्रकाशते इति पठन्ति। शक्तिः कारकमिति शाब्दिकाः। कर्म्मतामात्रन्तु ज्यायः तेन हस्तेन पचता भुज्यते शाकइत्यादौ नाभिहिताधिकारीयप्रथमा शक्तिः।

ननु यत्र विशिष्टवैशिष्ट्यावगाहितानिरूपकत्वेन गौणप्रधानभावापन्ने क्रियाद्वये प्रकारीभूय एकविधस्यैव कर्म्मत्वादिकारकस्य भानं तत्र तन्न स्यात् यथा पक्वान्नस्य भोक्ता पश्यन्नन्नस्य दाता भोक्तुमन्नस्य पाचकः पुरस्य गत्वा गन्ता भुक्त्वा चैत्रस्य स्थितिः पक्त्वा सूदस्य गमनमित्यादौ क्तादेर्निष्ठादित्वेन तदन्तधात्वर्थे षष्ठ्याः कर्म्मत्वाद्यनुभावकत्वस्य निषिद्धत्वात् एवं यत्र तादृशक्रियाद्वये नानाविधं कर्म्मत्वसम्प्रदानत्वादि प्रकारस्तत्रापि तथा यथा ब्राह्मणायाहूय ददाति वृक्षादारुह्य पततीत्यादौ कर्म्मत्वादौ चतुर्थ्यादेरसामर्थ्यादतआह।

गौणप्रधानक्रिययोः प्रकारीभूतकारके।
एकस्मिन् वा विभिन्ने वा प्रधानापेक्षया स्थितिः।

यत्र गौणप्रधानतापन्नधात्वर्थद्वये प्रकारीभूयैकविधमनेकविधं वा यदीयत्वेन कारकं भासते तत्र प्रधानक्रियामपेक्ष्यैव स्थितिः कारकविभक्तेर्व्यवस्थितिः न तु गौणक्रियां तथाच पक्वान्नस्य भोक्ता इत्यादौ अन्नकर्म्मताकपाकोत्तरान्नकर्म्मताकभोजनत्वादिना ब्राह्मणायाहूय ददातीत्यादौ च ब्राह्मणकर्म्मताकाह्वानोत्तरब्राह्मणसम्प्रदानताकदान-

त्वादिना बोधने व्युत्पत्तिवैचित्र्यादेव पचनाक्रानादिगोचरक्रियायां षष्ठीचतुर्थ्यादिना कर्म्मत्वादेर्भानमिति भावः ।

ननु शत्रवे कुप्यतीत्यत्र शत्रोः प्रयुक्तत्वविषयित्वरूपाभ्यामपादानत्व सम्प्रदानत्वाभ्यां कोपे पुत्रेण ददातीत्यत्र पुत्रस्य सम्प्रदानत्वकरणत्वाभ्यां दाने पात्र्यां भुंक्ते इत्यत्र पात्र्याः करणत्वाधिकरणत्वाभ्यां भोजने ग्रामं गच्छतीत्यत्र ग्रामस्याधिकरणत्वकर्म्मत्वाभ्यां गमने चैत्रस्य चलनमित्यादौ च चैत्रादेरधिकरणत्वकर्तृत्वादिना चलनादौ युगपत्कथमन्वयधीरपादानत्वादिबोधने चतुर्थ्यादेरसामर्थ्यादतआह ।

एकस्यैकक्रियायान्तु कारकद्वयबोधने ।
यत्परं कारकं तत्र विहिता सुबपेक्षिता ।

एकस्मिन् धात्वर्थे यत्रैकनामार्थनिरूपितयोः कारकद्वयोर्युगपद्बोधस्तत्र लक्षितक्रमेण यत् परं कारकं तत्र विहितानुशिष्टैव सुप् आकाङ्क्षानिर्व्वाहिका नतु पूर्व्वत्र व्युत्पत्तिवैचित्र्यादित्यर्थः । ब्राह्मणायाहूय ददातीत्यादावेकनिरूपितमपि नैकक्रियायां दण्डेन गामभ्याजेत्यादावेकक्रियायामपि नैकनिरूपितं कारकद्वयमन्वेति । अत्र अपादानसम्प्रदानकरणाधारकर्म्मणाम् । कर्त्तुश्चोभयसम्प्राप्तौ परमेकं प्रवर्त्तते इतिभर्तृहरिवचनात् करणत्वाधारत्वयोरेकदान्वयस्थलेऽधिकरणत्वार्थिकैव विभक्तिरपेक्षितेति प्राहुः करणत्वार्थिका एव तथेति कालापाः तैराधारत्वं निरुच्यैव करणत्वस्य निर्व्वचनादिति ध्येयम् ।

कर्तृत्वकर्म्मत्वयोरनुक्तविषयान्वयबोधोपयुक्तविभक्तीर्वक्तुमुपक्रमते ।

क्रियायां धातुलभ्यायां कर्तृत्वस्यावबोधिका ।
तृतीया कर्म्मतायास्तु द्वितीयोत्सर्गतोभवेत् ॥

धात्वर्थे कर्तृत्वस्यान्वयबुद्धौ नाम्नस्तृतीया कर्म्मत्वस्य च द्वितीया

उत्सर्गतोऽहेतुः। सत्ता अस्ति ग्रहो गृह्यते इत्यादौ वस्तुगत्या धात्वर्थेऽपि कर्त्तृत्वकर्म्मत्वाद्यन्वयो न धर्म्मिणो धातुजन्यामुपस्थितिमपेक्षते किन्तु नामजन्यामतस्तत्र न व्यभिचारः।

सामान्यविधिरुत्सर्गः सचापवादकं विशेषविधिं विना प्रवर्त्तते इति कर्म्मतायां द्वितीयाया वैकल्पिकं विशेषविधिं दर्शयति।

कर्म्मत्वस्य गतौ बोधे द्वितीयावच्चतुर्थ्यपि।
अर्थे दयेशोः संज्ञस्च नाथ्यर्थाशंसने स्मृतौ॥
पणिव्यवहृदिव्यूनां क्रयाद्यर्थेषु षष्ठ्यपि।
कृञर्थप्रतियत्ने च हिंसने चाप्यपेक्षिता।

ग्रामं गच्छतीत्यादित इव ग्रामाय गच्छतीत्यादितोऽपि गतौ ग्रामादिकर्म्मताकत्वस्यावगतेर्धात्वर्थगतौ कर्म्मत्वस्य बोधे द्वितीयावच्चतुर्थ्यपेक्षिता तथा दीनं दयते ईष्टे इत्यादितइव दीनस्य दयते ईष्टे संजानीते चिन्तयति स्मरतीत्यादितोऽपि दयादौ पुत्रस्य नाथते इत्यादितआशंसायां शतस्य पणायते व्यवहरतीति दीव्यतीत्यादितः पणत्वोपगमक्रयविक्रयादिव्यवहारेषु स्वर्णस्योपस्कुरुते इत्यादितोऽपि गुणान्तराधानरूपप्रतियत्ने चौरस्य हिनस्तीत्यादितो हिंसायाञ्च कर्म्मत्वस्यान्वयबोधे षष्ठ्यपि मैत्रं अनुनाथतीत्यादौ नाथ्यर्थोऽपि प्रार्थनादिर्नाशंसनं नृपं पणायति बन्धुं व्यवहरति दिवं दीव्यतीत्यादौ पण्यादेरर्था अपि स्तुतिशोभगत्यादयो न क्रयादिरूपाः।

धात्वर्थे कर्त्तृत्वकर्म्मत्वयोर्बोधने द्वितीयातृतीयादेर्नित्यापवादमाह।

निष्ठाद्यन्यकृदन्तार्थे कर्त्तृत्वस्यान्वयं प्रति।
कर्म्मत्वस्य च षष्ठ्येव हेतुर्बाधविधिं विना॥

निष्ठादिभिन्नं कृन्मात्रमन्ते यस्य ननु तदुत्तरं प्रत्ययान्तरं तादृशधातोरर्थे कर्त्तृत्वस्य कर्म्मत्वस्य वान्वये नाम्नः षष्ठ्येव तत्र

न तु तृतीयादिः यथा चैत्रस्य गतिः ग्रामस्य गमनमित्यादौ । चैत्रेण दृष्टचरस्तण्डुलं पाचकतरइत्यादौ तु धातोरुत्तरं न कृन्मात्रम् अतएव निष्ठादिभिन्नयोरपि ण जिन्नणोर्नित्यं तद्धितान्तत्वात् अङ्गानि व्यात्युक्षी धनानि सांग्राहिणमित्यादौ कर्म्मतायां न षष्ठीप्रसङ्गः प्रापकाभावात् ग्रामस्य गन्तृमान् देशश्चैत्रस्य गतिमद्गृहमित्यादौ तु गतिश्चिन्त्या तत्र गत्त्रादावेव षष्ठ्यर्थसम्बन्धो भासते न तु धात्वर्थे कर्म्मत्वादिरित्यपि कश्चित् । चैत्रेण भुक्तो मैत्रेण दत्तइत्यादौ सुकरः कटो मया दुष्करः पटस्त्वया इत्यादौ सुपानः सोमो मया दुष्पानः सोमस्त्वयेत्यादौ च कर्त्तृत्वस्य ग्रामं गतवानित्यादौ तण्डुलं पचन् पारायणमधीयन् उपनिषदं धारयन्नित्यादौ घटं विद्वान तण्डुलं पेचिवान् इत्यादौ भक्ष्यं भुञ्जान इत्यादौ सोमं पवमानः कवचमुद्वहमानइत्यादौ कटं चक्राण इत्यादौ दधि घटं चक्रिः कटमित्यादौ शत्रुं जिष्णुरित्यादौ श्रियमलङ्करिष्णुरित्यादौ कष्टं सहिष्णुरित्यादौ धनं गृध्नुः शरं क्षिप्नुरित्यादौ कटं चिकीर्षुः पुंयोगमाशंसुः तण्डुलं भिक्षुरित्यादौ शतं दायीत्यादौ ग्रामं गामी ग्राममागामीत्यादौ कटं कारको व्रजतीत्यादौ तण्डुलं पक्त्वा वर्त्तते इत्यादौ पयः पायं पायं व्रजतीत्यादौ पटं कर्त्तुं गच्छतीत्यादौ वदिता जनापवादमित्यादौ ग्रामं गामुकः सुखमभिलाषुकइत्यादौ च कर्म्मत्वस्य धात्वर्थे विनेव षष्ठीमन्वयइत्यत उक्तं निष्ठादिभिन्नेति ।

निष्ठादिकं विवृणोति ।

सम्प्रत्याधारवाच्यन्यः क्तः क्तवन्तश्च शन्तृङ ।
वन्सुशानः शानजानाः किः षाणिष्णुक्नुरुस्तथा ।
तृण्यर्थकणिनिर्भाविल्वार्थकेन् वुण् तुमर्थकम् ।
खल खलर्थकयुः क्त्वा णम् तुमौ दृणुकञपि ।
निष्ठादिः कथितः कृत्सु प्रत्ययानामयं गणः ।
कमेश्चकञ् गणे नास्मिन् द्विषः शन्तृङ् विभाषया ।

वर्त्तमानत्वस्याधारत्वस्य च प्रत्यायको यः क्तस्तदन्तधात्वर्थे कर्तृकर्म्मत्वयोरन्वये षष्ठ्येव प्रमाणम् । यथा भीतं मृगाणां मतः साधूनाम् इष्टः प्रजानां पूजितो जनानामित्यादौ सुप्तमरण्यं पथिकानां गतं नभो नक्षत्राणां पीतमगारं पयसइत्यादौ भुक्ता पात्री करस्तस्य भित्राणामित्यादौ च अत उक्तं सम्प्रत्याधारवाच्यन्यइति । धनस्य ग्राहीत्यादावृणर्थे न णिनिः ओदनस्य पाचकइत्यादौ च न तुमर्थे वुण् । स्त्रियाः कामुकइत्यादिदर्शनान्नात्र गणे कमेरुकञ् ग्राह्यः तथा द्विषः शतृङ् विभाषया चौरं द्विषन्निति वचौरस्य द्विषन्नित्यपि प्रयोगादिति ।

कृदन्तधात्वर्थे कर्तृत्वस्य कर्म्मत्वस्य वान्वये षष्ठ्येव बाधकं विना तन्त्रमित्युक्तं तत्र बाधकमाह ।

स्त्र्यधिकारोक्तभावान्यकृदन्तस्यार्थधर्म्मिके ।
द्वयोर्बोधे कर्म्मतायामेव षष्ठी न कर्त्तरि ।

स्त्र्यधिकारविहिताः ये भावप्रत्ययास्तदन्यकृदन्तस्य धातोरर्थे कर्तृत्वकर्म्मत्वयोर्युगपद्बोधने कर्मतायामेव षष्ठी तन्त्रं नतु कर्तृत्वे यथा ओदनस्य पाकश्चैत्रेण दोहः क्षीरस्य गवां गोपेन इत्यादौ स्त्र्यधिकारोक्तभावान्तस्य धातोरर्थे कर्तृकर्मत्वयोर्युगपदन्वये द्वयोरपि षष्ठ्येव यथा भिदा तमसामर्कस्य छिदा वृक्षाणां दक्षस्य इत्यादौ चिकीर्षा पुण्यानां पुरुषस्य ईहा धनानां दीनस्येत्यादौ मम भोजिका शक्तूनां तव शायिका रात्रीणामित्यादौ यथा वा तीर्थानां गतिरास्तिकस्य गुरूणां परिचर्य्या शिष्यस्य पितृणामुपासना सन्तानस्य रजनीनां जागर्य्या चौरस्य पुण्यानामकरणिर्जाल्मस्य जन्तूनां हत्या व्याधस्य हानिरर्थानां विरक्तस्य । हाज्यागाभ्यः क्त्यर्थे निः । उक्तिन्नित्याद्यन्तस्य धातोरर्थे कर्तृत्वकर्म्मत्वयोर्युगपद्बोधे कर्तृत्वांशे तृतीयाषष्ठ्यावैकल्पिकं कारणत्वमिति तु कौमाराः ।

षष्ठ्येव तत्त्वमिति प्रागुक्तौ बाधकं विशेषविध्यन्तरमाह .

कृत्यान्तधातोरर्थे तु कर्तृत्वस्यैव बोधने।
षष्ठी वा स्यात् द्वयोर्बोधे न द्वयोरपि सा भवेत्।

कृत्यप्रत्ययान्तधातोरर्थे कर्तृत्वमात्रस्य बोधने षष्ठीवत् तृतीयापि तत्त्वं कर्त्तव्यः करणीयः कृत्यः कार्य्यः प्रदेयो वा पटश्चैत्रस्येति वत् चैत्रेणेत्यस्यापि साकाङ्क्षत्वात्। तादृशधात्वर्थे कर्तृत्वकर्म्मत्वयो र्द्वयो र्बोधने तु न द्वयोरपि षष्ठी यथा नेतव्यः प्रापणीयो वा ग्रामं गौ र्गोपेनेत्यादौ गन्तव्यं ग्राममनेनेत्यादौ च। तव्यानीयौ क्यप् च घ्यणौ पञ्चैते कृत्यसंज्ञकाः।

ननु स्थितं चैत्रस्येत्यादौ कर्तृत्वस्य गतं ग्रामस्येत्यादौ कर्मत्वस्य गतं ग्रामस्य चैत्रस्येत्यादौ च कर्तृत्वकर्म्मत्वयोः क्रियायां कथमन्वयः निष्ठाद्यन्यकृदन्तस्यैव धातोरर्थे कर्तृत्वाद्यन्वयं प्रति षष्ठ्यास्तन्त्रत्वादत आह।

द्वितीययेव कर्म्मत्वं कर्तृत्वं वा तृतीयया।
षष्ठ्यापि बोध्यते भावक्तान्तधात्वर्थधर्म्मिणि।

भावक्तान्तधातोरर्थे कर्म्मत्वस्य कर्तृत्वस्य वान्वये द्वितीयादिवत् षष्ठ्यापि तन्त्रम् उभयथैव प्रयोगात् सर्व्वत्रैव क्तार्थ्यतावच्छेदकसङ्को चान्न व्यभिचारः।

करणत्वादेरनुक्तताप्रयोजिकाः सुपः संक्षेपेणाह।

तृतीया च चतुर्थी च पञ्चमी सप्तमी तथा।
धात्वर्थे करणत्वादेर्बोधिकोत्सर्गतो मता।

शतेन शताय वा परिक्रीणीतइत्यादौ चतुर्थ्याः सर्पिषा सर्पिषो वा पूर्णः फलेन फलस्य वा तृप्तइत्यादौ च षष्ठ्याः करणत्वे दास्यै दास्या वा सम्प्रयच्छते मालामित्यादौ च तृतीयायाः सम्प्रदानत्वे विधानादुक्तमुत्सर्गतइति।

कारकार्थां सुपं निरूप्य तदन्यार्थां निर्व्वक्ति।

यत्सुपो यादृशार्थो न प्रकारीभूय भासते।
धात्वर्थे तादृगर्थे सा कारकान्यार्थसुब्भवेत्।

प्रथमादीनां सप्तानां विभक्तीनामेकत्वादयोऽर्था न धात्वर्थे प्रकारी भूय भासन्ते परन्तु प्रकृत्यर्थे पाकइत्यादावपि सुबर्थसंख्या न धात्वर्थे प्रकारः परन्तु पचनादिस्वरूपे नामार्थइत्युक्तप्रायं समासनिविष्टस्य धातोरर्थे इति वा वक्तव्यं नहि ग्रामगतइत्यादौ धात्वर्थे कर्म्मत्वादिरिवैकत्वादिरपि सुबर्थः प्रकारः अतएव प्रासादात् प्रेक्षते इत्यादौ ल्यबर्थस्य धात्वर्थे प्रकारत्वेऽपि तदर्थकपञ्चम्यां नाव्याप्तिः प्रासादप्रेक्षक इत्यादौ समासनिविष्टस्य धातोरर्थे ल्यबर्थस्यारोहणोत्तरत्वादेर प्रकारत्वात् शलाकापरीत्यादौ समासनिविष्टस्य नाम्नोऽर्थे प्रकारीभूत मप्येकत्वादिकं न धातोरर्थे। न च कारकविभक्तेरपि तदन्यार्थकत्वादतिप्रसक्तिः उपधेयसङ्करेऽप्युपाधेरसाङ्कर्य्यात्। चैत्र व्रजेत्यादौ एकत्वादिसंख्यावत् सम्बोध्यत्वमपि प्रथमार्थः तच्च क्रियाकरणाय वक्त्रभिप्रेतत्वं वक्तृनिष्ठविलक्षणबोधविशेष्यत्वं वा तथाच तादृशसम्बोध्यत्ववांश्चैत्रोऽनुमतव्रजनवानित्याकारस्तत्र बोधः संख्यातिरिक्तसुबर्थस्य प्रकृत्यर्थविशेष्यत्वानियमात्। कश्चिन् तुष्टो व्रजेत्यादौ तु कश्चिएव तुष्टस्याभेदो भासते नतु तुष्टे कश्चिणः प्रकृत्यर्थमुख्यविशेष्यकएव स्वार्थसम्बोध्यत्वस्यान्वये सम्बुद्धिसुपः सामर्थ्यात् अन्यथा छत्री दण्डीत्यत्रेव कश्चिन् दण्डिन्नित्यत्रापि छत्रिदण्डिनोरभेदबोधापत्तेः तदुपदुक्तस्य नाम्नः समानविभक्तिकत्वस्याविशिष्टत्वात् छत्री तुष्टो व्रजतु इतिवत् कश्चिन् दण्डी व्रजतु इत्यपि प्रयोगापाताच्च। हे चैत्रेत्यादौ तु सम्भेदेनान्यतरवैयर्थ्यम्। सुभिक्षामात नैतत्ते विचित्रं चित्रयोधिनइत्यादौ सम्बोध्यत्वमिव प्रशंस्यत्वमपि सम्बुद्धिसुपामर्थः

तत्रैव मातृकस्य ऋकारादेरकारोद्देशात् । धृतिः स्वाहेत्यादौ प्रथमादेश्चतुर्थ्यनादेशे तस्या एव उद्देश्यत्वमर्थः ।

दक्षिणेन ग्राममुत्तरेण पन्थानमित्यादौ एनप्रत्ययान्तस्य योगे ग्रामस्यादूरदक्षिणदिशीत्याद्याकारिका धीः दक्षिणोत्तराभ्यामदूरे एनोऽपञ्चम्या इत्यनुशासनात् । तत्रागारं धनपपतिगृहादुत्तरेणास्मदीयमित्यादौ तु क्वचिदपवादविषयेऽप्युत्सर्ग इति न्यायात् दिगर्थयोगित्वात् पञ्चम्यपि । वृक्षमभि प्रति पर्य्यनु वा द्योतते विद्युदित्यादावभ्यादेः कर्म्मप्रवचनीयस्य लक्ष्यीकृत्येत्यर्थः तेन वृक्षं लक्षीकृत्याश्रित्य प्रकाशते विद्युदित्येवं वाक्यार्थ इत्याश्रितत्वान्वयि निरूपितत्वमेव तत्र द्वितीयया बोध्यते । अभ्यादेर्लक्षणाद्यर्थे वृक्षादेरन्वयधियं प्रत्येव वा तदर्थकपदोत्तरं द्वितीयापेक्षिता प्राज्ञं प्रतिभाऽयमर्थः प्राज्ञं प्रतिभाय वर्त्तते इत्यादौ प्रतिभादेस्त्वरया स्फुरणमर्थः न तु प्रतेर्लक्षीकरणं उपसर्गत्वातो डस्य क्त्वा ल्यपश्च विधानानुपपत्तेः परन्तु प्रतिभादेर्योगे षष्ठ्येव द्वितीययापि तदर्थः सम्बन्धोऽनुभाव्यते षष्ठ्यर्थे द्वितीया वा प्रतिभादेरित्यनुशिष्टेः तेन प्राज्ञस्य या प्रतिभा झटितिस्फूर्त्तिस्तद्विषयतावानयमर्थ इत्येवं तत्र बोधः । वृक्षं वृक्षमभि परि प्रत्यनु वा वायसा इति वीप्सास्थलेऽपि प्रतिवृक्षवृत्तयो वायसा इत्यर्थः । पितरमभि परि प्रत्यनु वा चेत्र इत्यत्र इत्थम्भूतार्थकै रभ्यादिभिः पितरीत्थम्भूतश्चैत्र इत्यन्वयबोधः । यन्मां प्रति परि वा तद्देहीत्यादौ प्रतिपरिभ्यामुपस्थिते भागे मत्सम्बन्धो द्वितीयया बोध्यते तेन योमदीयो भागस्तं देहीत्येवं तत्र बोधः । कारीरीमनु वृष्टिरित्यत्रानुशब्दस्य हेतुतावाचित्वात् । कारीरीनिष्ठहेतुताका वृष्टिरित्यर्थः । कारीरी यज्ञविशेषः । शूरमनुयुध्यन्ते दरिद्रमनुयाचते इत्यादौ च तस्य सहार्थत्वात् शूरेण सह युध्यन्ते इत्यादिरर्थः । उपार्ज्जनं क्षत्रियाः अन देवं दानवा इत्यादावपानभ्यां हीनबल-

स्याभिधानात् क्षत्रिया अर्जुनाद्धीनबला इत्याकारकस्तत्र बोधः। तदुक्तमभियुक्तैः। लक्षणवीप्सेत्थम्भावेष्वभि भागे परिप्रती। अनुरेषु सहार्थे च हीने उपश्च कथ्यते। नरमधि गुणदोषयो श्चिन्ता निशार्द्धं वा पूजा समयमधि वा यस्तु पठतीत्यादिप्रयोगात् लक्ष्यीकृत्यार्थकस्याधिशब्दस्यापि योगे द्वितीयामिच्छन्ति। समया निकषा चाव्ययं सामीप्यार्थकं तेन तद्योगे समया ग्राममित्यादौ ग्रामस्य समीपमित्यन्वये ग्रामावधिकत्वं तत्प्रतियोगिकत्वं वा द्विती यया बोध्यते। विद्यामन्तरेणान्तरा विना वा नरः शोच्यइत्यादौ ऋतेप्रभृत्यव्ययानामत्यन्ताभावस्तद्वैशिष्ट्यं वार्थइति विद्यात्यन्ताभाव वान्नरः शोच्यइत्यन्वयेऽत्यन्ताभावेऽन्वितं प्रतियोगित्वम्। गगणमन्तरे द्रव्यं न शब्दवदित्यादौ तूक्ताव्ययानां भेदोऽप्यर्थः तेन गगणभिन्न द्रव्यं न शब्दवदित्याकारकस्तत्र बोधः। हा पुत्रमित्यत्र हाव्ययस्यार्थे कष्टे द्वितीयान्तेन पुत्रसमवेतत्वं बोध्यते धिक् पुत्रमित्यत्र धिगर्थ गर्हायां पुत्रविषयित्वम्। हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप सइत्यादौ स्वगतमेव कष्टं हाशब्देन बोध्यते न तु पित्रादिगतं पुत्रस्य धिक्कारइत्यादौ तु न धिगित्यस्यार्थे पुत्राद्यन्वयः किन्तु धिक्कारादि पदस्य। एवं पुत्रेण विनाकृतस्तेनइत्यादौ न विनेत्यस्यार्थे परन्तु विनाकृतपदस्य। विनाव्ययस्य योगे द्वितीयामिव तृतीयापञ्चम्यावपी- च्छन्ति घटेन विना घटाद्विना इत्यपि प्रयुक्तेः। उपर्युपरि गृहं पताकेत्यत्र द्विरुक्तस्योपरिनिपातस्य सन्निकृष्टोर्द्धभागार्थकत्वेन गृहस्य सन्निकृष्टोर्द्धभागे पताकेत्यर्थः। अधोऽधोमेघमम्भः अध्यधि शिखरं घनइत्यत्राप्युक्तदिशैवान्वयः द्विरुपर्य्यधोऽध्रीनां सामीप्यवाचितायां तद्योगे द्वितीयानुशिष्टेः। सर्व्वेषां मद्यममानामुपर्युपरि वर्त्तते। अत्राता शरणं यातं यात्यधोऽधश्च दुर्गतेरित्यादौ द्विरुक्तस्योपर्य्यादे र्न सामीप्यमर्थः परन्त्वतिशयः। गृहमभितः पुरतरुणा इत्यत्रा-

भितःशब्दस्य खण्डशोवृत्त्या सर्व्वावच्छेदेनेत्यर्थः तदेकदेशे च सर्व्वस्मिन् गृहावयवत्वं द्वितीययानुभाव्यते। गृहं परितः सर्व्वत उभयतो वा इत्यत्राप्युक्तरीत्यैवान्वयः। नदीं यावन्मम पुरं गृहं यावद्वनं तवेत्यत्र यावदित्यव्ययस्य मर्य्यादा अभिविधिश्च क्रमेणार्थस्तेन नदीपर्य्यन्तं मत्पुरं गृहाभिव्याप्तं त्वद्वनमित्याकारस्तत्र बोधः तत्पर्य्यन्तत्वञ्च तदवधिकविप्रकर्षशून्यत्वे सति तत्सन्निकृष्टत्वं तदभिव्याप्तत्वमपि प्रकृते तदारम्भकयावदवयवावच्छेदेन तत्संयुक्तत्वम्। मासं सुप्यते क्रोशं गम्यते इत्यादौ कालाध्वनोरत्यन्तसंयोगे इत्यनुशिष्टे द्वितीयया अभिव्याप्तिरुच्यते न मासाभिव्याप्तः स्वापः क्रोशाभिव्याप्तगतेः कर्म्मत्वमित्यादिकस्तत्र बोधः तत्र मासादेरभिव्याप्तिर्मासवृत्त्यधिकरणतावच्छेदकीभूतयावत्त्वपर्य्याप्त्यधिकरणकालवृत्तित्वं तथाविधयत्किञ्चिद्यावत्त्वव्यापकत्वं वा क्रोशादेस्तु क्रोशगम्यदेशवृत्त्यधिकरणतावच्छेदकीभूतयावत्वपर्य्याप्त्यधिकरणदेशवृत्तित्वं तथाविधयत्किञ्चिद्यावत्वव्यापकं वेति मन्तव्यम्।

अक्ष्णा काणइत्यत्र चक्षुःशून्यगोलकवत्त्वे सति सचक्षुर्गोलकवान् काणः प्रसन्नान्धस्य काणत्वाभावात् गोलकार्थकाक्षिपदोत्तरतृतीयायास्तु विकृतत्वं वृत्तिमत्त्वञ्चार्थः तत्राद्यं सम्बोध्यत्वमिव प्रकृत्यर्थविशेषणविधयान्वितं काणत्वैकदेशे च चक्षुःशून्यत्वे प्रकृत्यर्थनिरूपितं चरमं तथाच विकृतगोलकवृत्तित्वविशिष्टं यच्चक्षुःशून्यत्वं तद्वद्गोलकवान् सचक्षुष्कइत्याकारस्तत्र बोधः पाणिनेरपि येनाङ्गविकारइति सूत्रस्योक्तार्थएव तात्पर्य्यात्। विकृतत्वन्तु विरूपत्वमयथासंस्थानवत्त्वपर्य्यवसितं कुत्सितेऽङ्गे इति कलापस्यैकवाक्यत्वात्। यद्वा स्वाधिष्ठानवृत्तित्वसम्बन्धेन चक्षुःशून्यो यश्चक्षुर्विनाशस्तद्वान् सचक्षुष्कः काणपदस्यार्थस्तादृशे विनाशे अक्षिपदस्यार्थस्य गोलकस्य विकारप्रयुक्तत्वं तृतीयया बोध्यते तथाच गोलकविकारप्रयुक्तस्य निरुक्तसम्बन्धेन

चक्षुःशून्यस्य चक्षुर्नाशस्याश्रयः सचक्षुष्कइत्याकारस्तत्र बोधः विकारस्तु कनीनिकाद्यपगमरूपोग्राह्यः। पादेन खञ्ज इत्यत्र सहजसंस्थान शून्यचरणवान् खञ्जस्तथाच तत्रापुरुक्तरीत्या विकृतपादवृत्तित्वविशिष्टं यत्सहजसंस्थानशून्यत्वं तद्वच्चरणवान् चरणविकारप्रयुक्तस्य यथोचितसंस्थानवैधुर्य्यस्याश्रयीभूतचरणवानिति वा तत्र बोधः। श्रोत्रेण बधिरः कायेन वामनइत्यादावपुरुक्तैव रीतिः अङ्गपदस्य प्रयत्नावच्छेदकोपलक्षकत्वादिति वदन्ति। मुखेन त्रिलोचनः कायेन दशवक्त्रइत्यादौ तु यदि लोचनत्रयादिमत्तया मुखादिवैकृत्यमवबुध्यते तदा विकारएव तृतीया नो चेद्वैशिष्ट्यमात्रे जटाभिस्तापस इत्यादितोजटाविशिष्टस्तापसइत्याद्यनुभवेन विशेषणेऽनुशिष्टतृतीयायावैशिष्ट्यवाचितायां पर्य्यवसितेः। वैशिष्ट्यञ्चात्र नाधिकरणत्वं सम्बन्धितामात्रं वा मेयत्वेन घटइत्यपि प्रयोगापत्तेः परन्त्वतद्व्यावृत्तत्वं तथाच अजटव्यावृत्तिमांस्तापसइत्याकारस्तत्र फलितार्थः। इदन्तु बोध्यं प्रकृत्यर्थस्य निरुक्तवैशिष्ट्यं यदि वर्त्तमानतया प्रत्याय्यते तदेदं विशेषणत्वेन यदि चावर्त्तमानत्वेन तदोपलक्षणत्वेन व्यपदिश्यते यथा शिखया परिव्राजकोवर्त्तते इत्यादौ यथावा गुरुणा टीका कुरुणा क्षेत्रमित्यादौ।

पुत्रेण सहागतः सूपेन सार्द्धं भुक्तः चक्रेण शाकं दण्डेन जनितः पुत्रेण समं मित्राय दानमित्यादौ स्वान्वयितत्तत्कर्तृत्वादिकारकावच्छिन्नायाः समभिव्याहृतक्रियायाः समानकालीनत्वरूपं साहित्यं सहाद्यव्ययस्यार्थः तदेकदेशे च कर्तृत्वादिकारके स्वप्रकृत्यर्थस्याधेयत्वं तृतीयया बोध्यते तेन पुत्रवृत्तिकर्तृताकगतिकालीनगतिकर्तृतावान् सूपनिष्ठकर्म्मताकभोजनकालीनभोजनकर्म्मतावान् चक्रनिष्ठकरणताकोत्पत्तिकालीनदण्डनिष्ठकरणताकोत्पत्तिमान् पुत्रसम्प्रदानताकदानकालीनं मित्रसम्प्रदानताकं दानमित्याकारस्तत्र बोधः तुल्यवदेक

क्रियान्वयित्वं साहित्यमिति प्रवादस्याप्येककारकान्वयित्वेन तुल्ययोरेकजातीयक्रिययोरन्वयित्वं समानकालीनत्वमित्यत्र तात्पर्य्यात् पुत्रेण सहागतइत्यत्र समभिव्याहृतापि गतिक्रिया न कर्म्मत्वादिनान्वयिनी किन्तु निष्ठार्थकर्त्तृत्वेनेति पुत्रकर्म्मकत्वाद्यवच्छिन्नगतिकालीनत्वस्य न तत्रावगमः । पुत्रेण सह गतं चैत्रेणेत्यादावपि तृतीयार्थएव कर्त्तृत्वे गतिक्रियान्विता । यत्तु पुत्रेण सहागतइत्यत्र समभिव्याहृतगत्यादिक्रियाकालीनत्वमेव सहाद्यव्ययस्यार्थस्तन्निविष्टगतौ पुत्रादिपदोत्तरतृतीयालब्धस्य पुत्रनिष्ठकर्त्तृत्वस्यान्वयादेव पुत्रकर्त्तृकगतेर्लाभादिति तन्न तृतीयार्थकर्त्तृत्वस्य धात्वर्थएव साकाङ्क्षत्वेन सहाद्यर्थे तदन्वयस्यानुत्पन्नत्वात् । पुत्रेण समं मित्रं प्राप्तश्चैत्रइत्यादौ तु तात्पर्य्यवशात् पुत्रकर्त्तृकमित्रप्राप्तिकालीनमित्रप्राप्तिकर्त्तृत्वं कदाचिच्च पुत्रकर्म्मकप्राप्तिकालीनमित्रकर्म्मकप्राप्तिकर्त्तृत्वं चैत्रस्य बुध्यते समभिव्याहृतायाः प्राप्त्यादिक्रियायाः कर्त्तृत्वइव कर्म्मत्वेऽप्यन्वयितया तत्प्रत्येकावच्छिन्नप्राप्त्यादिकालीनत्वबोधने सहाद्यव्ययस्य सामर्थ्य प्रच्यवात् । नचान्यकर्त्तृकधनप्राप्तिदशायां ग्रामप्राप्तिमत्यपि मैत्रे धनेन सहायं ग्रामं प्राप्तइतिप्रयोगापत्तिस्तस्य धनकर्म्मकप्राप्तिकालीनग्रामकर्म्मकप्राप्तिमत्त्वानपायादितिवाच्यं घटत्वेन सह घटमवगाहते बुद्धिरित्यादौ क्वचित् कर्त्तृत्वावच्छिन्नायाः समानकर्म्मकत्वस्येव सर्व्वत्र कर्म्मत्वावच्छिन्नायाः समभिव्याहृतक्रियायाः समानकालीनत्वस्येव समानकर्त्तृकत्वस्यापि सहार्थे निवेश्यत्वात् । यत्तु स्वान्वयिकर्म्मत्वाद्यवच्छिन्ना समभिव्याहृतक्रियैव सर्व्वत्र सहाद्यव्ययस्यार्थस्तस्याश्च समानकालीनत्वैककर्त्तृत्वोभयसम्बन्धेनैव समभिव्याहृतक्रियायामन्वयान्नोक्तदोषइति तत्तुच्छं प्राकस्य भोजनं न सुधया सहेत्यादिवाक्यानां समानकर्त्तृकत्वादिसम्बन्धेन सुधाकर्म्मकभोजनाद्यभावस्य बोधकतायामप्रामाण्यापत्तेः वृत्त्यनियामकसम्बन्धावच्छेद्य

प्रतियोगित्वाप्रसिद्धेः। पटः पटत्वेन सह भासते इत्यादौ पटत्व निष्ठविषयतायाः समानकालीनत्वमिव समानप्रतियोगिकत्वमप्यर्थः विभिन्नज्ञानीयविषयतायां तादृशाप्रयोगात्। पुत्रेण सह गतिरित्यादौ कर्तृत्वाद्यन्वयिक्रियासमभिव्याहारविरहेण शक्त्या पुत्रकर्तृकगति कालीनत्वादेर्बोधयितुमशक्यत्वादनन्यगत्या सहादेस्तादृशार्थे निरूढ़ लक्षणा पुत्रेण सह स्थूल इत्यादावपि समभिव्याहृतनामार्थतावच्छेदकी भूतस्थौल्यादिकालीनत्वे तथाच पुत्रवृत्तिस्थौल्यकालीनस्थौल्यवानि- त्याकारस्तत्र बोधः पत्न्या सहाग्निमादध्यादित्यादौ पत्नीकर्तृकस्या- ग्न्याधानस्यालीकत्वेन तत्समानकालीनत्वस्य प्रमापयितुमशक्यत्वात् सामानाधिकरण्यपर्य्यवसितं सद्भावमात्रं तत्र सहस्यार्थः यथा घटेन सह पटवद्गृहमित्यादौ। एतेन यत्कर्त्तव्यं तदनया सहेत्यादिको विधिरपि व्याख्यातः। पुत्रेणागत इत्यादौ विनापि सहादिप्रयोगं तदर्थस्य प्रतीतेस्तृतीयायाएव तत्र कर्तृकत्वाद्यवच्छिन्नगतिकालीन- त्वादिकमर्थस्तन्निविष्टे च कर्तृत्वादौ प्रकृत्यर्थस्य पुत्रादेराधेयत्वे- नान्वयः।

धनेन कुलं दण्डेन घट इत्यादौ व्यापारगर्भस्य करणत्वस्याप्रती- तावपि हेतुत्वप्रत्ययादभिघातेन क्रियेत्यादौ करणत्वस्य बाधाच्च तत्र जनकत्वरूपं हेतुत्वमेव तृतीयार्थस्तथाच धननिष्ठहेतुताकं कुल- मित्याकारस्तत्र बोधः। नच गोत्वं न धनेनेतिवत् कुलं न धनेनेत्यपि स्यात् निरूपकत्वादेः सम्बन्धस्य वृत्त्यनियामकतया तदवच्छिन्नाभावस्य प्रत्येतुमशक्यत्वादिति वाच्यं कुले धनस्य हेतुत्वं गवि द्विजस्य सम्प्र- दानत्वं पतने वृक्षस्यापादानत्वं वह्नौ धूमस्य ज्ञापकत्वं धने चैत्रस्य स्वामित्वं घटे भूतलस्याधिकरणत्वमित्यादिप्रतीत्या निरूपकत्वस्यापि सम्बन्धस्य क्वचिद्वृत्तिनियामकत्वात् नहि कुलादिनिरूपितं हेतुत्वा- दिकमेव धनादिनिष्ठत्वेन तासु भासते। धनादिनिष्ठहेतुत्वादेः

सम्बन्धविशेषेण कुलादिवृत्तितायाअप्यनुभावकत्वेनैकशेषस्य दुष्कर-त्वात् वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वे पतनमिदं वृक्षान्नतु गृहात् गमनमिदं ग्रामस्य नतु गृहस्येत्यादौ पञ्चम्याद्यर्थस्य विभागादेरनुकूलत्वसम्बन्धावच्छिन्नाभावस्य प्रत्ययायोगाच्च तत्र पञ्च-म्यादिलक्षितस्य विभागाद्यनुकूलत्वस्यैव नञा विरहबोधने गोत्वं न धनेनेत्यादावपि तृतीयादिलक्षणालब्धस्य धनादिनिष्ठहेतुतानिरूपक त्वादेरभावस्य नञा बोधसम्भवात् अस्तु वा हेतुत्वादिविहित तृती-यादेर्जन्यत्वसम्प्रदेयत्वादिकमेवार्थस्तथाच कुलं धनजन्यतावदित्याकार एवास्तु तत्र बोधः। धूमेन वह्निरगुत्वेन द्रव्यत्वमित्यादौ तु वह्न्यादे-र्धूमाद्यजन्यत्वेन धूमादिनिष्ठजनकत्वानिरूपकत्वादनायत्या ज्ञापकत्व लक्षणं गौणमेव हेतुत्वं तत्र तृतीयार्थस्तेन धूमनिष्ठं यज्ज्ञापकत्वं तद्वान् वह्निरित्याकारस्तत्र बोधस्तद्वत्त्वञ्च स्वप्रतियोगिविषयत्व सम्बन्धेन ग्राह्यम्। नच धूमादेर्वह्न्यादिज्ञानजनकत्वं बाधितं लिङ्ग-स्यानुमितावहेतुत्वादिवाच्यं वह्न्याद्यवगाहिनि स्वसाक्षात्कारे विषय विधया स्वनिष्ठत्वेनाभावप्रत्यक्षे च सन्निकर्षघटकतया धूमादेर्जनकत्व सम्भवात् धूमेनेत्यत्र धूमपदस्य धूमज्ञानेऽगुत्वेनेत्यादौच त्वादिप्रत्य-यस्य स्वार्थज्ञाने लक्षणया तन्निष्ठत्वेन ज्ञापकत्वसुक्तस्थले तृतीयया बोध्यते इतितुचिन्तामणिकृतः। यद्यप्युक्तदिशा व्याप्तिभ्रमेण च वह्न्यादेरपि धूमादिज्ञापकत्वमस्त्यतो वह्निना धूमवानित्यादेरपि प्रमाण्यापत्तिस्तथापि तत्तदर्थकपदोत्तरतृतीयायास्तत्तदर्थव्यापक-निष्ठेनैव स्वप्रतियोगिविषयत्वादिसम्बन्धेन तत्तदर्थनिष्ठज्ञापकत्वादेर-न्वयबोधं प्रतिहेतुत्वात् धूमादेश्च वह्न्याद्यव्यापकत्वात् न तथा नच धूमादेरपि द्रव्यत्वादिरूपेण वह्न्यादिव्यापकत्वादुक्तदोषतादवस्थ्यंत्र धूमत्वावच्छिन्नस्य वह्निव्यापकत्वस्य संसर्गत्वे च धूमेन वह्निनेत्यादेर-प्रामाण्यापत्तिर्निरुक्तसंसर्गस्याप्रसिद्ध्या तेन वह्निनिष्ठज्ञापकत्वाभा-

वस्य नञा बोधयितुमशक्यत्वादिति वाच्यं धूमत्वादिविशिष्टे तृतीयार्थस्य वह्न्यादिज्ञापकत्वस्य बोधने विशिष्टप्रतियोग्यनधिकरणवह्न्यादिमन्निष्ठाभावीयधूमत्वान्यधूमवृत्तिधर्म्मानवच्छिन्नप्रतियोगित्वस्य धूमत्वावच्छिन्नप्रतियोगित्वस्य च द्वित्वावच्छिन्नाभावरूपायाएव वह्न्यादिव्यापकतायाः संसर्गत्वेन घटादाविव तादृशव्यापकतायाः सुप्रसिद्धत्वान्निरुक्तप्रतियोगितादृयोरभावस्य साध्यताघटकसम्बन्धावच्छिन्न प्रतियोगितानिरूपितेनैव स्वरूपसम्बन्धेन ग्राह्यः तेन व्यधिकरणसम्बन्धद्वयावच्छिन्नयोर्वह्नित्वावच्छिन्नप्रतियोगितयोर्वह्नौ सत्त्वेऽपि वह्निर्धूमेनेत्यादेर्नायोग्यत्वमिति युक्तमुत्पश्यामः । यत्तु वह्न्यादिपदोत्तरयोस्तृतीयापञ्चम्योर्वह्न्यादिव्यापकतावच्छेदकरूपावच्छिन्नं वह्न्यादिज्ञाप्यत्वमेवार्थस्तस्य च धूमत्वादिविशिष्टे धूमत्वाद्यवच्छिन्नप्रकारतानिरूपितस्वरूपसम्बन्धेनैव साकाङ्क्षत्वात् वह्निना धूमइत्यादिकोन योग्यः किन्तु वह्निना न धूमइत्यादिरेव वह्न्यादिव्यापकतावच्छेदकीभूतरूपावच्छिन्नस्य वह्न्यादिजन्यज्ञानविषयत्वस्य धूमत्वादिविशिष्टे धूमत्वाद्यवच्छिन्नप्रकारतानिरूपितस्वरूपसम्बन्धेनासत्त्वात् इति तच्चिन्त्यं वह्निना न धूमइत्यादौ वह्न्यादिव्यापकत्वस्य प्रकारतया भानेऽनुभवविरोधादिति दिक् ।

धूमादिनिष्ठपञ्चम्यर्थज्ञापकत्वादिविशिष्टस्य च वह्न्यादेर्धूमादिमदनुयोगिकेनैव तद्व्यापकताघटकसंयोगादिसम्बन्धेन मतुबाद्यर्थे साकाङ्क्षत्वादयःपिण्डं धूमेन वह्निमदित्यादिकोन प्रयोगः । दण्डाद्घटो धूमाद्वह्निरित्यादौ च हेतुतार्थिकायाः पञ्चम्याअप्युक्तदिशैवान्वयो द्रष्टव्यः । घटेन शून्योविधुरोरहितइत्यादौ घटत्वाद्यवच्छिन्नं प्रतियोगित्वमेव शून्यत्वान्वयि तृतीयार्थः । प्रकृत्या रूपणः स्वभावेन सरल इत्यादौ प्रकृत्यादिपदं यावदाश्रयभाविधर्म्मपरं तृतीयार्थस्वाभेदस्तादात्म्यं वा प्रकृत्यादिभ्यसेति सूत्रेण तत्रैव तद्विधानादेवञ्च

स्वाश्रयाधिकरणयावत्कालवृत्तिकार्य्यवानित्याकारस्तत्र बोधः । सुरथोनाम राजेत्यत्र सुरथः सुरथशब्दवाच्यस्तदेकदेशे च शब्दे लुप्ततृतीयाकेन संज्ञार्थकनामेत्यव्ययेन प्राप्तस्य संज्ञातादात्म्यस्यान्वयस्तेन संज्ञातादात्म्यवत् सुरथशब्दवाच्योराजेत्यर्थः । नामेत्यव्ययार्थः सम्भाव्यत्वं तच्च सुरथेऽन्वितमिति कश्चित् । नाम्ना चन्द्रमुखीत्यादौ अमव्ययेनापि नामपदेनोक्तादिशेवान्वयः । धान्येन धनं घटत्वेन साजात्यं वाजपेयेन यजनमित्यादावपि धनाद्यन्वयी धान्यादेरभेदएव तृतीयार्थस्तत्र धूमेन वह्निरित्यादाविव ज्ञापकत्वं तथेत्यपि वदन्ति । जात्या ब्राह्मणइत्यादौ ब्राह्मणपदस्यादृष्टविशेषप्रयोज्यधर्म्मवत्परतया तादृशधर्म्मएव जात्यभेदस्यान्वयः स्वरूपतउपस्थिते ब्राह्मणे तदन्वयायोगात् । घटत्वेन जन्यत्वं प्रकारत्वमित्यादौ अवच्छेदकत्वमवच्छेद्यत्वं वा तृतीयार्थः । चैत्रेन चैत्रस्य वा तुल्यइत्यादौ भिन्नत्वे सति धर्म्मवत्त्वं तुल्यता तन्निविष्टे च भेदे तृतीयाद्यर्थस्य प्रतियोगित्वस्य धर्म्मे चाधेयत्वस्यान्वयाच्चैत्रत्वावच्छिन्नान्यत्वे सति चैत्रवृत्तिधर्म्मवानित्यर्थः । चैत्रेन चैत्रस्य वा सादृश्यमित्यादावपि तथैवान्वयः । तुलोपमयोर्योगे तृतीया नेष्यतइति पाणिनीयाः । तुलामधारेण शरद्गनेनकेनोपमा भवतु तेऽस्य पराक्रमस्य इत्यादिकस्तु दृश्यते प्रयोगः । गजेन तुल्यगमनोवृषस्य सदृशेक्षणः इत्यादौ तु गत्यादिकं तृतीयार्थः तेन गजगतितुल्यगतिमान् वृषेक्षणतुल्येक्षणवानित्याकारस्तत्र बोधः । भोगेषु प्रसितः उत्सुकः इत्यादौ सप्तम्याइव भोगैः प्रसितः उत्सुकः इत्यादौ तृतीयाया अपि विषयत्वलक्षणं गौणमधिकरणत्वमर्थस्तेन भोगेष्वनुरक्तइत्येवं तत्र बोधः । पुष्ये स्नायादित्यादौ पुष्यादितः कालार्थकतद्धितस्य लुकि ततः सप्तमीवत् पुष्येण स्नायादित्यादावपि तादृशार्थकतृतीयया अधिकरणत्वं बोध्यते तथाच पुष्ययुक्तकाले स्नायादित्येवं बोधः । पश्य रूपमित्यादौ रूपादेः पश्यवृत्तित्वं

प्रतीयते न तु तद्युक्तकालवृत्तित्वम् अतः पुष्पेण रूपमित्यादिकोन प्रयोगः।

मन्यतेः कर्म्मण्यस्मादयुक्तैवापकृष्टता। नञ्बाध्यास्मात् द्वितीयावच्चतुर्थी प्राणिवर्ज्जिताल् इति भाष्यस्मृतेमन्यतेरनुक्तकर्म्मणि यदवधिकापकृष्टत्वं नञा बोध्यं तत्र द्वितीयावच्चतुर्थ्यपि प्रमाणं तेन न त्वा तृणं मन्ये इत्यादाविव न त्वा तृणाय मन्ये इत्यादावपि त्वां तृणादपकृष्टं मन्ये इत्यर्थः। द्रोणिर्मर्य्यादया हीनो ब्राह्मणोनैषदुर्म्मतिरित्यादावसमस्तस्यापि नञोऽपकर्षप्रत्यायकत्वात्। न त्वं कीटोमतो मयेत्यादौ मन्यतेः कर्म्मापि त्वदादिकं नानुक्तम्। जारजं न द्विजं मन्ये इत्यादौ जारजादेर्द्विजात्यपकृष्टत्वं नायुक्तमबाधितत्वात्। न नावं मन्यतेः योऽश्वं न काकं मन्यते शुकम्। नान्नं स मन्यते सर्पिर्न शृगालं स मानुषमित्यादौ तु नावाद्याः प्राणिनएव नौकाकान्नशृगालानां प्राणित्वं शाब्दिकस्मृतेः। न त्वणाय शुवां मन्ये न त्वा तृणाभ्यां मन्ये इत्यादिकस्तु न प्रयोगः। भेदस्येवापकर्षस्याप्यसमस्तनञा बोधने प्रतियोग्यनुयोगिनोः समानवचनस्य तन्त्रत्वात्। सदृशत्वं तृणादीनां मन्यकर्म्मण्यनुक्तके। द्वितीयावच्चतुर्थ्यापि बोध्यते बाधितं यदीत्यापिशलेर्मतं तेन तृणाय त्वा मन्यते इत्यादेस्तृणसदृशं त्वां मन्यते इत्यर्थः। तन्मतएव तृणाय मत्वा रघुनन्दनोऽथ बाणेन रक्षः प्रधनान्निरास्थदिति भट्टिः। प्रधनं युद्धम्।

पुष्पमिदं विष्णवे नमइत्यस्य विष्णूद्देश्यकमन्त्रकरणत्यागस्य कर्म्मेदं पुष्पमित्यर्थस्तत्र चतुर्थ्या प्रीत्युद्देश्यकत्वं तदिच्छाधीनत्वरूपं नमःपदार्थे मन्त्रकरणकत्यागे बोध्यते प्रकृत्यर्थस्य च विष्ण्वादेः प्रीतौ तदिच्छायां वान्वयः ब्राह्मणाद्युद्देश्यकस्य च गवादित्यागस्य मन्त्रकरणत्वे प्रमाणाभावात् गौर्ब्राह्मणाय नमइत्यादिकोन प्रयोगः। ब्राह्मणेभ्यो नमो नित्यमित्यादौ तु नमःपदार्थानतिरेवेति तत्र विषयत्वं

पदाख्याताभ्यमेकमेव निरुक्तं ह्यस्तनत्वं बोध्यते समभेदन्यायात् अन्यथा पक्ता पचतीत्यत्रैव निराकाङ्क्षतापत्तेः।

लुङं लक्षयति।

हन्तेः कृतवधेरर्थे यातीतत्वस्य बोधिका।
सिजन्तस्याथवा धातोस्तादृशी तिङ् लुङोच्यते।

कृतवधादेशस्य हन्तेरर्थे किम्वा सिजन्तस्य धातोरर्थे यातीतत्वस्य बोधिका तादृशी तिङ् लुङ् लुङ्शब्देनोच्यते। जघान हन्तिस्म इत्यादौ लिङ्लङादिको हन्तेरर्थेऽतीतत्वस्य बोधकोऽपि न कृतवधादेशस्य नवा सिजन्तस्य अवधीत् अवधिष्टां अवधिषुरित्यादौ तु लुङ् मात्रं तथा बध्यात् बध्यास्तां बध्यासुरीत्यादौ कृतवधादेशस्य तस्यार्थे स्वार्थानुभाविकापि आशीर्नातीतत्वस्य बोधिका। अत्राप्यनुमतत्वह्यस्तनत्वाद्यनाकाङ्क्षितत्वेन विशेषणात् पच्यतां अपचत् अपचता मित्यादौ लोड़ाद्यतिप्रसङ्गः अत्रापाक्षीदित्यादौ अतीतः काल इव सन्निकृष्टमद्यतनत्वमपि लुङामर्थस्तेन वर्त्तमानध्वंसप्रतियोग्यद्यतनपाककृतिमान् इत्येवं तत्र बोधः। रीतिरुक्तैव।

लिटं लक्षयति।

द्विरुक्तभिन्नधात्वर्थे स्वार्थस्यान्वयबोधने।
या न योग्या तादृशी तिङ् लिट्पदेनाभिधीयते।

अशिश्रियत् अदुद्रुवदित्यादौ द्विरुक्तस्येव अपाक्षीदित्यादौ तदन्यस्यापि धातोरर्थे स्वार्थान्वयं लुङादयो बोधयन्ति लिटस्तु जघान जघ्नतुरित्यादौ द्विरुक्तस्यैव धातोरर्थे पिपक्षति पापच्यते इत्यादौ सनादयस्तादृशा अपि न तिङः तत्रापि प्रकृत्यर्थे वर्त्तमानत्वाद्यनाकाङ्क्षत्वेन विशेषणात् पचे पचावहे पचावह इत्यादौ न लड़ाद्यतिप्रसङ्गः।

काशास्त्वक्रे लोलूयामास ईक्षाम्बभूव इत्यादावाम इव कृञादेरप्यनुप्रयुक्तस्य पदसाधुतामात्रत्वादसम्भवापत्तेरन्यथा निर्व्वक्ति।

द्विरुक्तस्य यजेरर्थे चकास्तेराम्युतस्य वा।
या स्वार्थस्यान्वये हेतुः सा वा लिट् कथ्यते बुधैः।

जुहोतीत्यादौ द्विरुक्तस्य धातोरर्थे स्वार्थबोधकोऽपि लडादि र्न यजेरर्थे। चकास्तीत्यादौ चकासधातोरर्थे तादृगपि नामन्तस्य मनश्चचाल सुरभिमागआजगामइत्यादावतीतः कालइव धात्वर्थनिष्ठं परोक्षत्वमपि लिटोऽर्थः तच्चातीन्द्रियत्वं तेनातीतकालवृत्त्यतीन्द्रिय चलनवन्मन इत्याकारकस्तत्र बोधः। चैत्रस्तारु पपाचइत्यादौ तु लिङ्पस्थाप्यस्यापि परोक्षत्वस्य न पाकादावन्वयोऽयोग्यत्वात्। एतेन व्यातेने किरणावलीमुदयनइत्यादि व्याख्यातम् शेषं पूर्व्ववत्।

लुटं आशीर्लिङञ्च क्रमेण लक्षयति।

धात्वर्थे श्वस्तनत्वस्य बोधिका तिङ् लुङुच्यते।
आशीर्लिङाशंसनस्य भावित्वस्य च बोधिका।

श्वः पक्ष्यतीत्यादौ धात्वर्थे श्वस्तनत्वस्य बोधकमपि श्वःपदं न तिङ् लृडादयस्तु धात्वर्थे भावित्वमेव बोधयन्ति न श्वस्तनत्वमपि जीवतुभवानित्यादौ तु तुबादिकं आशंसनीयत्वस्य बोधकमपि न भावित्वस्य भावित्वस्य बोधकोऽपि लृड़ादि नाशंसनीयत्वस्य भूयात् भूयास्तामित्यादौ पुनरष्टादशैवाशीर्लिङः प्रकृत्यर्थस्याशंसां भावित्वञ्चानुभावयन्ति। अथ पाकगोचरैककृतिदशायामपि तद्गोचरा परकृतेरतीतत्वाद्भविष्यत्वाच्च तदानीमयं पपाच पक्ष्यतीत्यादिप्रयोग प्रसङ्गः पाककृतित्वावच्छेदेनातीतत्वादेरन्वयोपगमेन तद्वारणे तु पपाच पक्ष्यतीत्यादेरयोग्यत्वापत्तिः एतदवच्छेदेनातीतत्वभविष्यत्वयोबाधादिति चेत् न पाककृतित्वावच्छिन्नधर्म्मिकायां तत्तत्पाकगोचर कृतित्वावच्छेद्यस्वरूपसम्बन्धेनैवातीतत्वाद्यन्वयबुद्धौ पाकार्थकधातूत्तर लिटत्वादिना हेतुतयैव उक्तदोषव्युदासात् चुल्लीस्थाल्यारोपणादिकं हि न प्रत्येकं पाकपदार्थः किन्तु स्थाल्यारोपणाग्निनिवेशनतुषप्रक्षेपा-

द्यनुप्रस्फोटनपर्य्यन्त स्तत्तत्क्रियाकलाप एव । यदाह दुर्गः क्रियते इति क्रिया साच पूर्व्वापरीभूतावयवेति तथाच तावत्क्रियाकलापस्य प्रत्येकगोचरकृतेरतीतत्वभविष्यत्वयोर्बाधात् अवान्तरतुषप्रक्षेपादिदशायां पपाच पक्ष्यतीत्यादिको न प्रयोगः । नचैवं सूपपाकं निष्पाद्य तण्डुलं पचत्यपि पुंसि अयं पपाच इति स्यात् निष्पन्नपाकगोचरयावतकृतेरतीतत्वात् इति वाच्यमिष्टत्वात् तण्डुलं पपाचेत्यादिप्रयोगस्यैव तत्रायोग्यत्वात् अन्यथा सूपमपाक्षीदित्यादिप्रयोग स्तत्र कथं स्यात् । अतएव सम्प्रति सूपं पचत्यपि पुरुषे सूपकर्म्मकनिष्पन्नपाकगोचरकृतित्वावच्छेदेनातीतत्वमुपादाय सूपमपाक्षीदित्यादिकः प्रयोगो भवत्येव परन्त्वद्य सूपमपाक्षीदित्यादिरेव न तत्र प्रयोगः सूपकर्म्मकाद्यतनपाकगोचरकृतित्वावच्छेदेन अतीतत्वस्य बाधादिति युक्तमुत्पश्यामः ।

लृटं लृङञ्च लक्षयति ।

क्रियातिपाते कालस्य भाविनः प्राक्तनस्य च ।
वैशिष्ट्यबोधिका या तिङ् लृट् च लृङ् च क्रमादिमे ।

या तिङ् क्रियाया धात्वर्थस्यातिपाते विगमे भाविकालावच्छेद्यत्वस्य बोधिका तादृशी लृट् यात्वतीतकालावच्छेद्यत्वस्य तादृशी लृङ् तण्डुलश्चेत् प्राप्स्यत्योदनमपि पक्ष्यति चैत्र इत्यादौ स्यतिप्रभृतयस्त्रादेर्भाविकालावच्छेदेन तण्डुलप्राप्त्याद्यभाववत्त्वमनुभावयन्ति तथैव चेदप्राप्स्यत् ओदनमप्यपक्ष्यत् इत्यादावतीतकालावच्छेद्यमिन्धनप्राप्त्यभाववत्त्वं तथाच भाव्यतीतकालाविव क्रियाप्रतियोगिकोऽभावोऽपि तयोरर्थः वस्तुतोभाव्यादिकालावच्छेदेन तण्डुलप्राप्त्यभावप्रयुक्त ओदनपाकाद्यभावएव उक्तस्थले लृङादिना चैत्रादावनुभाव्यः क्रियाविरहप्रयुक्तस्य क्रियान्तरविरहस्यैव क्रियातिपातत्वात् अतएव चैत्र श्चेदपतिष्यत् ग्राममप्यगमिष्यदित्यादिको न प्रयोगः तीर्थश्चेद-

गमिष्यत् सार्थमप्यलास्यतइत्यादिकस्तु चिन्त्यः सार्थलाभाद्यभावस्य तीर्थगत्याद्यभावाप्रयुक्तत्वात् इति तण्डुलश्चेत् पचेदोदनमपि भुञ्जीतेत्यादौ तु क्रियातिपतनस्य वर्त्तमानत्वमेव लिङा प्रत्याय्यते न तु भावित्वमतीतत्वं वेति तदुदासः।

क्रमप्राप्तं धात्वंशप्रत्ययं लक्षयति।

सुबर्थानन्वितस्वार्थतिङन्यप्रत्ययस्तु यः।
स धात्वंशोऽथवा धातोरन्तांशप्रत्ययस्तथा।

सुबर्थानन्वितयादृशस्वार्थको यस्तिङन्यः प्रत्ययः स तादृशार्थे धात्वंशप्रत्ययः पुत्रीयतीत्यादौ क्यजाद्यर्थस्य इच्छादे र्न सुबर्थेऽन्वयः किन्तु तिङर्थे पचतीत्यादौ सुबर्थानन्वितकृत्यर्थकोऽपि तिबादिर्न तिङन्यः पिपक्षया कुरुतेत्यादौ तु भावकृल्लभ्यस्य इच्छास्वरूपस्यैव सुबर्थकरणत्वादावन्वयः न तु सनन्तार्थपाकेच्छामात्रस्य अस्तु वा सान्वयसंज्ञानुरोधेन धात्वन्तावयवरूपएव प्रत्ययो धात्वंशप्रत्ययः पिपक्षादिधात्वन्तभागत्वात् सनादिप्रत्ययस्य।

विभजते।

नामप्रकृतिकश्चायं धातुप्रकृतिकस्तथा।
तत्रादिमः क्यच्क्यङादिरपरः सन्यङादिकः।

अयं धात्वंशप्रत्ययो नामप्रकृतिको धातुप्रकृतिकश्चेति द्विविधः। तत्रादिमोनामप्रकृतिकः क्यच्क्यङादिः अपरोधातुप्रकृतिकः सन्यङादिः चैत्रः पुत्रीयति इत्यत्र क्यजर्थेच्छायां तत्प्रकृत्यर्थतावच्छेदकीभूतपुत्रत्वाद्यवच्छिन्नविषयतया प्रकृत्यर्थस्य पुत्रादेस्तस्याश्च तिङर्थआश्रयत्वे निरूपकत्वेनान्वये साकाङ्क्षत्वात् पुत्रत्वेन पुत्रगोचरेच्छायाआश्रयत्ववांश्चैत्रइत्येवमन्वयधीः अतएव मनुष्यत्वादिप्रकारेण पुत्रेच्छादशायां पुत्रीयतीत्यादिको न प्रयोगः किन्तु मानुषीयतीत्यादिरेव। अतएवात्मनः पुत्रीयतीत्यादेरात्मपुत्रत्वप्रका-

रकेच्छाबोधनएवासामर्थ्यम्। आत्मपुत्रत्वादेस्तत्र प्रकृत्यर्थतानवच्छेदकत्वात् आत्मसम्बन्धी यः पुत्रः पुत्रत्वेन तद्गोचरेच्छाया बोधने तु तस्य सामर्थ्यमेव चैत्रस्य गुरुकुलमित्यादाविव हृत्तिशब्दैकदेशेऽपि पुत्रादावात्मप्रभृतेः प्रतियोगिविधयान्वयस्य व्युत्पन्नत्वात्। आत्मपुत्रीयतीत्यादौ पुनरात्मपुत्रत्वादेरपि प्रकृत्यर्थतावच्छेदकत्वात् तदवच्छिन्नपुत्रविषयताकेच्छाबोधने न किमपि बाधकं पश्यामः। एतेन पुत्रकाम्यतीदंकाम्यतीत्यादौ काम्यस्याप्यर्थो व्याख्यातः। पुत्रीयति माणवकमित्यादौ तु आचारसदृशाचारः क्यजर्थस्तद्विशेषणीभूते आचारे प्रकृत्यर्थस्य विशेष्यीभूते च माणवकादेः कर्म्मत्वेनान्वयः तेन पुत्रकर्म्मकाचरणसदृशं यन्माणवककर्म्मकाचरणं तदनुकूलकृतिमानित्याकारकस्तत्र बोधः। पुत्रकर्म्मकाचरणञ्चेहान्नपानादिना संवर्द्धनतोषणादि। सर्पीयति शत्रुमित्यादौ सर्पकर्म्मकाचरणतुल्यं यच्छत्रुकर्म्मकाचरणं तदनुकूलकृतिमानित्यर्थः सर्पकर्म्मकाचरणञ्चात्र सर्पकर्म्मकताड़नमारणादि ग्राह्यम्। प्रासादे कुटीयतीत्यस्य कुट्यधिकरणकाचारसदृशोयः प्रासादाधिकरणकाचारस्तदनुकूलकृतिमानित्यर्थः कुट्यधिकरणकाचारश्चेह कुट्यधिकरणकशयनादिरूपोऽवसेयः। कर्म्माधिकरणयोरेव सदृशाचारे क्यचोविधानात् वक्रिकणइवाचरति धूलिर्दण्डेनेवाचरति चक्रेणेत्याद्यर्थे धूलिर्व्वक्रिकणीयति चक्रेण दण्डीयतीत्यादिकः कर्त्तृकरणादेः सदृशाचारे अप्रयोगः। मान्ताव्ययाभ्यां न स्यादित्यनुशिष्टेरिदमिच्छति स्वरिच्छति इत्याद्यर्थे इदमिवाचरतीत्याद्यर्थे च न क्यच्। गव्यति नाव्यतीत्यादावपि गामिच्छति गामिवाचरति इत्यादिरर्थः। ओदौद्भ्यां क्यचः स्वरवद्भावादवावादेशः नमस्तपोवरिवसां कर्त्तृत्वेऽपि क्यचोविधानात् नमस्यति देवानित्यस्य देवनतिं तपस्यति शत्रुमित्यस्य शत्रुसन्तापं वरिवस्यति गुरूनित्यस्य च गुरूणां परिचर्य्यां करोतीत्यर्थः। श्येनायते काकइत्यादौ क्यङोऽपि

आचारसदृशाचारोऽर्थः तत्र च प्रकृत्यर्थस्य श्येनादेः कर्तृत्वेनैव साकाङ्क्षत्वात् श्येनकर्तृकाचारसदृशाचारवान् काक इत्येवं तत्र बोधः । श्येनकर्तृकाचारश्च मांसहरणादिर्ग्राह्यः । श्येनी इवाचरतीत्यर्थे श्येनायते काकीत्यत्र भाषितपुंस्कत्वात् क्यङि पुंवद्भावः गार्ग्यमिच्छतीत्याद्यर्थे गार्गीयतीत्यत्र क्यचीव गार्ग्य इवाचरतीत्याद्यर्थे गार्गीयते इत्यत्र क्यङ्यप्यपत्यप्रत्ययस्य लोपः । तथा वाजीयतीत्यादौ नस्य । ओजायते अप्सरायते पयायते पयस्यते गर्द्दभति अश्वतीत्यादावप्युक्तरीत्यैवान्वयः ओजसप्सरसोर्नित्यं पयसः सोविभाषया । क्यङोऽपि लोपोऽन्यत्र्योगर्द्दभत्यश्वतीत्यत इतिवचनादेषु सादेर्लोपः अत्रौजःपदस्यौजस्विपरत्वमिति निबन्धारः । गव्यते नाव्यते इत्यादेरपि गौरिवाचरतीत्यादिरर्थः पूर्व्ववदवादेशः पूर्व्वमनुन्मना उन्मनोवदाचरति इत्यर्थेऽप्युन्मनायते दुर्म्मनायते अवेहत् वेहदिवाचरतीत्यर्थे वेहायतीत्यादौ तस्य लुक् । गोर्गर्भघातिनी वेहत् । अलोहितो लोहितोभवतीत्यर्थे लोहितायति लोहितायते स्वरितत्वादुभयपदं सुखमनुभवति इत्यर्थे सुखायते एवं दुःखायते अलीकायतेइत्यादि । शब्दं करोतीत्यर्थे शब्दायते एवं वैरायते कलहायते । गिलितस्य पुनश्चर्व्वणं रोमन्थः तं करोतीत्यर्थे रोमन्थायते गौः । मुण्डादेस्तत् करोत्यर्थे गृह्णात्यर्थे कृतादितः । वक्तीत्यर्थे च सत्यादेरङ्गेभ्यस्तन्निरस्यतीति भागुरिस्मृतेः नरं मुण्डयतीत्यत्र नरनिष्ठमुण्डनं जलं मिश्रयतीतत्र जलनिष्ठमिश्रणं वासः शिथिलयतीतत्र वासोनिष्ठशैथिल्यम् अन्नं मधुरयति इतत्रान्ननिष्ठमाधुर्य्यं चैत्रं मित्रयतिइत्यत्र चैत्रनिष्ठमित्रत्वं करोतीतत्रादिकोनामप्रकृतिकस्य णेरर्थः । तत्र मुण्डादिपदस्य धर्म्मपरत्वात् मुण्डादिण्यन्तधात्वर्थतावच्छेदकीभूतफलवत्त्वाच्च नरादेः कर्म्मत्वमिति सम्प्रदायविदः । वासः पृथु मृदु भृशं वा करोतीतत्रर्थे वासः प्रथयति म्रदयति भ्रशयति इत्यादावृतो

रेफादेशः। तथा चैत्रं परिग्रहयति इत्यत्रापि। कण्ड्वादिभ्यस्तत् करोतीत्यर्थे यगेव न तु णिः तेन गात्रं कण्डूयति कण्डूयते वा इत्यत्र गात्रस्य कण्डूं करोतीत्यर्थः ञित्त्वादुभयपदम् एवं स्वर्गलोके महीं वसतिस्थानं करोतीत्यर्थे स्वर्गलोके महीयते ङानुबन्धेषु पाठादात्मनेपदं शब्दादिभ्यः करोतीत्यर्थे क्यङित्युक्तम्। कृतयति वर्णयतीत्यादौ गृह्णातीत्यादिरर्थः सत्यापयति अर्थापयति वेदापयति इत्यत्र च सत्यं वक्तीत्यादिरर्थः सत्यादिचिकादावागमश्च प्रियं स्थिरं वा वक्तीत्यर्थे प्रापयति स्थापयति इत्यादौ प्रियस्थिरादेः प्रस्थाद्यादेशोऽपि अश्वतरं वदतीत्यर्थे अश्वयति इत्यत्र तरप्रत्ययलोपश्च गोमन्त माचष्टे इत्यर्थे गवयति गुणवन्तमाचष्टे इत्यर्थे गुणयति स्रग्विणमाचष्टे इत्यर्थे स्रजयति इत्यादौ तु मन्तुवन्तुविनां लुगपि तथा कर्त्तार माचष्टे इत्यर्थे कारयतीत्यत्र तृचः अन्तिकमाचष्टे इत्यर्थे नेदयति बाढमाचष्टे इत्यर्थे साधयति इत्यत्र चान्तिकबाढयोर्नेदसाधौ च युवानमल्पं वा वदतीत्यर्थे कनयति युवाल्पयोः कनित्यनुशिष्टेः पक्षे यवयति अल्पयति इत्यपि। स्थूलमाचष्टे दूरमाचष्टे इत्याद्यर्थे स्थूल दूरयुवह्रस्वक्षिप्रक्षुद्राणामन्तस्थादिलोपो गुणश्चेत्यनुशिष्टेः क्रमेण स्थवयति दवयति यवयति ह्रसयति क्षेपयति क्षोदयति इत्येव प्रयोगः। बहूनाचष्टे इत्यर्थे भूययति बहोर्भूयादेशः। हस्ताद्यङ्गेभ्यस्तन्निरस्यतीत्यर्थेऽपि णिः तेन हस्तं निरस्यतीत्याद्यर्थे हस्तयते पादयते इत्यादि पूर्ववदात्मनेपदम्। तूस्तादिघाते संछादे वस्त्रात्पुच्छादितस्तथा। उत्क्षेपादौ कर्म्मणोणिस्तत्तदव्ययपूर्व्वत इति भागुरिस्मृतेः तूस्तं विनिहन्तीत्यर्थे वितूस्तयति तूस्तं केशजटा वस्त्रं संच्छादयतीत्यर्थे संवस्त्रयति पुच्छ मुत्क्षिपतीत्यर्थे उत्पुच्छयते गौः एवं परिपुच्छयते भाण्डानि सञ्चिनोतीत्यर्थे संभाण्डयते भिक्षुः चीवरं सम्मार्ज्जयतीत्यर्थे सञ्चीवरयते। कर्म्मण इत्युक्तेस्तूस्तेन विनिहन्तीत्याद्यर्थे न णिः तूस्तयति प्रतूस्तयति

इत्यादितः कथितार्थानामप्रतीतेस्तत्तदव्ययपूर्वकत्वनियमः। वीणात उपगाने स्याद्धस्तितोऽतिक्रमे तथा। सेनातस्त्वभियाने णिः श्लोका-देरप्युपस्तुताविति भागुरिस्मृतेरप्यपि तत्तदव्ययपूर्वत इत्यनुषज्यते। तथाच वीणया उपगायतीत्यर्थे उपवीणयति यशः हस्तिनातिक्रामतीत्यर्थे अतिहस्तयति गृहं सेनयाभिमुखं यातीत्यर्थे अभिसेनयति समरं श्लोकैरुपस्तौतीत्यर्थे उपश्लोकयति शिवमित्यादिकः प्रयोगः। कर्म्म प्रत्ययेतूपवीण्यते यश इत्यादि वीणादेः करणतास्थलएवायं विधिस्तेो वीणायामुपगायतीत्याद्यर्थे न णिः साधुः। अशनधनाभ्यामाय उद-कान्नः कलोपस्य तदिच्छतीत्यर्थे तेन अशनायति धनायति उदन्यतीत्यादावशनमिच्छतीत्यादिरर्थः। अशनायादिकं धात्वन्तरमित्यपि वदन्ति। चैत्रं भावयति आत्मानं गमयति इत्यादौ धातुप्रकृतिकस्य णेरप्यनुकूलव्यापारोव्यापारमात्रं वार्थः तत्र धात्वर्थस्यानुकूलतायाः संसर्गविधयापि भानसम्भवात् तेन तत्र चैत्रोत्पत्त्यनुकूलव्यापारवान् आत्मगत्यनुकूलव्यापारवानित्यादिरर्थः। क्वचिज्ज्ञानानुकूलव्यापारोऽपि णर्थः यथा कथकः कंसं घातयति इत्यादावभिनयादिरूपः। चुरादिभ्यस्तु स्वार्थिकस्य णेः स्वरूपमर्थः तेन चोरयति चिन्तयति इत्यादौ स्तेयादिस्वरूपस्यानुकूलकृतिमानित्यादिरर्थः। गुपूधूपविच्छिपणिपनेरायः कमेस्तु णिङ्। ऋतेरीयङ् चतुर्ष्वेषु नित्यं स्वार्थे परत्र वेति भागुरिः। स्वार्थे स्वरूपार्थे तेन गोपायतीत्यस्य रक्षणस्वरूपं धूपायति इत्यस्य सन्तापस्वरूपं विच्छायतीत्यस्य गतिस्वरूपं पणायते इत्यस्य व्यवहारस्वरूपं स्तुतिस्वरूपं वा करोतीत्यर्थः। आकर्णया-मास न वेदनादान्नचोपलेभे वणिजां पणाया इतिव्यवहारार्थैर्भङ्गिः। पनायते इत्यस्य तु स्तुतिस्वरूपं करोतीत्येवार्थः स्वरूपार्थकत्वात् अ-स्यापि विप्रगोपाया स्वर्गानन्त्यप्रदा भवेदित्यादिकः प्रयोगः अल्पादेः क्रियाविशेषणत्वे क्लीवत्वापत्तेः इत्यस्मात्प्रायं स्वर्गं कामयते इत्यस्य स्वर्ग

गोचरेच्छास्वरूपवानित्यर्थः ङानुबन्धत्वादात्मनेपदम् ऋतीयते इत्यस्य घृणास्वरूपं करोतीत्यर्थः । परन्त वेत्युक्तेस्तुर्लकारादन्यत्र गोप्ता गोपायिता कमिता कामयिता अर्त्तिता ऋतीयिता इत्यादिको द्विविधः प्रयोगः । गुपोऽवधेश्च निन्दायां क्षमायाञ्च तथा तिजः । प्रतीकारार्थकाच्च कितः स्वार्थे सनोविधिरिति भागुरिः तेन जुगुप्सते बीभत्सते इत्यत्र निन्दास्वरूपस्य कर्त्ता इत्यर्थः अतएव जुगुप्सा स्वल्पापि क्षपयति महत्त्वं परिषदीत्यादिकः प्रयोगः तपस्तितिक्षते इत्यस्य तपःकर्म्मकसहनस्वरूपस्य कर्त्तेत्यर्थः चिकित्सत्यातुरमित्यस्यातुरकर्म्मकप्रतीकारस्वरूपं करोतीत्यर्थः रिपुं विचिकित्सतीत्यस्य रिपुकर्म्मकनिग्रहस्वरूपं करोतीत्यर्थः विचिकित्सति मन्मन इत्यादौ च मन्मनः सन्देहस्वरूपवदित्यर्थः । एष्वामर्थान्तरे तिङो नाभिधानमिति भागवृत्तिः तेन संगोपननिशाननिवासाद्यर्थेषु गोपनं तेजनं केतनमित्यादिकमेव प्रत्युदाहरणं मानदानशान्भ्योऽपि स्वार्थे सन् तेन मान् पूजायां विचारे वा इत्यस्य मीमांसते दान खण्डने इत्यस्य दीदांसते शान तेजने इत्यस्य शीशांसते इत्यत्राप्युक्तदिशैवान्वयः । पाकं चिकीर्षति ओदनं बुभुक्षते इत्यादाविच्छैव सनोऽर्थः तस्याञ्च द्वितीयान्तेन लभ्यस्य पाकादिविशेष्यताकत्वस्य स्वरूपसम्बन्धेन धात्वर्थस्य तु कृत्यादेः स्वसाध्यत्वादिप्रकारिनिष्ठस्वसमानकर्त्तृकत्वसम्बन्धेनान्वयात् पाकधर्म्मिका निरुक्तसम्बन्धेन कृतिमती या इच्छा तद्वानित्यादिरर्थः समानकर्त्तृकत्वस्य निवेशात् अन्यदीयकृति पाकादाविच्छावत्ययं चिकीर्षति पिपक्षति इत्यादिको न प्रयोगः इति चिन्तामणिकृतः । सोन्दडस्तु पाकं चिकीर्षतीत्यादौ द्वितीयार्थस्य विषयत्वस्य मूलधात्वर्थएवान्वयः तदर्थस्य तु समानकर्त्तृकत्वविषयत्वाभ्यां सनर्थेच्छायां तथाच पाकविषयताककृतिसमानकर्त्तृकतद्गोचरेच्छावान इत्यादिरेवार्थः कारकविभक्तेः क्रियायामेव स्वार्थबोधकत्वादत-

एव गृहं तिष्ठासतीत्यादिकोन प्रयोगः स्थितेर्गृहकर्म्मकत्वबाधात् अन्यथा गृहधर्म्मिकां स्थितिप्रकारकेच्छां बोधयन्नयमेव प्रमाणं स्यात् ननु गृहे तिष्ठासतीत्यादिरिति प्राह । चिकीर्षादेः प्रवृत्त्यादिरूपेष्ट साधनत्वेन तद्गोचरेच्छासत्त्वेऽपीच्छार्थकसनन्तात् न सन्प्रत्ययः सन न्तान्न सनिष्यते इत्यनुशिष्टेरतस्चिकीर्षिषतीत्यादिको न प्रयोगः । पापच्यते इत्यादैा यङः पैानःपुन्यमर्थः तच्च प्रकृतधात्वर्थजातीय क्रियोत्तरतादृशक्रियानन्तर्य्यरूपं प्रकृत्यर्थे विशेषणत्वेनान्वेति तेन पाकोत्तरपाकानन्तर्य्यवत्पाककर्त्ता इत्येवं तत्र वाक्यार्थः । द्विः पक्तरि पुनः पक्तृत्वेऽपि न निरुक्तं पुनः पुनः पक्तृत्वम् अतोन तत्र पापच्यते इति प्रयोगः पाकोत्तरत्वादिकञ्च तत्समानकर्तृत्वगर्भं बोध्यम् अतः पुमन्तरीयपाकाद्युत्तरत्वमादाय नातिप्रसङ्गः । तण्डुलं पापच्यते इत्यादैा यङन्तधातूपस्थाप्ये सर्व्वत्रैव पाकादैा तण्डुलकर्म्मत्वस्यान्वयोव्युत्पत्तिवैचित्र्यात् नातः क्रमेण मुद्गमाषैा पक्त्वा तण्डुलस्य पक्तरि तथाविधप्रयोगः तुषेण पापच्यते इत्यादैा कारकान्तरमप्येतेन व्याख्यातं जंगम्यते चङ्क्रम्यते इत्यादैा धात्वर्थगतं पैानःपुन्यमिव कैाटिल्यमपि यङोऽर्थः गत्यर्थात् कैाटिल्यएव तद्विधानात् तेन पुनः पुनः कुटिलगतिमान् इत्येवं तत्र बोधः शेषं पूर्व्ववत् । लोलुप्यते चंचूर्य्यते जंजप्यते दंदश्यते जेगिल्यते इत्यादैा निन्दितत्वमपि तेन पुनः पुनर्गर्हितं लुम्पति चरतीत्यादिकस्तत्रार्थः । अत्रोत्सर्गतएव एकाचोहलादेरेव धातोर्यङ्विधानात् पुनः पुनः कथयति जागर्त्ति दरिद्रातीत्याद्यर्थे कथ्यादेर्न यङ्नापि पुनः पुनरेति एजते इत्यादावपि न प्रभृतेः ऋप्रभृतिभ्यश्चेति विशेषविधेस्तु पुनः पुनरियर्त्ति अश्नाति अटतीत्याद्यर्थे अरार्य्यते अशाश्यते आटाट्यते इत्यादिकः प्रयोगः शुभिरुचिभ्यां तु न स्यात् पुनः पुनः शोभते रोचते इत्यर्थे शोशुभ्यते इत्यादेर्निराकाङ्क्षत्वादिति वदन्ति ।

तद्धितं लक्षयति ।

विभक्त्यादित्रिकादन्यः प्रत्ययस्तद्धितं मतम् ।
नामप्रकृतिकोनैवमतिव्याप्त्यादिदोषतः ।

विभक्तिधात्वंशशङ्क्षोऽन्यः प्रत्ययस्तद्धितं वृक्षकइत्यादौ ह्रस्वाद्यर्थकः कादिरपि तद्धितमेव तदन्यत्वेनापि प्रत्ययं विशेषयन्त्यन्ये नामप्रकृतिकप्रत्ययत्वन्तु न तद्धितस्य लक्षणं विभक्तौ क्यजादौ चातिव्याप्तेः पचतितरामित्यादौ तरामाद्यव्याप्तेश्च ।

विभजते ।

तस्यापत्यं तद्विशेषस्तद्दृष्टेण युतेन्दुमान् ।
कालस्तथा तेन रक्तं तस्य वृद्धोऽथ वेत्ति तत् ।
अधीते वा देवतास्य सैवमादीन् यथायथम् ।
बोधयद्विविधानर्थांस्तद्धितं स्यादनेकधा ।

तस्यापत्यस्य विशेषोगार्ग्यायणत्वप्रथमत्वादिः ।

अपत्यार्थं व्याकुरुते ।

अण् नाम्नोऽपत्यसामान्ये षष्ठ्यन्ताद्बाधकं विना ।
अदन्तादिण् निषादादेरन्त्याचोऽक् चेण्यपेक्षितम् ।

षष्ठ्यन्तान्नाम्नः साक्षात्परम्परासाधारणापत्यसामान्ये बोध्ये अण् इत्युत्सर्गः स च मरीचेरपत्यं मारीचः काश्यपिरित्यादौ अपत्यविशेषभाने तु तद्धितभेदोवक्ष्यते मरीचिना अपत्यमित्यर्थे तु न षष्ठ्यन्तं नाम । अणोबाधकमाह अदन्तादिति अदन्तान्नाम्नोबाधकं विना इणेव दक्षस्यापत्यं दाक्षिः अस्यापत्यमिः इत्यादौ तत्रापि निषादादेरिणा अपत्यबोधने तदन्तिमाचोऽगादेशोऽपेक्षितः यथा नैषादकिः वैयासकिः चाण्डालकिरित्यादौ ।

इणोऽपवादमाह ।

शिवादिभ्यस्त्वणेव स्यात् ण्योगर्गादेर्गणात्तथा ।
कुञ्जादेरायनण् ण्यश्च तस्मान्नेष स्त्रियामिति ।

शिववरुणाककुत्स्थ पुत्रप्रभृतिभ्योऽणेव नत्वदन्तादिञ् मुनिषु वशि-ष्ठादिर्वृष्णिषु वसुदेवादिः कुरुषु नकुलादिश्च शिवादौ पाठ्यः तेन वाशिष्ठोवासुदेवः साहदेवः नाकुलइत्यादिरेव तत्र प्रयोगः शतानीक स्तु नाकुलिरित्यादौ क्वचिदपवादविषयेऽप्युत्सर्गविधिः प्रथमापत्यं वा तत्रार्थः। गर्गस्यापत्यमित्यर्थे गर्गादिगणात् यञः यथा गार्ग्यः काठ्यः वात्स्यः पाराशर्य्यः कार्त्तवीर्य्यः जामदग्न्यः इत्यादौ अत्र गणादित्युक्ते र्गर्गोनाम कश्चित् तस्यापत्यमित्यर्थे गार्गिरित्येव एवमग्रेऽपि। कु-ञ्जादेर्गणादपत्यसामान्ये आयनञ् तदुत्तरं ण्यस्त्वस्त्रियां यथा कौञ्जा-यन्यः ब्राध्नायन्यः इत्यादौ स्त्रियान्तु कौञ्जायनीत्येव नतु ततोण्यः सुमङ्गलादित्वात् ङीप्। अत्रास्त्रियामित्यत्र बहुत्वस्याप्युपलक्षकं तेन कौञ्जायनाः पुमांसइत्यत्रापि न ण्यः। गार्गिः कौञ्जिरित्यादौ नापत्यत्वेन बोधः किन्तु प्रथमापत्यत्वेनेति वक्ष्यते।

अदन्ताच्छिल्पिनोण्योवा सेनान्ताल्लक्षणादपि।

नड़ादेर्णायनोनित्यं बाह्वादेस्त्विञ् विधीयते।

ताल्ववाय्यस्ताल्ववायिः कौम्भकार्य्यः कौम्भकारिरित्यादौ शिल्पि-वाचकात् महासैन्योमहासेनिरित्यादौ च सेनान्तात् लाक्षण्योलाक्ष-णिरित्यादौ लक्षणशब्दादिञि प्राप्ते विभाषया ण्यः तथा नड़ादे र्णायनोनित्यं तेन नाड़ायनः चारायणइत्यादा कुञ्जाद्यन्तर्गतोनड़ादिः बाह्वादेस्त्विञ् यथा बाह्वोरपत्यं बाह्वविः सुमित्राप्रभतयस्तु बाह्वादि गणे द्रष्टव्याः।

अणोऽपवादान्तरमाह।

स्त्रीप्रत्ययान्तादत्र्यादेरप्येयण् पारिभाषिकात्।

न नदीमानुषीनाम्न आदावादृद्धिवर्ज्जितात्।

विनतायाः सौपर्ण्याः कमण्डल्वाः युवत्या वाऽपत्यमित्यर्थे वैनतेयः सौपर्णेयः कामण्डलेयः यौवतेयइत्यादौ स्त्रीप्रत्ययान्तादेयणेव नत्वण्

अत्रेरपत्यमित्यर्थे आत्रेयः अत्रिपदमप्रत्ययेदन्तद्विस्वरनाम्नि पारिभाषिकं तेन शौचेयः हारेयः आग्नेयइत्यादिकः प्रयोगः। विध्यादिकं द्विस्वरमपि नाप्रत्ययेदन्तं मरीच्यादिकमप्रत्ययेदन्तमपि न द्विस्वरमतोवैधोमारीचइत्यादौ न प्रसङ्गः स्त्रीप्रत्ययान्तादप्यादावाद्वृद्धिवर्ज्जितात् नदीमानुषीनाम्नोनेयण् यथा यामुनः सैप्रः सारस्वतः इत्यादौ यथा वा सौभद्रः कौशल्यइत्यादौ आदावाद्वृद्धिमतस्तु तादृशनाम्नो यथाप्राप्तमेयणेव यथा जाह्नवेयः द्रौपदेयः कौशल्येयः इत्यादौ।

तथा।

सुभगादेरिनादेशोऽप्यन्तस्येयणि नित्यशः।
कुलटायाविकल्पेन सती यदि भवत्यसौ।

सुभगाप्रभृतेरेयण्यन्तस्वरस्य नित्यमिनादेशोयथा सुभगाया अपत्यमित्यर्थे सौभागिनेयः दौर्भागिनेयः पारस्त्रैणेय इत्यादौ सौहार्दवदिहोभयपदस्य वृद्धिः। सुभगा दुर्भगा चैव परस्त्री बन्धकी तथा। मध्यमा च कनिष्ठा चेत्यादिकः सुभगागणः। कुलटा तु यदि सती तदा तदन्तस्वरस्येयणि विभाषया इनादेशो यथा कौलटिनेयः कौलटेयइत्यादौ यदि त्वसती तदा कौलटेयइत्येव प्रयोगः।

तथा।

शीलेनाङ्गेन वा हीनात् स्त्रियामादादितस्तु वा।
एरण् स्याच्चटकायास्तु नित्यमेरण् स्त्रियान्तु लुक्।

शीलेन हीनानां दास्यादीनाम् अङ्गेन हीनानां काणादीनाञ्च स्त्रीप्रत्ययान्तानामेरण् वा स्यात् यथा दास्याअपत्यं दासेयः दासेरः यथावा काणाया अपत्यं काणेयः काणेरः कुलटाप्यङ्गहीना चेत् कौलटेरइति चटकायास्त्वपत्यमित्यर्थे नित्यमेरण् नत्वेयणपि यथा चाटकेरः चटकास्त्र्यपत्ये तु तस्य लुक् तेन चटकेत्येव तत्र प्रयोगः।

तथा ।

तिकादेरायनिञ् नित्यं तदादेस्तु विभाषया ।

ईयः स्वसुः स च व्यस्त्रभ्रातुर्य्यः श्वशुराद्भवेत् ।

तिकस्यापत्यमित्यर्थे नित्यमायनिञ् यथा तैकायनिः कौशल्यायनिरित्यादौ कौशल्यायनिवल्लभामिति भट्टिः । स च तदादेः सर्व्वनाम्नोवैकल्पिकः यथा तस्यापत्यमित्याद्यर्थे तादायनिः तादः यादायनिः यादइत्यादौ स्वसुरपत्यमित्यर्थे स्वस्रीयः भ्रातुरपत्यमित्यर्थे भ्रात्रीयः भ्रातृव्यः देष्टरि तु भ्रातृव्यशब्दोरूढ़एव तदुक्तं भ्रातृव्यौ भ्रातृजद्विषाविति श्वशुरस्यापत्यमित्यर्थे यः श्वशुर्य्यः ।

तथा ।

कुलाद्य एयकस्त्रीनः सपूर्व्वात् केवलादपि ।

महाकुलादञीनञ् च दुष्कुलादेयणोविधिः ।

कुलस्यापत्यमित्यर्थे यः एयकञ् च स्यात् यथा कुल्यः कौलेयकः सपूर्व्वात् केवलाच्च कुलादीनः स्यात् यथा आढ्यकुलीनः कुलीन इत्यादौ महाकुलादञ् ईनञ् च स्यात् यथा माहाकुलो माहाकुलीनः दुष्कुलादेयञ् यथा दौष्कुलेयः । केनापि दौष्कुलेयेन कुल्यां माहाकुलीं प्रियाम् । हृतां महाकुलीनस्य तस्य लिप्सामहे वयमिति भट्टिः । कथं महाकुलीनो दुष्कुलीनः सपूर्व्वादीन् महदादेः कुलीनेनान्वयइत्यन्ये ।

देशक्षत्त्रिययोरूढ़ाद्राजापत्येऽप्यणोविधिः ।

नादेः कुरोः कोशलाच्च ण्यस्तथेदन्ततोप्यसौ ।

देशे क्षत्त्रिये च शक्तान्नाम्नो राजन्यपत्यार्थे अणोविधिः यथा पञ्चालानां राजापत्यं वा इत्यर्थे पाञ्चालः एवं वैदेहः एवं ऐक्ष्वाकः । क्वचिदणादावप्युवर्णस्य लोपः नकारादेरुक्तरूढात् कुरुतः कोशलाच्च तादृशार्थे ण्यएव यथा नैषध्यः कौरव्यः कौशल्यः इत्यादौ । कथं

हिरण्मयं हंसमबोधि नैषधः परिरेभिरे कुरुकौरवस्त्रिय इति यदि तस्येदमित्यण्। इदन्तादप्युक्तरूढ़ात् ण्यः यथा कौन्त्यः आवन्त्यः इत्यादौ कथं कौन्तेयः कुन्तीशब्दात् स्त्रीप्रत्ययान्तात् एयण्। स्त्रियान्तु कुन्त्यवन्तिकुरुभ्योण्यस्य लुगेव यथा कुन्तीनां स्वापत्यमित्यर्थे कुन्ती एवमवन्ती कुरुः। काम्बोजादेरपि रूढादपत्ये राजनि च विहितस्याणो लुगेव यथा काम्बोजानामपत्यं राजा वा इत्यर्थे काम्बोजश्चोलः केरल इत्यादौ।

संख्यासंभद्रपूर्व्वाया उरणमातुः स्त्रियाञ्च ङीप्।
गोर्यो ण्यन्तु यमादित्यादितिभ्यः स्याद्दितेरपि।

द्वयोर्म्मात्रोरपत्यमित्यर्थे द्वैमातुरः त्रैमातुरः षाण्मातुरः शक्तिधरः कुमार इत्यमरः साम्मातुरः भाद्रमातुरः स्त्रियान्तु तदन्तात् ङीप् द्वैमातुरीत्यादि गोरपत्यमित्यर्थे य एव गव्यो वत्सः। एवं यमस्यापत्यं याम्यः आदित्यस्यापत्यमादित्यः अदितेरपत्यमित्यर्थे आदित्यः दितेरपत्यं दैत्य इत्यादौ ण्य एव कथमादितेयः दैतेयः अदितिदितिभ्यां स्त्रीप्रत्ययान्तत्वादेयण्।

अपत्यम्।

नापत्यप्रत्ययान्तात् स्यादपत्यप्रत्ययः पुनः।
गुर्व्वायत्ते त्वपत्ये स्यात् पुनर्यूनीति तद्विधेः।

उपगोरपत्यस्यापत्यमित्यर्थे औपगवादिपदेभ्यो नापत्यप्रत्ययः अत एव एको गोत्रे इति पाणिनिरप्याह एकः केवलोऽपत्यप्रत्ययं विना अतएव शब्दो गोत्रेऽपत्यसामान्ये विहितप्रत्ययस्य साकाङ्क्ष इति तदर्थः पुनर्यूनीतिविध्यन्तरसत्त्वादेव औपगवस्य गुर्व्वायत्तापत्यमित्यर्थे औपगविः गार्ग्यायण इत्यादौ पुनरपत्यप्रत्ययः गुर्व्वायत्तं यत् प्रशस्तं तदपत्यं युवोच्यते इति वृद्धाः।

ण्यान्तेञन्तादायनण् स्यात् कौञ्जायन्यादिवर्ज्जितात् ।
गुर्व्वायत्ते केवलाच्च द्रोणादेष विभाषया ।

ण्यान्तादिञन्ताच्च गुर्व्वायत्तापत्यस्य बोधने आयनण् स्यात् यथा गार्ग्यस्य गुर्व्वायत्तापत्यमित्यर्थे गार्ग्यायणः वात्स्यायनः दाक्षायण इत्यादौ । ण्यान्तादपि कुञ्जादिगणान्नासौ तेन तत्र कौञ्जायन्योऽयमित्यादिरेव प्रयोगः । केवलादपत्यप्रत्ययशून्यादपि द्रोणादायनण् यथा द्रोणस्य प्रशस्तापत्यं द्रौणायनोऽश्वत्थामा विभाषयेत्युक्तेः पक्षे द्रौणिरित्येव ।

गर्गादेरपि कुञ्जादेः प्रथमापत्यबोधने ।
इञेव स्यान्न तु ण्यः स्यान्नायनण् स्यादिति स्थितिः ।

गर्गस्य प्रथमापत्यमित्यर्थे गार्गिर्व्वात्सिरित्यादौ न ण्यः किन्त्विञेव तथा कुञ्जस्य प्रथमापत्यमित्यर्थे कौञ्जिर्मौञ्जिरित्यादावपि नायनण् ।

अपत्यविशेषः ।

तद्युक्तेऽणेन्दुमत्काले तन्नक्षत्रादणोविधिः ।
नक्षत्रद्वन्द्वतश्छीयः कथितार्थे विधीयते ।

पुष्येण सहेन्दुमदित्यर्थे पौषं दिनं पौषी रात्रिः एवमाश्विनं श्रावणं कार्त्तिकमित्यादौ । तद्युक्तेऽणेन्दुमत्काल इत्येव नातः पुष्येण सहेन्दुमत् पुरमित्यर्थे पौषं पुरमित्यादिकप्रयोगः । नक्षत्रद्वन्द्वात् कथितार्थे अणोबाधक ईय एव यथा पुष्यपुनर्व्वसुभ्यां सहेन्दुमद्दिनं पुष्यपुनर्व्वसवीयम् एवमश्विनीभरणीया रात्रिरित्यादिप्रयोगः ।

नक्षत्रेण युतेन्दुमत् ।

तद्रागयुक्तमित्यर्थे तस्मादण् स्यादिकण् पुनः ।
लाक्षातोरोचनातश्च शकलात्कर्द्दमात्स वा ।

हरिद्राया रागयुक्तमित्यर्थेऽण् यथा हारिद्रं वासः एवं कौसुम्भं लाक्षया रक्तमित्यर्थे नित्यमिकण् यथा लाक्षिकं रोचनिकं शकल

कर्द्दमाभ्यां तेन रक्तमित्यर्थे विभाषयेकण् यथा शाकलिकः शाकलः कार्द्दमिकः कार्द्दमः इत्यादै।

तथा।

नीलादः कस्तथा पीतात् चिलिङ्गादपि नित्यशः।
स्वभावरक्ते गौण्या तु वृत्त्या तद्धितमुच्यते।

नीलेन नील्या वा रक्तमित्यर्थे नित्यमप्रत्ययोयथा नीलः पट इत्यादै पीतेन पीतया वा रक्तमित्यर्थे तु नित्यं कप्रत्ययो यथा पीतकः पटइत्यादै हारिद्रः कुक्कुटपादः लाक्षिकमधरं पीतकं स्वर्णमित्यादै स्वभावसिद्धपीतादै गौणवृत्त्या हरिद्राद्यैरक्तसदृशे तद्धितं प्रयुज्यते। तेन रक्तम्।

तेषां समूहइत्यर्थेऽप्यण् पाशादेस्तु यः स्त्रियाम्।
गर्गादिगोत्रादुक्षादेस्त्वाकस्त्रीयस्तु वाश्वतः।

काकानां समूहः काकम् एवं शुकानां शौकं भिक्षाणां भैक्षं युवतीनां समूहइत्यर्थे यौवतमिति जयादित्यः। तद्धितानपत्यस्वरे पुंवद्भावात् यौवनमिति तु भागवृत्तिः अतएव यमुपास्ते पुण्यभाजं कलाकुशलयौवनम्। सरसं नित्यशस्तस्थि सफलं तस्य यौवनमिति तन्मते प्रयोगः। पाशानां समूहइत्याद्यर्थे तु तेभ्यो यएव तदन्तस्च स्त्रीलिङ्गएव यथा पाश्या धूल्या वात्या वन्या शल्येति खलरथावपि पाशादै पठन्ति यथा खल्या रथ्या इति। तथा गर्गादिगोत्रेभ्यः समूहेऽकण् गार्गकं दाक्षकमित्यादै उक्षणां समूह इत्यर्थेऽप्यसै यथा औक्षकम् औष्ट्रकमित्यादै। उक्षोष्ट्रोरभ्रवत्साजा राजा राजन्यकस्तथा। राजपुत्रो मनुष्यश्च वृक्षउक्षादिकोगणः। अश्वानां समूहे त्वीयो विभाषया यथा अश्वीयमाश्वमिति।

धेनोरनञः कण्नित्यं केदाराद्यस्तिकस्तकण्।
पिशात् क्वचिद्धस्तिभ्यास्तेकण् केशादिकणयणौ।

धेनूनां समूहो धैनुकम् अधेनोस्त्वाधेनवमित्यणेव अस्मादेवानञ इति निषेधात् सामूहिकप्रत्ययेषु तदन्तविधिरेष्टव्यः तेन सुन्दरगर्गाणां समूह इत्यर्थे सौन्दरगार्गकमित्यादि साध्विति शाब्दिकाः। केदाराणां समूह इत्यर्थे यणि कैदार्य्यम् इकणि केदारिकम् अकणि कैदारकम् इति त्रिधा प्रयोगः। पिष्टार्थकात् कवचिनोहस्तिनश्चेकण् यथा पूपानां समूहः पौपिकं शाष्कुलिकं तथा कवचिनां समूहः कावचिकं हस्तिनां हस्तिनीनां वा समूहो हास्तिकम्। केशानां समूहे त्विकण् यण् च कैशिकं कैश्यम्।

इनिः खलोलूकपद्मादरथात् कड्यः स्त्रियामिमौ।
गणिकातोब्राह्मणाच्च मानवाद्वाडवाच्च यण्।

खलादित्रिकादिनिः समूहे यथा खलिनी उलूकिनी पद्मिनी। तथा रथात् कड्यः यथा रथकड्येति इमौ च प्रत्ययौ स्त्रियामेव। गणिकादिभ्यस्तु समूहे यण् यथा गाणिक्यं ब्राह्मण्यं मानव्यं वाडव्यमिति।

गजबन्धुजनग्रामसहायेभ्यस्तु तः स्त्रियाम्।
पृष्ठाद्यत् क्लीवलिङ्गं तत् चरणेभ्यस्तु धर्म्मवत्।

गजता बन्धुता जनता सहायता इत्यत्र गजादीनां समूहेऽर्थे तप्रत्ययः स च स्त्रीलिङ्ग एव। पृष्ठात् समूहे यत् यथा पृष्ठ्यं तच्च क्लीवलिङ्गमेव अतएवास्य पाशादिष्वनन्तर्भावः चरणेभ्यस्तु समूहे धर्म्मइव प्रत्ययाः स्युः यथा कठानां धर्म्मः काठकं तथा समूहोऽपि एवं छान्दोग्यमाथर्व्वणमित्यादि।

तत्समूहः।

तद्वेत्ति तदधीते वेत्यर्थेऽप्यण् क्रतुवाचिनः।
सूत्रान्तादप्यकल्पादेरुक्थादेश्चेकणो विधिः।

निमित्तं वेत्तीत्यर्थे नैमित्तः एवमौत्पातः मौहूर्त्तः छन्दो वेत्त्यधीते

वेत्त्यर्थे छान्दसः वैयाकरणः क्रतुवाचिनोऽग्निष्टोमादेष्ठिकण् यथा अग्निष्टोमं वेत्ति अधीते वा आग्निष्टोमिकः अकल्पादेः सूत्रान्तशब्दा दप्युक्तार्थे इकण् यथा वार्त्तिकसूत्रिकः सांख्यसूत्रिकः कल्पादेस्तु सूत्रात् काल्पसूत्रइत्यणेव। उक्थं वेत्त्यधीते वा इत्यर्थेऽप्यौक्थिकः नैयायिकः पातञ्जलिकः लोकायतं बौद्धशास्त्रं तद्वेत्त्यधीते वा लौकायतिकइत्यादि।

विद्यान्तादङ्गधर्म्मक्षित्रानुत्तरवर्त्तिनः।
तथेकण् शतषष्टिभ्यां परस्य तु पथष्टिकः।

वायसविद्यां वेत्त्यधीते वा वायसविद्यिकः सर्पविद्यिकः चौरविद्यिकः। अङ्गाद्यनुत्तरवर्त्तिनः किम् आङ्गविद्यः ज्योतिर्व्विद्यः गान्धर्व्वविद्यः धार्म्मविद्यः क्षात्रविद्यः त्रयवयवा विद्या त्रिविद्या तां वेत्त्यधीते वा त्रैविद्यइति कर्म्मधारयादण्। त्रैविद्या मां सोमपाः पूतपापा इति गीता। तिस्रो विद्या वेत्तीत्याद्यर्थे तु द्विगुतस्तद्धितस्य लुकि त्रिविद्यइत्येवम्। शतपथं षष्टिपथं वेत्तीत्याद्यर्थे टिकः शतपथिकः षष्टिपथिकः स्त्रियान्तु शतपथिकीत्यादि।

क्रमादिभ्यः कएव स्यात् पदात् कः स्यादिकस्तथा।
सर्व्वादेरथ साद्यादेर्वेत्तीत्याद्यर्थकस्य लुक्।

क्रमं वेत्तीत्याद्यर्थे क्रमादिभ्यः कएव यथा क्रमकः सामकः शिक्षकः मीमांसक इत्यादौ। पदात्तु कः स्यादिकोऽपि यथा पदकः पदिकः। सर्व्वादेः साद्यादेश्च शब्दाद्विहितस्य वेत्त्यधीते वेत्यर्थकस्य तद्धितस्य लुगेव यथा सर्व्वं वेदं वेत्तीत्याद्यर्थे विहितस्याणप्रभृतेः सर्व्ववेदः सर्व्वतन्त्रइत्यादौ सार्दिवार्त्तिकइत्यादौ चेति।

अष्टाध्यायादितः कः स्यादध्यायस्य च लुक् तथा।
अध्यायसंख्यार्थककादेस्त्याद्यर्थस्य लुक् परे।

अष्टावध्याया यस्य तदष्टाध्यायमत्र तद्वेत्त्यधीते वेत्यर्थे कः अध्याय

पदस्य च लुक् यथाष्टकाः पाणिनीयाः पञ्चकाः गौतमीयाः दशकाः व्याघ्रपदीयाः द्वादशकाः जैमिनीयाः परे पुनरष्टावध्यायसंख्या यस्य इत्यर्थे कप्रत्ययं कृत्वा तद्वेत्त्याद्यर्थकस्य तद्धितस्य लोपमाहुः ।

तद्वेत्त्यधीते वा ।

तस्येदमिति सम्बन्धिन्यपि तस्मादणो विधिः ।
स्वराजपरदेवेभ्यः कादिरीयो जनादपि ॥

तस्येदमित्येवं तत्सम्बन्धिन्यर्थे तदर्थकादण् इत्युत्सर्गः । यथा वृक्षस्येदं वार्क्षं एवं दार्शदमित्यादि । स्वस्येदमित्याद्यर्थे तु स्वराजादिभ्यः कादिरीयो यथा स्वकीयं राजकीयं परकीयं देवकीयं जनकीयमिति । स्वतः कस्यानित्यत्वं अतएव स्वीयं यदन्यभिन्नं पदमिति मणिदीधितिरिति वदन्ति ।

ईयस्त्यदादेर्भवतस्तत्र तादृक्कस्यपि ।
परावरादितोऽप्यर्द्धात् यदिकस्यपि दिक्परात् ।

त्यस्येदमित्याद्यर्थे त्यदादिगणादीयः यथा त्यदीयं तदीयं मदीयं इदमीयमित्यादि । भवतस्तु त्यदादेरीये परतः तस्य दादेशोऽपि यथा भवदीयं नये स्वरे तद्धितइति पदान्तविधेर्निषेधादस्य विधिः । शत्रन्तस्य तु भवतस्तस्येदमित्यर्थे भावतमित्यणेव । परायुत्तरवर्त्तिनोऽर्द्धादपि न केवलाच्च तस्मात् परार्द्धस्येदमित्यर्थे यदेव । यथा परार्द्ध्यं अवरार्द्ध्यं अर्द्ध्यं आदिपदात् उत्तरार्द्ध्यं अधमार्द्ध्यं दिग्वाचिपूर्व्वकात् पुनरर्द्धात् यदिकस्यपि यथा पूर्व्वार्द्ध्यं पौर्व्वार्द्धिकं दक्षिणार्द्ध्यं दाक्षिणार्द्धिकमित्यादि ।

युष्माकास्माकभावान्ते वाणीनण् युष्मदस्मदोः ।
तवेत्यस्मान्ममेत्यस्मादणीनस्यपि कादिमः ।

युवयोर्युष्माकं वा इदं आवयोरस्माकं वा इदमित्यर्थे युष्मदस्मदोर्युष्माकास्माकभावोत्तरमणीनण च वा स्यात यथा यौष्माकं यौष्माकीणम

आस्माकमास्माकीनम्। आस्माकदन्तिसान्निध्यवामनीभूतभूरुहः।
पक्षे त्यदादित्वादीयो यथा युष्मदीयमस्मदीयमिति। तवेदं ममेदमित्यर्थे तवममेत्यनयोरखीनस्यपि कादिकः स्यात् यथा तावकं तावकीनं स्वरूपनिर्देशान्न त्वदादेशः। अपिना त्यदादित्वादीयोऽपि यथा त्वदीयं मदीयमिति।

कस्तुरण्याद्धस्तिवर्त्म विहाराध्यायमानुषे।
नित्यं वा गोमयेऽन्यत्र णः सदा स्यादिति स्थितिः।

अरण्यस्यायं हस्तीत्याद्यर्थे अरण्यान्नित्यं कण् यथा आरण्यकः करी पन्था विहारो मानुषश्च अध्यायस्त्वरण्यगीतत्वादारण्यकः। गोमये त्वरण्यस्येदमित्यर्थे आरण्यकमारण्यं वा गोमयमिति द्विधा प्रयोगः। कथितेभ्योऽन्यस्मिन्नर्थे ऽरण्यान्नित्यं णप्रत्यय एव यथा अरण्यस्येयमित्यर्थे आरण्या लता आरण्यः पशुरित्यादि।

तस्येदम्।

अण् तत्र भवइत्यर्थे पदादुत्सर्गतो भवेत्।
ग्रीवातः एयण् वा तत्र ग्रैवं ग्रैवेयमित्यपि।

भवइत्यस्य उत्पत्तिवर्त्तमानत्वे ह्यर्थौ यथायथम्।

आदेर्म्मध्यात्तथाद्यर्थे मोऽधसः सस्य लुक् तथा।
डिमोऽग्रपश्चादन्तेभ्यः कालार्थात्तु पदादिकण्।

आदौ भवः आदिमः भवो वर्त्तमानइति वर्द्धमानवृत्तिः। मणिर्व्विराजते सन्वि तवायं हारमध्यमः। अधोभवइत्यर्थेऽधसः सलोपादधमः। यदङ्गमधमं तस्य स्पर्शनं दुरितावहमिति स्मृतेः। अग्रे भव इत्यर्थे डिमः अग्रिमः एवं पश्चिमः अन्तिमः कालार्थकान्मासादिशब्दात्तु तत्र भवइत्यर्थे इकण् यथा मासिकं सांवत्सरिकं मौहूर्त्तिकं पौर्व्वाह्णिकं आपराह्णिकमित्यादि।

शरदः श्राद्धएवायं वा तु रोगे तथातपे।

निशातश्च प्रदोषाच्च वायं तादिस्तथा श्वसः ।

अयमिकण्प्रत्ययः तथार्थे शरच्छब्दात् श्राद्धएव साकाङ्क्षः यथा शारदिकं श्राद्धम् । अन्यत्र शारदश्चन्द्रमाः । रोगातपयोस्त्वर्थयोरयं वैकल्पिकः यथा शारदः शारदिकोज्वरः आतपश्च । निशायां प्रदोषे वा भवइत्यर्थे नैशिकं नैशं वा प्रादोषिकं प्रादोषं वा तम इत्यादि । श्वसः श्वःपदात्तु तादिरयमिकण्प्रत्ययस्तथा विकल्पेनेत्यर्थः तेन श्वोभवमित्यर्थे शौवस्तिकं धनम् । शौवस्तिकत्वं विभवा न येषां व्रजन्ति तेषां दयसे न कस्मादिति भट्टिः । पक्षे श्वस्त्यं श्वस्तनमिति त्यतनौ वक्ष्येते ।

सन्ध्यादेर्ऋतुनक्षत्रभेदाच्चाण् फले पुनः ।

संवत्सरात् पर्व्वणि च प्रावृषस्त्वेण्यमीरितम् ।

सन्ध्यादिगणात्तत्र भवमित्यर्थे अणेव यथा सान्ध्यं सन्धिवेलं आमावस्यं त्रयोदशं चातुर्दशं पाञ्चदशं पौर्णमासं प्रातिपदं वा तमः इति अत्र ऋतुभेदोग्रीष्मादिः तस्मात्तत्र भवमित्यर्थे ग्रैष्मं शैशिरं तदन्तविधिना पूर्व्वग्रैष्मम् अवयवादृतूनामित्युत्तरस्य वृद्धिः । नक्षत्रभेदात्तु पुष्ये भवं पौषं औषधं तैषं रौहिणमित्यादि । संवत्सरात्तु फले पर्व्वणि च भवार्थेऽणेव यथा सांवत्सरं फलं पर्व्व वा अन्यत्र तु कालार्थत्वादिकण् यथा सांवत्सरिकं कर्म्म प्रावृषि भवइत्यर्थे एण्यः यथा प्रावृषेण्यं तृणम् । प्रावृषेण्यं पयोवाहमिति रघुकाव्यम् ।

वर्षातः स्यादिकण् हेमन्तादणप्यत्र वा तलुक् ।

सायं चिरं प्रगे प्राह्णे कालार्थाव्ययतस्तनट् ।

वर्षासु भवं वार्षिकं तृणम् । हेमन्ताद्भवार्थे यथेकण् तथा अणपि परन्त्वणि तकारस्य वा लुक् तेन हैमन्तिकं हैमनं हैमन्तमिति त्रिविधप्रयोगः । तदन्तविधिना पूर्व्वहैमनमित्यादिरपि प्रयोगः । सायमादिभ्यस्तु सायन्तनं चिरन्तनं प्रगेतनं प्राह्णेतनं

पूर्व्वादव्ययीभावाद्वर्णे इकण् यथा आन्तर्देशिकम् आन्तर्गणिकम्। अव्ययीभावादित्येव तेनान्तःकरणे भवमान्तःकरणं दुःखमित्यसेव समानात्तत्पराच्च यथा समाने भवं सामानिकम्। सामानिकोऽयं युवयोः प्रयासः। समानदेशिकम्।

काद्यन्तवर्गादीयः स्याज्जिह्वामूलाङ्गुलादपि।
मित्राद्युत्तरतो वर्गात् यदीनावीय एव च।

कवर्गे भवः कवर्गीयो वर्णः इतीयः। एवञ्चवर्गीयः टवर्गीयः इत्यादि। जिह्वामूलादङ्गुलाच्च जिह्वामूलीयः अङ्गुलीयः। मित्राद्युत्तरवर्गात् तु प्रत्ययत्रिकं यथा मित्रवर्गे भवइत्यर्थे मित्रवर्ग्यः मित्रवर्गीणः मित्रवर्गीयः इत्यादि।

स्त्रीपुंभ्यां नञ्स्नञौ तत्र भवे भावे तु वा तयोः।
स्वरादौ तद्धिते प्राप्ते गोर्यदेव विधीयते।

स्त्रियां भवः स्त्रैणः। स्त्रैणेन नीता विकृतिं लघिम्ना इति भट्टिः। पुंसि भवः पौंस्नः। स्त्रियाः पुंसश्च भावेऽर्थे तु नञ् स्नञौ विकल्पेन स्याताम्। तेन स्त्रियाभावः स्त्रैणं स्त्रीत्वञ्च पुंसाभावः पौंस्नं पुंस्त्वञ्च। गोपदात्तु यत्रदर्थे स्वरादितद्धितं प्रसक्तं तत्तदर्थे तदेव साकाङ्क्षं तेन गोरपत्यं गौर्देवता यस्य गवा चरति गोः समूह इत्याद्यर्थे गव्यमित्येव प्रयोगः। गोत्वं गोवदित्यादौ तु त्वादिको न स्वरादिः।

तत्रभवः।

ये भवार्थे यतः प्रोक्तास्तद्धितप्रत्ययाः पुरा।
जातेऽर्थेऽपि ततस्ते स्युर्विशेषविधिना विना।

मथुरायां भवः इत्यर्थे इव मथुरायां जातइत्यर्थेऽप्यणोऽतिदेशः। एवं स्त्रैणः पौंस्नः ग्राम्यः ग्रामीणः इत्यादौ नञादेरपि प्राप्तेष एणप्रभाविकः प्रदोषादेरिकणादिप्राप्तौ च कादिर्विशेषविधिर्वक्ष्यते।

प्रावृषस्तत्र जातेऽर्थे स्यादिकः शरदस्त्विकण् ।
संज्ञायां विहितः पूर्व्वाह्णापराह्णादितस्तु कः ।

प्रावृषि जातमित्यर्थे प्रावृषिकं पत्रं प्रावृषिका वृष्टिः । शरदि जातमित्यर्थे तु संज्ञायामिकण् यथा शारदिकाः मुद्गप्रभेदाः शारद मन्नम् । पूर्व्वाह्णे जातमित्यर्थे तु पूर्व्वाह्णादिभ्यः को यथा पूर्व्वाह्णकं अपराह्णकं मध्याह्नकमित्यादि । एवमार्द्रायां मूलायां जातमित्यर्थे आर्द्रकं मूलकं के समासस्येति ह्रस्वः ।

अणकः स्यादमावास्याशब्दात्तद्विकृतादपि ।
स्थानान्तादथ गोशालखरशालाच्च नित्यशः ।
जातार्थकस्य लुग्वा तु वत्सशालादितो भवेत् ।

अमावास्यायां जातइत्यर्थेऽण् अकश्च स्यात् यथा आमावास्यः अमावास्यको बालकः । तद्विकृतादमावास्याशब्दादपि यथाच आमावास्यः अमावास्यकः । स्थानान्ताद्विहितस्य जातार्थकतद्धितस्य नित्यं लुक् स्यात् यथा गोस्थाने जातमित्यर्थे गोस्थानं पत्रम् एवमश्वस्थानं शशस्थानमित्यादौ गोशालायां जातमित्यर्थे गोशालं खरशालं इत्यप्येवम् । नित्यममीषां क्लीवत्वं एभ्योजातार्थस्य नित्यं लुग्विधानात् अश्विन्यादितो जातार्थकस्य वा लुगिति प्रतीयते । अतएव मघातोऽणो न लुग्भवेत् इत्यग्रे निषेधः सङ्गच्छते इति निबन्धकारः । वत्सशालादितस्तु जातार्थस्य वा लुक् यथा वत्सशालायां जातइत्यर्थे वत्सशालो वात्सशालश्च वृत्सः । एवमभिजित् आभिजितो वा बालकः । वत्सशालाभिजिच्चाश्वा रेवती रोहिणी तथा । अश्वयुङ् मृगशीर्षश्च वत्सशालादिकोगणः । मृगशिरसि भवं जातं वा इत्यर्थे तु न तद्धितमनभिधानात् ।

अनुराधा तिष्यपुष्यौ हस्तस्वाती पुनर्व्वसू ।
विशाखा बहुलेतेभ्यो नित्यं जातार्थकस्य लुक् ।

अनुराधायां जातोऽनुराधः स्त्रीप्रत्ययस्य लुक् तद्धितलुकीति सूत्रात् एवं तिष्यः पुष्यः हस्तः स्वातिः पुनर्वसुः विशाखो बहुलः मघा वाऽऽश्लेषश्रवणाभिजिदिति बहुला कृत्तिका तत्र जातइति तात्पर्य्यमेयम् ।

श्रविष्ठाषाढयोरेयम् छण् वा शतभिषक् पदात् ।

इति महामहोपाध्यायश्रीजगदीशतर्कालङ्कारभट्टाचार्य्यविरचिता
शब्दशक्तिप्रकाशिका समाप्ता ।

---

अशुद्धिशोधनम्

२५ पृष्ठे ११ पंक्तौ "वाक्यार्थं इत्येव,, इत्यत्र "वाक्यार्थ विषया भासते इत्येव,, इति पठनीयम् ।